क्षमापरिवृढो दृढवर्मा दृढप्रतिज्ञ आस्थानादुत्थाय देव्यै वृत्तान्तमचीकथत्। देव्यपि हृष्टमानसा समजनिष्ट। राज्ञा समग्रे ऽपि नगरे वर्धापनमहोत्सवश्चक्रे। इतश्च घर्मांशुरपि करनिकरप्रसरेण तमःसमूहं निराकृत्यास्तसमस्तकिरणदण्डो ऽस्ताचलचूलावलम्बी बभूव।

सति प्रभापतावत्र न प्रभा तनयस्य मे। इति ध्यात्वास्तदम्भेन रविर्ग्रस्तः सरस्वता ॥ २८
विना जीवितनाथं तं किमन्यैरवलोकितैः। इतीव नलिनी जज्ञे निद्राणनलिनेक्षणा ॥ २९
तदन्धकारं समभूद्वैरवादपि भैरवम्। यत्र वर्णश्रियां लोपो ज्ञायते स्वः परश्च न ॥ ३०

ततः शय्यागृहान्तर्धौतधवलपटप्रच्छादिते मन्दाकिनीपुलिनतलिने तलिनोदरी प्रियङ्गुश्यामा समाराधितदेवगुरुचरणकमला प्रमीलामीलितचारुलोचना पाश्चात्ययामिनीयामे स्वप्ने ज्योत्स्नाप्रवाहसंभृतदिक्चक्रममन्दकुमुदानन्दप्रदं कलङ्कविकलं बहलपरिमलाकर्षितालिकुलकलितया कुवलयमालया परिवृतं कलाभृतमद्राक्षीत्। तावत्प्राभातिकप्रहतमङ्गलमृदङ्गसंगतसंरावेण प्रबुद्धा। ततः स्वभावानुसदृशस्वप्नदर्शनरसवशप्रहर्षसमुच्छलद्रोमाञ्चकवचितया देव्या विनयावनतोत्तमाङ्गया यथादृष्टः स्पष्टः स्वप्नः क्षितिभर्तुः पुरो न्यवेदि। राजा तद्वाक्यमाकर्ण्य विस्मयस्मेरमनाः सुधासागरान्तस्थमिवात्मानं मन्यमानः प्रोवाच। 'प्रिये, यो राज्यलक्ष्म्या पुत्रवरः प्रदत्तः स सांप्रतं फलिष्यति।' ततो देवी 'देवतानामनुग्रहेण राज्यश्रियो वरप्रभावेन गुणगुरूणां गुरूणामाशीर्वादेन च वाञ्छितं भवतु' इति जल्पन्ती कवीनामप्यगोचरं प्रमोदं प्रतिपेदे।

§ १२) अथो महीनेता कृतावश्यकः समस्तसचिवाधीशैरलंकृतां स्वप्नपाठकैरन्वितां राजहंस इव सरसीं सभामलंकृत्य देव्या दृष्टं स्वप्नं निवेद्येति पप्रच्छ 'को ऽमुष्य फलविपाकः'। ततः स्वप्नपाठकैरुक्तम्। 'यथा किल महाराज, महापुरुषजनन्यः शशिसूर्यवृषभहरिगजप्रभृतीन् स्वप्नान् पश्यन्ति। तेन तस्येदृशस्य सकलकलाभृद्दर्शनस्य प्रधानपुरुषजन्म सूच्यते।' राज्ञा भणितम्। 'देव्याः पुत्रजन्मफलं राज्यश्रिया वरेणैव निवेदितम्। यः पुनः शशी कुवलयमालया कलितस्तद्वयं पृच्छामः।' ततो गदितं स्वप्नकोविदैः। 'देव, नूनमेषा तव दुहिता भविष्यति' इति। अथ देवगुरुणा मन्त्रिणा भणितम्। 'देव, युज्यत एतत्। यदि कुवलयमालैव चन्द्रतो विभिन्ना भवति ततः संभाव्यत एतत्। एषा पुनस्तमेव मृगाङ्कमवगृह्य स्थिता। तेनैषा काप्येतस्य राजपुत्रस्य पूर्वजन्मस्नेहप्रतिबद्धा कुवलयमालेव सर्वजनमनोहरा प्रियतमा भाविनी' इति। भणितं भूपेन 'संगतमेतत्'। ततः किंचित्कालं विद्वद्गोष्ठ्यामुपविश्य विशांपतिर्दिवसकृत्यकृते कृत्यवेदी समुदतिष्ठत्। अथ देवी तद्दिनमारभ्य लावण्यपुण्यावयवा परिजनस्य बहुमता साधुजनस्यानुकूला सर्वप्राणिगणे सानुकम्पा संपूरितदोहदसौहृदा सामोदा गर्भं द्यौरिवोद्वहन्ती विरराज।

§ १३) अथ कियति काले व्यतीते तिथिकरणनक्षत्रसुन्दरे वासरे शुभे लग्ने होरायामूर्ध्वमुख्यामुच्चस्थानस्थिते ग्रहचक्रे वृद्धाङ्गनाभिरनेकाभिः सततं रक्षाभिरुपचर्यमाणा, ताम्रपर्णीव मौक्तिकम्, रोहणभूरिव रत्नम्, वैडूर्यभूमिरिव वैडूर्यम्, प्राचीव चित्रभानुम्, मलयाचलाचलेव चन्दनपादपम्, वारिधिवेलेव विधुम्, राजहंसीव विशदच्छदम्, प्रभापहतप्रदीपप्रभम्, विकस्वरवदनकमलम्, कुवलयदललोचनयुगलम्, सा पवित्रं पुत्रमसूत।

ततो देव्यनुजीविन्यो हर्षोत्फुल्लदृशो भृशम्। अहंपूर्विकया श्रीमद्दृढवर्मान्तिकं ययुः ॥ ३१
वर्ध्यसे सुतरत्नस्य जन्मना देव संप्रति। इत्युक्त्वा भूपतिस्तासामभूत् प्रमोदमेदुरः ॥ ३२
दृढवर्मा महीपालस्तदा दानमदान्मुदा। तथा ताभ्यो यथा तासां दारिद्र्ये ऽभूद्दरिद्रता ॥ ३३
यथा प्राप्य निधिं को ऽपि भवेद्धर्षप्रकर्षभाक्। तथा तदा तनूजन्मजन्म भूपतिरप्यभूत् ॥ ३४
भूपः प्रवर्तयामास निःसामान्यं महोत्सवम्। महार्हामर्हतामर्हां कारयामास च स्वयम् ॥ ३५
तन्मात्रा युवतीजातिस्तथोत्कर्षमनीयत। यथा दूर्वां नरेशो ऽपि शिरसा तृणमप्यधात् ॥ ३६

1) B also दृढधर्मा. 2) B महोत्सवश्च चक्रे. 4) B प्रभापतावत्र न. 6) B has a marginal note (on भैरवादपि) thus: ईश्वरादपि। ईश्वरपक्षे वर्णा ब्राह्मणादयस्तेषां श्रियस्तासां लोपः। अंधकारपक्षे वर्णा नीलपीतादयः।. 7) P पट्टप्रच्छादिते, P पुलिनवद्तलिने, C adds देवी after प्रियङ्गुश्यामा. 9) B बहुल. 14) P गुणगुरूणां आशी°. 16) C कृतावश्यकः प्रभाते सचिवैः समं सभामुपविश्य स्वप्नपाठकानाहूय तेभ्यः स्वप्नफलं पप्रच्छ कोऽमुष्य. 19) Cg ततोऽनेन स्वप्नेन प्रधान for तेन etc. 21) C B देवगुरुमन्त्रिणा. 22) P कुवलयमाला चैव चंद्रतो, B adds on the margin कदाचित् between कुवलयमाला and चन्द्रतो. 23) P मृगांगकमवगदा स्थिता. 25) B has a marginal gloss कार्यस्थानं on कृत्यवेदी. 26) P संपूरितदेहसोहृदा, B has a gloss मेचं गर्भं on गर्भं. 34) Cg वर्ध्यते, B इत्युक्त्वा नृपति. 35) P B C दृढधर्मा or दृढधर्म्मा, but the spelling दृढवर्मा is uniformly adopted here. 36) P भवेद्धर्षः प्रकर्षभाक्.

1 पण्डितान् पूजयामास बालकांश्च नराधिपः । पाठकोलाहलोत्तालान् वहतः सूतिमातृकाः ॥ ३७
प्रीणयन्नर्थिनां सार्थमर्थैर्भुजबलार्जितैः । सूनोर्जन्मोत्सवं चारु चकार पुरि भूपतिः ॥ ३८

3 § १४ ) ततो राजा समाकार्य वर्यं मौहूर्तिकं संमान्य पप्रच्छ । 'हंहो सांवत्सरिक, कथय कुमारस्य जन्मनक्षत्रग्रहाणां फलम् ।' दैवज्ञेन निवेदितम् । 'देव शृणु । आनन्दः संवत्सरः । ऋतुः शरत्समयः । मासः कार्तिकः । तिथिर्विजया । वारो बुधः । नक्षत्रं हस्तः । राशिः कन्या । योगः सुकर्मा ।
6 सौम्यग्रहनिरीक्षितं लग्नम् । संपूर्णबलाः सर्वे ऽपि ग्रहाः सौम्याः, एकादशस्थानस्थिताः पापग्रहाः । अपि च ।

वीक्षिते ऽत्र ग्रहैः सौम्यैर्मुहूर्ते स्फूर्तिशालिनि । चक्री वा चक्रितुल्यश्च सुतो जातो भवेदसौ ॥' ३९

9 नृपेणोक्तम् । 'गणक, कति राशयः, के वा राशिगुणाः ।' निवेदितं निमित्तविदा । 'देव, अवधारय । तद्यथा,

मेषो वृषाख्यो मिथुनश्च कर्कटः सिंहश्च कन्या च तुला च वृश्चिकः ।
12 धनुः प्रवीणैर्मकरश्च कीर्तितः कुम्भश्च मीनः कथिताश्च राशयः ॥ ४०

सांप्रतमेतेषु राशिषु जातस्य पुरुषस्य महिलाया वा गुणगण आकर्ण्यताम् ।

शूरः कृतज्ञो दीर्घोरुश्चण्डकर्मा पुनर्मृदुः । लोलचक्षुः प्रियः स्त्रीणां मेषजातो भवेन्नरः ॥ ४१
15 सत्यवादी शुचिर्दक्षो भोगी त्यागी मनोरमः । सुमित्रश्चारुगमनो वृषे जातो भवेन्नरः ॥ ४२
चलचक्षुश्च मिष्टान्नो मैथुनासक्तमानसः । कर्णरोगी धनेनाढ्यो जायते मिथुने नरः ॥ ४३
शूरः कृतज्ञो द्रव्याढ्यः कृशाङ्गो गुरुवत्सलः । कोपनो ऽत्यन्तदुःखार्तः कर्के जातो भवेन्नरः ॥ ४४
18 अभिमानी क्षमाशीलो जननीजनकप्रियः । मद्यमांसरतो नित्यं सिंहजातो भवेन्नरः ॥ ४५
वृद्धभावे च धर्मार्थी सर्वलोकमतो धनी । कामिनीहृदयानन्दी कन्याजातो भवेन्नरः ॥ ४६
इर्ष्यालुर्मित्रवात्सल्यपरो दुःखनिकेतनम् । स्फुटवाक्यो विरागी च तुलाजातो भवेन्नरः ॥ ४७
21 क्रूरः शूरः पिङ्गलाक्षो दर्पिष्ठो निष्ठुराशयः । धनी वियोगी पितृभ्यां वृश्चिके स्यान्नरः सदा ॥ ४८
मेधावी सत्यभाषी च सर्वलोकमनोहरः । वर्यभार्यः सुतेजस्वी धनुर्जातो भवेन्नरः ॥ ४९
दर्शनीयः सुधीर्विद्वान् पुत्रवान् दीर्घजीवितः । परदारपरस्त्यागी मकरे जायते नरः ॥ ५०
24 लोलदृष्टिर्गजाश्वाद्यासनो मानी विचक्षणः । पराक्रमी च तन्द्रालुर्जातः कुम्भे भवेत् पुमान् ॥ ५१
शूरः समुद्रगम्भीरः स्पष्टवाक्यस्तु कोपनः । युद्धप्रधानो गर्विष्ठो मीने जातो भवेन्नरः ॥ ५२

राजाप्येतदाकर्ण्य निमित्तविदो रूपकानां सहस्रं प्रदाय समुत्तस्थौ । ततः प्रमुदितमना भूपतिर्द्वादश-
27 दिने समग्रमपि जनं संमान्य वासोभिः स्वप्नदृष्टकुवलयमालावृतचन्द्रदर्शनानुसारेण तनुजस्य द्विधापि कुवलयचन्द्र इत्याख्यां वितीर्णवान्, अपरमभिधेयं श्रीदत्त इति । एवं धात्रीभिः पञ्चभिः परिपाल्यमानः समितिभिर्यतिधर्म इव कलाकलापेन प्रतिपच्चन्द्र इव, पितुर्मनोरथ इव प्रवर्धमानः, सहस्रकर
30 इव दिग्वधूसंगसंगतः, सर्वैरपि करतलात्करतलं संचार्यमाणो ऽतितृषितैरिवाशेषजनलोचनैः पीयमानः सुधामय इव निर्मितः प्रजापतिनाष्टवर्षदेशीयः । समुद्रादप इव कुम्भभूः, दिनकरनिशाकरकरनिकरास्पृष्टे परिजनेनाप्यदृश्यमाने ऽमिलितगुरुजने विद्यागृहे यतिरिव जितेन्द्रियः, भोजनास्वादे ऽप्यकृतादरः,
33 अनुकूलदुकूलयुगलपरिधाने ऽप्यदत्तावधानः, तिरस्कृतसुरासुरगुरुधिया कुशाग्रसब्रह्मचारिण्या मेधया द्वादशवर्षाणि यावत् कलाचार्यपार्श्वाद्ध्यासीकृता इव कलाशालिकलाविमलाः सकला अपि कला हेलया कलयामासिवान् ।

36 § १५ ) अन्यदा च स कुमारः स्फाराकारः परिलसद्विक्रमाधारः कृतमज्जनभोजनोपचारश्चन्दनानुलिप्तः प्रावृतैकक्षौमयुग्मः कण्ठनिक्षिप्तसुमनःस्रक् स्वसदृशप्रसाधनप्रसाधितोपाध्यायपृष्ठलग्नः पितुः पदपद्मयुग्मं नमस्कर्तुमुपागमत् । राजापि तं विलोक्य सकललोचनरोचनाकारं भास्वन्तमिव कमल-
39 खण्डो राकाशशाङ्कमिव रत्नाकरः स्मेरमनाः समभूत् । कुमारेण सविनयं प्रणतः क्षितिपस्तमुत्संगे निवेश्य प्रोचिवान् । 'उपाध्याय, कुमारेण तत्रभवतो भवतः सकलो ऽपि कलाकलापः स्वीचक्रे ।' ततः कलाचार्येणोक्तम् । 'देव, कुमारेण मत्सकाशात्काश्चिदपि कला न गृहीताः । किंतु कुमारो मेधानिधिः

3) C trans. समाकार्य after मौहूर्तिकं, P spells सन्मान्य. 13) P महेलाया, B गुणगणमाकर्ण्यताम्. 14) C दीर्घायुश्च°. 15) B वृषजातो. 17) C भवेत्पुमान्। 18) Cg भवेत्पुमान्। 25) C मीनजातो. 28) C एवं पञ्चभिर्धात्रीभिः. 31) P समुद्रादाप. 36) P च सुकुमारः. 37) P °नानुलिप्तप्रावृतै°. 40) P B add स after निवेश्य, P कलालापः.

1 सकलाभिः कलाभिश्चिरादुत्कण्ठितचेतोभिर्वधूभिरिव वल्लभः प्रावृषि नदीभिरिवादीनाभिर्नदीनः स्वयं 1
स्वीकृतः।' अथ नृपेणोपाध्यायं विधिना संभूष्य प्रोक्तम्। 'वत्स, तवातुच्छदुःसहविरहदहनसमुत्थ-
3 चिन्ताधूमध्यामा यथार्थाभिधाना प्रियङ्गुश्यामा समजनि जननी ते, तत्तां प्रणम।' एवं समादिष्टः 3
पुत्रः 'देवो यथा समादिशति' इति वदन् भूपतेरुत्संगात्समुत्थाय जननीं तदात्वविलोकनामन्दानन्द-
बाष्पभरप्लुतलोचनां समीपीभूय सविनयमाननाम। निःशेषमङ्गलोपचारं कृत्वा सुतं शिरसि चुम्बित्वा
6 स्नेहेन देवगुरूणां सतीनां मातृणां प्रभावेन पितरमनुहरस्व' इति जल्पितवती यावद्देवी तावत्त्वरित- 6
मागत्य प्रणिपत्य च जनयित्रीं प्रतीहारी प्रोवाच। 'देवि, स्वामी स्वयमद्य वाहकेलिं कर्तेत्यतः प्रेष्यतां
कुमारः।' ततो मात्रा स विसर्जितः क्षितिपसमीपमुपाजगाम। वसुधाधवेनोक्तम्। 'भो महासाधनिक,
9 गरुडवाहनं तुरङ्गमुपनय महेन्द्रकुमारस्य। तथा यथार्हमुत्तमाँस्तुरगानपरेषां राजपुत्राणां नियोजय। 9
ममापि पवनावर्तं तुरङ्गमर्पयेति। अपि च।

रत्ननिर्मितपर्याणं सौवर्णमुखयन्त्रणम्। अर्पयोदधिकल्लोलं हयं कुवलयेन्दवे॥' ५३

12 § १६) तावदादेशानन्तरं तेन कुवलयचन्द्रस्य पुरतस्तुरङ्गमः समुपस्थापितः। यश्च कीदृशः। 12
वायुरिव गमनैकदत्तचित्तः, मनोभाव इव क्षणप्राप्तदूरदेशान्तरः, युवतिस्वभाव इव चपलः, विपणिश्रेणि-
रिव मानयुतः, पण्याङ्गनाप्रेमप्रकर्ष इवानवस्थितचरणचतुष्कः। तं विलोक्य नृपेणोक्तम्। 'कुमार,
15 किंचित्तुरङ्गलक्षणविचक्षणोऽप्यसि।' कुमारेण विज्ञप्तम्। 'गुरुचरणकमलाराधनेन किंचित्परिज्ञातमस्ति।' 15
भणितं भूपेन। 'वाजिनां कति जातयः, किं प्रमाणम्, किं लक्षणमपलक्षणं च' इति। कुमारेणाभ्यधायि।
'नाथ, अवधार्यताम्। यदश्वानामष्टादश जातयः, बोल्लाह-सेराह-कियाहादयः। ते वर्णलाञ्छनविशेषेण
18 भण्यन्ते। अश्वस्योत्कृष्टवयसः प्रमाणम्। 18

नराङ्गुलानि द्वात्रिंशन्मुखं भालं त्रयोदश। अष्टाङ्गुलं शिरः कर्णौ षडङ्गुलमितौ मतौ॥ ५४
चतुर्विंशत्यङ्गुलानि हयस्य हृदयं तथा। अशीतिश्च समुच्छ्राये परिधिस्त्रिगुणो भवेत्॥ ५५
21 एतत्प्रमाणसंयुक्ता ये भवन्ति तुरङ्गमाः। राज्यवृद्धिं महीपस्य कुर्वन्त्यन्यस्य वाञ्छितम्॥ ५६ 21
एकः प्रपाणे भाले च द्वौ द्वौ रन्ध्रापरन्ध्रयोः। द्वौ द्वौ वक्षसि शीर्षे च ध्रुवावर्ता हये दश॥ ५७
अत ऊर्ध्वं गुणैर्न्यूनानन्यूनान् वा हयानिह। दुःखातिदुःखदान् प्रोचुरश्वलक्षणदक्षिणाः॥' ५८

24 यावदेतत् कुमारो निवेदयति तावद्भूपेन निगदितम्। 'वत्स, पुनः प्रस्तावान्तरे श्रोष्यामः' इति वदन्ना- 24
रूढः क्षमापरिवृढः पवनावर्तं तुरङ्गे, कुमारोऽप्युदधिकल्लोले, महेन्द्रोऽपि गरुडवाहने, अपरा अपि
राजपुत्रा अपरेषु तुरङ्गेषु। अपि च।

27 गजैस्तुरङ्गैरुत्तुङ्गैरनेकैः पदिकैस्तथा। विस्तीर्णमपि संकीर्णं राजद्वारं तदाभवत्॥ ५९ 27

§ १७) ततो धृतसितातपत्रश्चलच्चारुचामरयुगलोपवीज्यमानश्चतुरङ्गचमूचक्रपरिवृतः क्षितिपतिः
श्रीपथमवतीर्य च वर्यधैर्यगुणशाली कौतुकायातलोकलोचनप्रमोदमादधानः क्षणेन पुरीपरिसरमवाप्य
30 सकलमपि बलं दूरतो विधाय वाहकेलिं कर्तुं प्रवृत्तः। कुमारोऽपि धौरितकादिपञ्चगतिक्रमनिरीक्षणाय 30
स्वमश्वं वाहकेलौ मुमोच। यावज्जयजयारवं जनः करोति तावत्सर्वेषां राजपुत्राणां पश्यतामेव तत्क्षणं
बहलतमालदलश्यामलं गगनतलमुदधिकल्लोलः समुत्पपात। ततस्तस्य वाजिनो जवेन दक्षिणां दिशं
33 प्रति धावतोऽनुधावन्तीव शाखिनः। यदग्रे निकटीभूताः पदार्थास्तेऽप्यनिकटीभूताः। तत एवं 33
ह्रियमाणेन कुमारेण चिन्तितम्। 'अहो, यदि तावत्तुरगस्ततः कथं नभस्तलमुत्पतितः। अथ यदि देवः
कोऽपि ततः कथं तुरङ्गत्वं न मुञ्चति।' एवं चिन्तयता कुमारेण परीक्षाकृते यमजिह्वाकरालया क्षुरिकया
36 निर्दयं ताक्ष्यः कुक्षिप्रदेशे हतः। ततः पतच्छोणितनिवहो वाहः शिथिलसर्वाङ्गसंधिर्मूर्च्छानिमीलिताक्षः 36
क्षितौ पतितमात्रः 'कुमारापहारात् पापी' इति भणित्वा तत्कालमेव जीवितव्येन तत्यजे। ततस्तं गतासुं
निरीक्ष्य कुमारेण चिन्तितम्। 'अहो, विस्मापनीयमेतत्।

39 यद्यश्वस्तत्कथं देवमार्गगामी न चैष चेत्। तुरगस्तदयं किं वा प्रहारेण हतो मृतः॥' ६० 39

§ १८) अथ तपात्ययसमयसजलजलदगर्जिगम्भीरधीरः कस्यापि शब्दः समभूत्। "भो निर्मल-
शशिवंशविभूषण कुवलयचन्द्रकुमार, समाकर्णय मम वचनम्। 'गन्तव्यमस्ति तवाद्यापि गव्यूतिमात्रं
42 दक्षिणदिग्विभागे, द्रष्टव्यं चादृष्टपूर्वमिव किमपि'।" इदं च श्रुत्वा चिन्तितं कुमारेण। 'अहो, कथं 42

3) PB inter. जननी & समजनि, P om. ते. 4) B तदात्वविलोक°. 6) C इति यावदाशीर्वादं दत्ते देवी ताव°. 7) C प्रतिहारी. 13) P मनोभव इव. 15) Cg गुरुप्रसादेन किं°. 19) P लाभ for भालं. 23) P दक्षणः, B दक्षणाः. 28) P °पत्रावरचारु°, B om. चमूचक्र. 30) P धौरितादि. 35) P inter. न & तुरङ्गत्वं. 36) Ckh °ताक्षः 'पापी' इति भणन् क्षितौ पतितमात्रो मृतः। ततस्तं. 40) C गम्भीरः कस्यापि. 41) B वंशभूषण, C गव्यूतमति°.

1 पुनरेतत्, को ऽपि मम गोत्रं नाम च जानाति। अथवा को ऽप्येष दिव्यो मम शुभायतये दक्षिणाशाभिमुखं मां प्रेरयति निष्कारणकरुणापरत्वेन। अतीन्द्रियज्ञानगोचरतया चालङ्घनीयवचनाः किल देवा
3 मुनयश्च भवन्ति।' इति ध्यात्वा दक्षिणाभिमुखं गच्छन् गव्यूतिमतिक्रम्य कुमारो ऽशेषान् दिग्विभागान् यावद्विलोकयति तावदग्रतो ऽनेकपर्वतपादपश्वापदलतागुल्मगहनां महाविन्ध्याटवीं ददर्श। या च पाण्डवसेनेवार्जुनालंकृता, श्रीरिव महागजेन्द्रसनाथा, महापुरीव तुङ्गशालकलिता। चिन्तितं कुमारेण।
6 'अवश्यं वशीकृतेन्द्रियग्रामः को ऽप्यत्र महर्षिर्महात्मा दिव्यज्ञानावलोकिताखिलपदार्थसार्थः परिवसति। यत्तस्य भगवत उपशमवतः प्रभावेन विरुद्धानामपि जन्तूनां परस्परमकृत्रिमं प्रेम संजातम्।' एतच्चेतसि चिन्तयन् कुमारः कुवलयचन्द्रो यावत्किंचिद्भूभागमुपसर्पति तावदनतिदूरे ऽतिस्निग्धबहु-
9 लकिसलयविराजमानं बहुद्विजकृतकोलाहलमसंख्यशाखासंकुलं वटपादपमपश्यत्। तं वीक्ष्य तामेव दिशं प्रति चलितो ऽचलापतिपुत्रः, क्रमेण च स वटवृक्षतलमलंचकार। ततो यावत्तत्र कुमारो ऽस्ति तावत्तस्य तपोनियमशोषिताङ्गस्तेजसा ज्वलन्निव, मूर्तिमानिव धर्मः, उपशमरसराजधानीव, निवास
12 इव चारित्रलक्ष्म्याः, केलिवनमिव सौम्यतायाः, मुनिः को ऽपि महात्मा दिव्यपुरुषमृगेन्द्रयोर्मध्यस्थितश्चक्षुष्पथमायातः। ततस्तेन कुमारेण चिन्तितम्। 'यदिमं साधुं सकलत्रैलोक्यवन्दनीयचरणारविन्दयुगलं प्रणिपत्य स्वस्याश्वापहारं पृच्छामि। केन हेतुनाहमपहृतः, को वैष तुरङ्गः।' इति चिन्तयन्
15 संप्राप्तः पृथुलशिलापट्टस्थितस्य महर्षेः संनिकर्षम्। मुनिना प्रोक्तम्। 'भो शशिवंशविभूषण कुवलयचन्द्रकुमार, स्वागतं तव। वत्स, आगच्छ' इति। अथ तेन स्वनामगोत्रकीर्तनविस्मितमानसेन महता विनयेन प्रणतं मुनिपतेः क्रमकमलयुगलम्। भगवता सकलभवभयहारिणा सिद्धिसुखकारिणा धर्म-
18 लाभाशीर्वादं लम्भितः कुमारः। ततो मुनिसमीपस्थदिव्यपुरुषेण प्रसारितः ससंभ्रमं सुरपादपकिसलयकोमलो माणिक्यकटकाभरणभूषितो वामेतरः करः। ततो नृपतनुजेन करद्वयेन तस्य पाणितलं गृहीत्वेषद्विनतोत्तमाङ्गेन कृता प्रणतिः। मृगेन्द्रेण च बहलशिथिलकेसरधारिणा उद्वेल्लद्दीर्घतरलाङ्ग-
21 लेन प्रशान्तश्रवणद्वयेन स्तोकमुकुलिताक्षेणानुमानितो राजतनयः। कुमारेण हर्षवशविकसन्मुदितान्तरस्नेहया स्निग्धधवलया दृशा हरिर्ददृशे। उपविष्टश्च नातिदूरे मुनिपस्य। भगवता निगदितम्। 'कुमार, त्वयेति चिन्तितम्।

24 पृच्छाम्यहं साधुममुं कुतो मे केनापहारः क इवात्र हेतुः।
को वायमश्वस्तदिदं निवेद्यमानं मया विस्तरतः शृणु त्वम्॥' ६१

इति श्रीपरमानन्दसूरिशिष्यश्रीरत्नप्रभसूरिविरचिते कुवलयमालाकथासंक्षेपे श्रीप्रद्युम्नसूरिशोधिते
27 कुवलयचन्द्रोत्पत्तितुरगापहारसाधुदर्शनकीर्तनो नाम प्रथमः प्रस्तावः॥ १॥

## [ अथ द्वितीयः प्रस्तावः ]

§ १) ततश्च दन्तद्युतिभिर्मुनीन्द्रस्तमःसमूहं विदधद्विध्वस्तम्।
30 उवाच तत्संशयभेददम्भात् तद्बोधनार्थं वचनं सुधाभम्॥ १
जीवितं यौवनं लक्ष्मीर्लावण्यं प्रियसंगमः। सर्वं चलाचलं लोके कुशाग्रजलबिन्दुवत्॥ २
दुर्हृदः सुहृदो ऽपि स्युः सुहृदो ऽप्यसुहृत्तमाः। मनीषी तेषु सर्वेषु ममतां कः करोति तत्॥ ३
33 एक एव भवेज्जीवः सुखी दुःखी च जायते। एक एवाश्नुते मृत्युं शिवं यात्येक एव हि॥ ४
अर्ज्यते कर्मणा राज्यं हार्यते ऽपि च कर्मणा। विद्वान् विना न को ऽप्यस्ति कर्मणो हन्ति मर्म यः॥ ५
अभाग्यादर्जितापि श्रीः क्षयं याति क्षणादपि। घनाघना घनालीव दुर्दान्तमरुता हता॥ ६
36 अविषह्याणि सह्यन्ते नरके ऽत्र शरीरिभिः। दुःखान्युद्धुषितं देहं येषां श्रवणतो भवेत्॥ ७
कशापाशाङ्कुशादीनामाबाधाः स्वस्वकर्मणा। सहन्ते नित्यशो हन्त तिर्यक्त्वे ऽपि हि देहिनः॥ ८
वियोगरोगसंतापभूपकोपादिवेदनाः। भवे भवन्ति भविनां मानवे ऽपि नवा नवाः॥ ९

7) C उपशमप्रभावेन. 9) PB किशलय. 10) P inter. स & च. 11) Cg चारित्रलक्ष्मीनिवासमिव for निवास इव चारित्रलक्ष्म्याः. 12) P केवलीवनमिव B केलीवन°. 14) P स्वस्याऽपहारं, Cg इति विचिन्त्य संप्राप्तः पृथुलशिलातलस्थस्य महर्षेः समीपम्। 16) P अथ तेन नामगोत्रः की°. 18) B कुमारः। तेन दिव्यपुरुषेण. 27) P B कीर्तननाम. 29) P B add ओं अर्हं॥ before ततश्च etc., B C K °मुनीन्दुस्तमः°. 30) P B तच्छंशय. 32) P सुहृदो for दुर्हृदः. 33) Cg. भवे जीवः. 34) B Cg सिद्धान् for विद्वान्.

1 मायासूयाभयोद्वेगविषादाकुलचेतसाम् । त्रिदशत्वे ऽपि सत्त्वानामभिमानभवं सुखम् ॥ १० 1
इत्थं चतुर्गतावत्रासुमता भ्रमता भवे । कर्मनिर्मथनोपायः प्रापि धर्मः कदापि न ॥ ११
3 कल्पद्रुं दुर्लभं प्राप्य प्रार्थयेत्स वराटिकाम् । स्वायत्ते मोक्षसौख्ये ऽपि यो भवेद्विषयी नरः ॥ १२ 3
संसारमरुकान्तारसमुत्तारं यदीहसे । सम्यक्त्वं सलिलं चित्तदृतिस्थं तत्सदोह्यताम् ॥ १३
ततः कुमारकुवलयचन्द्र एतस्मिन्नीदृशे ऽसारे संसारे क्रोधमानमायालोभमोहमूढमानसैरात्मभिर्यदनु-
6 भूतं तत्त्वया तुरगापहरणपर्यन्तमेकमनसा कथ्यमानं निशम्यतामिति । तथा हि, 6

§ २ ) अस्ति समस्तविशङ्कटयज्ञवाटहुताशसमुत्थबहलधूमध्यामलितातुलविपुलनभस्तलः सर्वदेश-
लक्ष्मीवक्षःस्थलालंकारतारहारो निखिलदेशान्तरसमागच्छदनेकवस्तुसङ्केतभूभाग इव वत्साख्यो
9 विषयः । यत्र कम्पाङ्कम्पितपुण्ड्रेक्षुपत्रनिचयशब्दवित्रस्तमिव प्रविशति काननभुवं कुरङ्गयूथम् । 9
तदीयपूर्णतरलाक्षिनिरीक्षणेन स्वकीयकान्ताकर्णान्तविश्रान्तलोचनसंस्मृतिपरो लेप्यमय इव दृषन्निर्मित-
स्तम्भ इव निश्चलः पथि पथिकजनश्चिरं तिष्ठति । तत्र प्रोत्तुङ्गशृङ्गसंगतसुरमन्दिरोपशोभमाना गम्भीर-
12 नीरपरिखालंकृतप्राकारा लवणाम्बुधिवज्रवेदिकाकलिता जम्बूद्वीपलक्ष्मीरिव, सुरपुरीव सद्वृषाश्रया, 12
अलकेव पुण्यजनान्विता, लङ्केव कल्याणमयी, कौशाम्बी नाम नगरी समस्ति ।
तस्या एकत्र विलसज्जगत्त्रयरमाजुषः । किं ब्रूमो वर्णने यस्या न गीष्पतिरपि क्षमः ॥ १४
15 तां प्रियप्रणयिनीमिव भुङ्क्ते पुरन्दरपराक्रमः पुरन्दरदत्ताभिधो वसुधाधीशः । यस्तु प्रालेयाचल इव 15
कीर्तिमन्दाकिन्याः, विश्रामविटपीव गुणशकुनानाम्, कल्पपादप इव यथाचिन्तितदत्तवित्तः ।
अत्यवदातेन जिता हंसाः कंसारिमेचका हरयः । सवितुः सिता बभूवुर्यद्यशसा प्रसरता गगने ॥ १५
18 तत्रैक एव दोषो ऽस्ति समृद्धे ऽपि गुणश्रिया । यज्जैनवचने सौख्यवृक्षमूले न वासना ॥ १६ 18

§ ३ ) तस्य भूवासवस्य वासवस्येव सुरगुरुश्चतुर्विधबुद्धिनिधानं वासवाभिधः सचिवेश्वरः । स
नृपतिः सहोदरमिव सहचरमिव पितरमिव देवतामिव तं मन्त्रिणं मनुते । स मन्त्री कौस्तुभमणिमिव
21 पुरुषोत्तमो दुर्वारवैरिवारणनिवारणवारणारितुल्यं श्रीजिनेश्वरप्रणीतं सम्यक्त्वं हृदि धारयति । तस्य 21
मन्त्रिणो वासवस्यान्यदा कृतप्राभातिकावश्यकस्य भगवतामर्हतां महार्हाणामर्हणानिमित्तं जिनायतनं प्रवि-
शतो द्वारदेशे ऽनेकविधप्रभूतपरिमलपरिमिलितमधुकरनिनादमनोहरेण पुष्पकरण्डकेन समं बाह्योद्यान-
24 पालकः स्थावराख्यः समाययौ । तेन तच्चरणयुगं प्रणम्य 'देव, वर्ध्यसे । सकलकामिजनलोचनप्रमोदप्रदः 24
प्राप्तस्तावद्वसन्तावतारः' इति जल्पता पुष्पाण्युपदीकृत्य महामन्त्रिणः करतले सहकारमञ्जरी ततः समर्पिता ।
अन्यच्च 'तत्रोद्याने चन्द्र इव तारकानिकरेण शिष्यगणेन परिवृतः क्षमारामाललामश्चारित्ररत्नाकरः
27 सर्वमुनिशिरोरत्नं निहतदुर्जेयकषायसंचयः सद्धर्मनन्दनः श्रीधर्मनन्दनो नाम यतीश्वरः समवातरत्' । 27

§ ४ ) तदाकर्ण्य मन्त्रिणा भ्रुकुटीभङ्गभीमाननेन 'हा अनार्य' इति वदता सहकारमञ्जरीं निजसह-
चरहस्ते समर्प्य साक्षेपमिति जल्पितम् । 'रे रे दुराचार विवेकविकल स्थावरक, प्रथमं प्रधानं सादरं
30 वसन्तं कथयसि पश्चाद् धर्मनन्दनाचार्यम् । 30
क्व वल्मीकः क्व वा मेरुः कालसः क्व च नागराट् । क्व वसन्तः क्व भगवान् सूरिः श्रीधर्मनन्दनः ॥ १७
ऋतुराट् तनुते चित्तं कामार्तं स च साधुराट् । तदेव विपरीतं तु वीक्ष्यतामन्तरं द्वयोः ॥ १८
33 तद्गच्छैतस्यात्मनो दुर्बुद्धिविलसितस्य फलं भुङ्क्ष्व' इति । 'रे प्रतीहार,' अमुष्य वनरक्षकस्य केदाराणां 33
लक्षार्धं त्वरितं दापय, येन तत्कर्षणायासविवशः पुनरपीदृशं निर्विवेकं न वदति' इत्युक्त्वा मन्त्री
विहितदेवतार्चनः प्राप्य राजसौधं तामेव मञ्जरीं नृपतिकरतलसंगिनीं चक्रे । राज्ञा भणितम् । 'किं
36 बहिरुद्याने पुष्पकालो ऽवततार ।' ततो मन्त्रिणा जल्पितम् । 'वसन्तलक्ष्मीवीक्षायै देवपादमवधार- 36
यस्वेति ।' इति श्रुत्वा सुरेश्वर इव चतुर्दन्तं नृपतिरुत्तुङ्गं मतङ्गजमारुह्य चतुरङ्गबलेन वनावनीमीयिवान् ।
मन्त्री नृपं प्रोवाच । 'देव, अवधार्यताम् ।
39 अमन्दानन्दसंदोहस्फुरन्मधुकरस्वरैः । स्थलाम्भोजानि ते सौवागतिकत्वं वदन्ति हि ॥ १९ 39
अमी वृक्षा निरीक्ष्यन्ते नम्राः फलकदम्बकैः । त्वय्यागच्छति भूनाथे कः कुर्यान्न नतिं क्षितौ ॥ २०

4 ) B सम्यक्त्वसलिलं. 7 ) B विसंकट. 17 ) P हारयः for हरयः. 22 ) P महार्हाणानिमित्तं. 23 ) P परिमलित B मिलित for परिमिलित. 25 ) P adds हार and B adds हारि ( but later scored ) before °मञ्जरी. 29 ) P B °मञ्जरी for °मञ्जरीं. 33 ) B दुर्बुद्धे बुद्धिविलसितस्य. 35 ) P राज्ञसौधं. 37 ) P °रुत्तंगं मतङ्ग°. 39 ) P अमंदामंदसंदोह B अमंदामोदसंदोह.

भ्रमरैर्गीतमेकान्तमधुरैस्ताण्डवं दलैः । तूर्यत्रिकं वितन्वन्ति द्रुमा देव तवाग्रतः ॥ २१
कुर्वन्तीव द्रुमा देव भवतश्चरणार्चनम् । कुसुमैरसमैर्भृङ्गरणितैश्च गुणस्तुतिम् ॥' २२

§ ५ ) एवं निवेदयन् महामन्त्री परितो वने दृष्टिं व्यापारयन् ध्यायति स्म । 'तावदत्रोद्याने धर्मनन्दनो विभुर्न वीक्ष्यते, तमेव हृदि धृत्वा मयात्र विभुरानीतो विनाप्यर्थमेव, तन्मन्ये ऽन्यत्र कुत्र वा वनस्पतिकुन्थुपिपीलिकाप्रभृतिबाहुल्यात्प्रासुकत्वं विभाव्य सिन्दूरकुट्टिमतले सशिष्यः स्थितो भगवान् भविष्यति' इति चिन्तयित्वा राजानमवादीत् । 'देव, यस्त्वया कुमारत्वे सिन्दूरकुट्टिमासन्ने ऽशोकतरुरारोपितः स कुसुमितो न वा, इति न ज्ञायते ।' राज्ञोक्तम् । 'चारूदितं भवता' इति वदन् मन्त्रिणः करं करेण गृहीत्वा गतेन तेन तत्र मुनयो दृष्टाः । केचिद्धर्मध्यानदत्तावधानाः, केचित्प्रतिमापालनलालसमानसाः, केचिच्छुद्धसिद्धान्तपठनप्रवीणान्तःकरणाः, केचिद्द्विविधासनाध्यासीनाश्च । तेषां च मध्यगतं ताराणामिव ताराधिपम्, सागराणामिव क्षीरसागरम्, सुराणामिव सुरेश्वरम्, चतुर्ज्ञानिनं तं महामुनिं वीक्ष्य मनाक् प्रमुदितः क्षितीशः सचिवमुवाच । 'क एते पुरुषाः, कश्चैष नृप इवैषां मध्यगतः' इत्युक्ते वासवसचिवः प्रोवाच । 'देव, तावदयं मुनिपतिर्भवाटव्यां कुतीर्थिककथितकापथपतितानां जन्तूनां मुक्तिपुरीमार्गोपदेशको भगवान् श्रीधर्मनन्दनाचार्यो देवानामपि वन्द्यपादारविन्दः, तथास्यैव शिष्या महात्मानो ऽमी मुनयः, तदुपसृत्याचार्यस्य समीपे धर्माधर्मं प्रष्टुमुचितम् ।' 'अथ भवत्वेवम्' इति वदन् मन्त्रिकरतले लग्न एव भूपतिर्गुरुसमीपमुपेयिवान् । अथ मन्त्री स्तुतिपूर्वं प्रदत्तप्रदक्षिणात्रयः सुगुरुचरणाम्भोजं ननाम तथा वसुधाधिपो ऽपि । भगवाँश्च धर्मलाभं दत्त्वा 'स्वागतं भवताम्, उपाविशत' इत्युवाच । ततो 'यदादिशति भगवान्' इति वदन्नृपस्तत्रैव कुट्टिमतले न्यविक्षत, मन्त्री च गुरुजनमनुज्ञाप्य, तदा चान्ये ऽपि नृपमार्गमनुवर्तमानाः पान्थकार्पटिकादयो नत्वा भगवन्तमुपविष्टाः । भगवता सुखदुःखे जानतापि लोकाचार इति शरीरकुशलतावृत्तान्तं ते पृष्टाः । तैरुक्तम् । 'सममद्य तत्रभवद्भवद्दर्शनेन' इति । ततश्च चिन्तितमवनीपेन । 'भगवतो ऽमुष्यासामान्यं रूपम्, अगण्यं लावण्यम्, अमेया कान्तिः, अपूर्वकरुणारसः प्रशस्तः, तथा चायं सेतुबन्धः संसारसिन्धोः, परशुस्तृष्णालतावनस्य, अशनिर्मानशिलोच्चयस्य, मूलं क्षमापादपस्य, आकरः सर्वविद्यानाम्, कुलमन्दिरमाचाराणाम्, महामन्त्रः क्रोधादिकषायचतुष्टयभुजङ्गमस्य, दिवसकरो मोहान्धकारस्य, दावानलः स्फूर्जद्रागशाखिनः, अर्गलाबन्धो नरकद्वाराणाम्, कथकः सत्पथानाम्, निधिः सातिशयज्ञानमणीनाम् । सर्वथा सर्वगुणालिङ्गितसफलसंप्राप्तमनुष्यजन्मनो ऽस्य किं वैराग्यकारणं बभूव, येन भगवता यौवनलक्ष्मीभाजापि सर्वदा सर्वदुःखसमुच्चयशय्या प्रव्रज्याङ्गीचक्रे तत्पृच्छामि ।' इति चिन्तयन् महीपतिर्मुनिना ज्ञानिना स्वयमेव प्रोक्तः । 'चतुर्गतिके ऽपि भवे सुलभं वैराग्यकारणम् । यदन्ये ऽपि विषयसुखास्वादमोहिता जीवाः पापं कुर्वते तदेव ज्ञानिनां वैराग्यहेतुः । तत्र नरकगतौ तावत्त्रिविधा विबाधा, क्षेत्रजा ऽन्योन्यमुदीरिता परमाधार्मिकसुरकृता च । ततस्तद्दुःखानि वर्षकोट्यापि व्याख्यातुं न शक्यन्ते, एवं तिर्यङ्मनुष्यदेवगतिष्वपि । इह लोक एतदेव जिननाथवचनं क्रियमाणं धर्मार्थकामदम् । परत्र च मोक्षपुरुषार्थसाधकम् । ततः प्रथमं श्रावकधर्मं समाश्रित्य पश्चाच्छ्रमणधर्मपालने मनो नियोजय' इति ।

§ ६ ) अत्रान्तरे प्रस्तावं परिज्ञाय कृताञ्जलिना वासवमहामन्त्रिणा भगवन्तं धर्मनन्दनं मुनिपं नत्वा सविनयमूचे । 'नाथ, य एष त्वयाशेषदुःखनिलयश्चतुर्गतिलक्षणः संसारः प्रणीतः, एतस्य पूर्वं किं निमित्तम्, येन जीवा भवे परिभ्रमन्ति ।' श्रीधर्मनन्दनगुरुणा भणितम् । 'भो मन्त्रीश, नरेन्द्र पुरन्दरदत्त' तच्छृणु संसारपरिभ्रमणे जीवस्य यत्कारणं जिनेश्वरैरुक्तम् । तथा च ।

क्रोधो मानश्च माया च लोभश्चाप्यनियन्त्रिताः । अमी कषायाः संसारदुःखसागरहेतवः ॥ २३
अन्तर्दहन् गुणग्राममिद्धः क्रोधधनञ्जयः । बहिर्वस्तुपरिप्लोषकृतः पावकतो ऽधिकः ॥ २४
कदाचन सुधीर्दत्ते स्थानं न स्वान्तवेश्मनि । क्रोधस्य दन्दशूकस्य निःशूकस्य जनक्षये ॥ २५
केवलं सर्पदष्टस्य प्रतीकारो ऽत्र विद्यते । दुर्दान्तक्रोधसर्पेण दष्टस्य तु न सर्वथा ॥ २६

1) B भ्रमरैर्गीतकंठाद्यं शाखामिस्तांडवं दलैः. 3) B परितस्तत्र दृष्टिं. 4) C ध्यात्वा for धृत्वा, B मयाऽत्र विहरणीयं विनाप्यर्थमेव. 5) B कुंथुपपीलिका. 6) C suggests यस्त्वया for यस्त्वया. 10) P तारागणमिव, P सागराणामिव सुरेश्वरम्. 12) P कुतीर्थिककथितमुवाच । क एते पुरुषाः etc. repeated (as above) ending with कुतीर्थिककथित. 18) C मन्त्रीश्वरोऽपि गुरु. 20) P B ततश्चितित°. 29) P वर्षकोट्योऽप्यातुं. 33) P भगवं धर्मं°. 37) Cg कषायाः संसारे चत्वारो दुःखहेतवः ।. 39) P दंशशूकस्य.

1 मातङ्गस्पर्शने शुद्धिः सुवर्णपयसा नृणाम् । न पुनः कोपचाण्डालसांगत्ये स्यात्कथंचन ॥ २७ 1
नितान्तं स्तिमितं यस्य स्वान्तं शान्तरसार्णसा । न कदापि स्फुरेत्तस्य कोपाटोपहुताशनः ॥ २८
3 जिनाम्बुदसमुद्भूतप्रशमामृतयोगतः । यः क्रोधाग्निं शमयति तस्य धर्मवनं स्थिरम् ॥ २९ 3
यदि क्रोधो भवेन्नैष कदाचन शरीरिणाम् । तदवश्यं कराम्भोजवासिन्यः स्युः शिवश्रियः ॥ ३०
अत्यन्तकोपमहातमःप्रसरान्धीकृतस्वान्तो भ्रातरं भगिनीमपि हन्ति, यथायं पुरो निविष्टः पुरुषः।'
6 नृपेणोक्तम् । 'प्रभो, वयं न जानीमः को ऽप्येष पुरुषः, कीदृक्षः, किं चैतेन कृतम्' इति । ततो गुरुणा- 6
भाणि । 'य एष तव वामो मम दक्षिणपार्श्वे स्थितस्त्रिनयनगलगवलकज्जलाभो गुञ्जाफलरक्तनयनो
भ्रकुटीभङ्गभीषणास्यो रोषस्फुरदधरौष्ठपुटो दृढकठिननिष्ठुराङ्गो मूर्तिमान् कोप इव संप्राप्तः । एतेन
9 कोपवशवचसा यन्निर्मितं तदाकर्ण्यतामिति । 9

§ ७ ) अस्ति वसुधावामाक्ष्या एकं कुण्डलमिवोत्तप्तकनकमयप्राकारगम्भीरपरिखापरिवृता काञ्ची नगरी । तस्याः पूर्वदक्षिणदिग्विभागे त्रिगव्यूतिमात्रे रगडानाम संनिवेशो ऽस्ति । तत्र सुशर्मदेवो
12 द्विजः परिवसति । पत्नी सुशर्मा । तस्य च रुद्रसोमाभिधो ज्येष्ठपुत्रः । तस्य लघुभ्राता सोमदेवः । 12
तयोः स्वसा श्रीसोमा च । स तु रुद्रसोमो बाल्यादेव चण्डश्चपलो ऽसहनो गर्वोद्धुरकन्धरः स्तब्धो-
ऽतिकर्कशवचाः सर्वदा सर्वडिम्भान्निरागसो ऽपि रथ्यासु परिताडयति । तस्य तादृशस्य स्वभावं
15 वीक्ष्य डिम्भैरेव चण्डसोम इति नाम गुण्यं कृतम्, तावन्नरेश, स एषः । स कियद्भिर्वासरै- 15
रतिक्रान्तैः पित्रा ब्राह्मणकुलबालिकया नन्दिन्या सह पाणिं ग्राहितः । तत्र पितरौ कुटुम्बभारमारोप्य
मन्दाकिनीतीर्थयात्राकृते निर्गतौ । चण्डसोमः क्रमेण यौवनश्रियमलंचक्रे । ततः सा नन्दिनी च
18 यद्यप्यखण्डितशीलव्रता तथापि तां तारुण्यपुण्यावयवरमणीयां वीक्षमाणश्चण्डसोमः स्वमनसि न 18
विश्वसिति । ततो नरनाथ, तस्या उपरि किंचिद्रागमुद्वहतस्तस्य को ऽपि कालो व्यतिचक्राम । अथान्यदा
तत्र शरल्लक्ष्मीरवततार ।

21 अभवन् सर्वतो यस्यां दिशः सर्वा विकस्वराः । कुमुदिन्यः प्रमोदिन्यः सदाकाशा विकासिनः ॥ ३१ 21
अतुच्छस्वच्छतापात्रमाद्रियेत जनैर्जनः । यस्यामितीव जातानि निर्मलानि जलान्यपि ॥ ३२
यत्र स्वागतमप्रच्छि मरालानामुपेयुषाम् । सरोभिर्नलिनीगन्धलुब्धालिकुलनिःस्वनैः ॥ ३३
24 सप्तच्छदेषु चिक्रीडुर्विमुच्य करिणां कटान् । मधुपा यत्र नैकत्र स्थायिनो मलिना यतः ॥ ३४ 24
यत्र चञ्चलकल्लोलभुजाभिरभिवादनम् । घनात्ययश्रियः प्रीत्या तन्वन्तीव जलाशयाः ॥ ३५
निष्पुण्यानामिव धनं सरितां नीरमत्रुटत् । यत्र धान्यान्यवर्धन्त कार्याणीवार्यचेतसाम् ॥ ३६

27 § ८ ) अन्यदा तत्र ग्रामे नटपेटकमेकं ग्रामानुग्रामं परिभ्रमत् समाजगाम । तेन सर्वो ऽपि ग्रामः 27
प्रेक्षावीक्षार्थमभ्यर्थितः । ततस्ते च ग्राम्या रजन्याः प्रथमे यामे व्यतीते प्रशान्ते कलकले मृदङ्गध्वनि-
माकर्ण्य गन्तुं प्रवृत्ताः । एष चण्डसोमः 'स्वकलत्रपरित्राणं कथं करोमि' इति व्यचिन्तयत् । 'यदि
30 तावन्नटं द्रष्टुं गच्छामि ततः कथं जायायाः परित्राणम्, यदि वल्लभाया रक्षणं तदा मम न प्रेक्षण- 30
क्षणनिरीक्षणम्, 'इतस्तटी इतो व्याघ्रः' इति न्यायादनल्पविकल्पमालाकुलितमनाः किं रचयामि,
भार्यात्मना सह नेतुं न युज्यते, तस्मिन् रङ्गे युवशतसंकुलो ग्रामः । सो ऽपि मम भ्राता तत्र गतो
33 भविष्यति । तावद् यद्भवति तद्भवतु । एतस्याः श्रीसोमाया भगिन्या एतां समर्प्य व्रजामि ।' इति 33
विचार्य समर्प्य च कोटिप्रहरणधरश्चण्डसोमः प्रययौ । चिरं तस्मिन्निर्गते भगिन्या भणितम् । 'हले
नन्दिनि, तावन्नटनाट्यवीक्षायै गच्छावः ।' नान्दिन्या भणितम् । 'हले श्रीसोमे, किं न जानासि
36 निजसोदरचेष्टितं येनैवं भणसि, न स्वजीवितस्य निर्विण्णास्मि, त्वं पुनर्यद्युक्तं तत्कुरु' इति जल्पन्ती 36
स्थिता । श्रीसोमा पुनस्तत्र नाट्यं द्रष्टुं गता । तस्य चण्डसोमस्य तत्र रङ्गे प्रेक्षमाणस्य पृष्ठतः किंचिन्मिथुनं
मन्त्रयितुं प्रवृत्तम् । इति जल्पितं तरुणेन । 'भद्रे, हृदये स्वप्ने ऽपि च त्वं दृश्यसे । अद्य मनोरथशतेन
39 प्रत्यक्षं दृष्टासि । 39

त्वद्वियोगानलज्वालामालाज्वलितविग्रहम् । सांप्रतं सौवसंयोगसुधासारेण सिञ्च माम् ॥ ३७

2 > P B स्तीमितं. 6 > C क एष for कोऽप्येष. 11 > C गव्यूत. 12 > P om. पत्नी सुशर्मा, P B om. च after तस्य, B P लघुर्भ्राता. 15 > P B सैषः, B om. स before कियद्भि°. 19 > C कियानपि for कोऽपि. 21 > P B विकाशिनः. 24 > P सप्तच्छेदेषु. 29 > B एष सोमचंडः स्वकलत्र. 30 > P B inter न & मम. 36 > B निजसहोदर. 40 > P माल्य for माला.

1 § ९ ) एतत्संलपत्तदाकर्णितं चण्डसोमेन । अत्रान्तरे स प्रतिभणितस्तया तरुण्या । 'परिज्ञातं मया 1
यत्त्वं दक्षो दाक्षिण्यशिरोमणिस्त्यागी भोगी प्रियंवदः कृतज्ञः, परं प्रकृत्यैव मम पतिश्चण्डः ।' एतच्च
3 श्रुत्वा चण्डशब्दाकर्णनजाताशङ्केन चिन्तितं चण्डसोमेन । 'नूनं सैषा दुराचारा मम भार्या मामिहागतं 3
परिज्ञायैतेन संकेतितविटेन समं मन्त्रयन्ती मां न पश्यति ।'

युवा प्राह पतिस्ते ऽस्तु चण्डः सोमो ऽथवा यमः । इन्द्रो वाद्य मया सार्धं त्वया संगम्यमेव च ॥ ३८
6 भणितं तरुण्या । 'यद्येवं तव निश्चयस्तद्यावन्मम पतिरिह स्थितः कस्मिन्नपि प्रदेशे प्रेक्षां वीक्षते तावदहं 6
निजगृहं व्रजामि । पुनस्त्वया मम मार्गलग्नेन समागन्तव्यम्' इति भणित्वा सा तरुणी रङ्गतो निर्गता ।
चिन्तितं चण्डसोमेन । 'अये, सैवैषा दुष्टप्रकृतिर्येन भणितमेतया मम पतिश्चण्डः ।' यावदेतच्चण्ड-
9 सोमश्चिन्तयति तावदिदं नट्या गीतम् । 9

इष्टं यन्मानुषं यस्य तदन्येन रमेत चेत् । स जानन्नेवमीर्ष्यालुरान्चे तस्य जीवितम् ॥ ३९
एवं च निशम्येर्ष्यालुना चण्डसोमेन परिस्फुरदधरेण चिन्तितम् । 'कस्मिन् स दुराचारः सा च
12 दुःशीला व्रजति । अवश्यं तच्छिरो लुनामि ।' इति चिन्तयन् स समुत्थाय क्रोधाध्मातहृदयः स्ववेश्म 12
प्रविश्य बहलतमसाच्छादिते भूभागे गृहफलहकस्य पाश्चात्यपक्षे कोटिप्रहरणसज्जः स्थितः ।

§ १० ) इतश्च प्रेक्षणे निवृत्ते गृहफलहकद्वारे लघुभ्राता स्वसा च प्रविशन्तौ चण्डसोमो वीक्षांचक्रे ।
15 तेन च कोपान्धतमसाच्छादितविवेकचक्षुषाविचार्य परलोकमवगणय्य लोकापवादं परित्यज्य नीतिं 15
कोटिशस्त्रेण लघुसोदरः स्वसा च निहतौ । द्वावपि धरातले पतितौ । सैषा मम प्रियाप्रियकारिणी सैष
पुरुषो दुःशील इति यावत्तस्य शिरश्छिनद्मीति चिन्तयन् कोटिप्रहरणमुद्गीर्य चण्डसोमः प्रधावितस्ता-
18 वत्कोटिफलहके रणन्ती लग्ना, तच्छब्दाकर्णनमात्रेणास्य प्रतिबुद्धा भार्या नन्दिनी । भणितं ससंभ्रमया 18
तया । 'हा निर्धर्म, किमेतत्त्वयाध्यवसितमिति । हतः कनीयान् भ्राता भगिनी च ।' एतन्निशम्य ससंभ्रमं
यावद्विलोकयति तावद्बन्धुर्भगिनी च मृतिं प्रापतुः । ततः संजातगुरुपश्चात्तापेन तेन चिन्तितम् । 'हा हा,
21 मया अकार्यं कृतं कोपवशतः ।' इति चिरं विलप्य मूर्च्छानिमीलिताक्षः पृथ्वीपीठे लुलोठ । नन्दिन्यपि 21
'देवरं ननान्दरं च' इति भणित्वास्तोकशोकशङ्कुव्यथितहृदया बहुधा रुरोद । ततः क्षणमात्रलब्ध-
चैतन्यश्चण्डसोमः 'हा बन्धुरगुणग्रामाभिराम सदाचार, हा श्रीसोमे भगिनि, युवां विना सदाधारमपि
24 निराधारं जगत्समभूत्' इति चिरं विललाप । 24

असावकृत्यकारीत्यद्रष्टव्यवदनो द्विजः । ह्रियेव द्विजराजो ऽस्ताचलात्पतितुमुद्यतः ॥ ४०
तत्तदाक्रन्दमाकर्ण्य स्त्रीत्वान्मृदुलमानसा । रजनी तारकव्याजादिवाश्रूणि विमुञ्चति ॥ ४१ 27
27 ततः क्रोधादिवाताम्रस्तमःशत्रुं क्षयं नयन् । प्रपातयन् करांश्चण्डान् सूर्यो नृप इवोदितः ॥ ४२

§ ११ ) अथ स जल्पितो जनेन 'भो चण्डसोम, एवं विलापं मा कार्षीः' । ततः स विलपन्नेव 'हा बान्धव,
हा भगिनि', इति निःसृत्य श्मशानभूमौ चिताज्वलनज्वालावलीं कृत्वा प्रवेष्टुं यावच्चण्डसोमः प्रारेभे
30 तावद्ग्रामजने 'गृह्णीत गृह्णीत द्विजं पतन्तम्' इति वदति चण्डसोमो बलिभिर्नरैर्धृतः । अथ द्विजैरुक्तः 'किं 30
प्राणान् वृथा त्यजसि, प्रायश्चित्तं विरचय' । चण्डसोम उवाच । विप्राः, तद्दीयतां मे ।'

प्राहैको ऽघमकामेन कृतं तेनैव शुद्ध्यति । परः प्राह जिघांसन्तं निघ्नन् ब्रह्महा भवेत् ॥ ४३
33 ऊचे ऽन्यः कुत्कृते पापे क्रोध एवापराध्यति । परो ऽवदद्भवेच्छुद्धो ब्राह्मणानां निवेदिते ॥ ४४ 33
कश्चिदूचे कृतं पापमज्ञानान्न हि दोषकृत् । प्राहान्यो देहि सर्वस्वं द्विजानां स्वस्य शुद्धये ॥ ४५
मुण्डयित्वा ततो मुण्डतुण्डे भिक्षां भ्रमन् सदा । करपात्रीं करे बिभ्रद् गच्छ त्रिदशदीर्घिकाम् ॥ ४६
36 इत्थं मिथो विरुद्धानि श्रुत्वा तेषां वचांस्ययम् । मां चतुर्ज्ञानिनं मत्वा तान् विहाय समागमत् ॥ ४७ 36
ततोऽत्र चिन्त्यतां तीर्थस्नानैः शुद्धिः कथं भवेत् । जलेनाङ्गमलो याति न लग्नं पापमात्मनि ॥ ४८
यदि स्नानात्स्मृतेर्वापि गङ्गा हरति कल्मषम् । जायते जलजन्तूनां तत्कदापि न कल्मषम् ॥ ४९
39 यदि स्मरणमात्रेण जगत्पूतं भवेदिदम् । अहो तन्मोह एवायं यज्जलेनात्मशोधनम् ॥ ५० 39
इदं वाक्यं विचारं न सहते हि महात्मनाम् । परं जनेन मूढेन प्रसिद्धिं गमितं परम् ॥ ५१
रागद्वेषविहीनेन यदुक्तं सर्ववेदिना । मनःशुद्ध्या कृतं तद्धि पापप्रक्षालनक्षमम् ॥' ५२
42 श्रुत्वेति चण्डसोमः स्वं वृत्तान्तं प्राञ्जलिः प्रभुम् । प्रणम्य प्राह सत्यं तद् यदाख्यातं विभो त्वया ॥ ५३ 42

2 ) C परं मम पतिः प्रकृत्यैव चण्डः. 17 ) P B प्रहरणमुद्गूर्य. 28 ) P C भोश्चण्डसोम, B ततः स विलापावलिप्त चेतागृहमथ सन्निः-सृत्य. 29 ) P सशान. 30 ) B बलिभिर्नीरै°. 40 ) P om. 2nd परम्.

सर्वज्ञवाक्यस्य विशुद्धिदस्य योग्यो ऽस्म्यहं यद्यघभाजनो ऽपि।
दीक्षां ततो देहि ममेति तेन प्रोक्ते व्रतं तस्य ददौ मुनीन्दुः ॥ ५४

। इति कोपे चण्डसोमकथा ।

§ १२ ) गुरुणा श्रीधर्मनन्दनेन पुनरप्युक्तम् ।

'दुर्दमो मानमातङ्गो धर्मारामं भनक्ति यः । स्वशक्तिव्यक्तितो यत्नः क्रियतां तस्य रक्षणे ॥ ५५
परित्यजन्नपि क्रोधं मानवो मानवर्जितः । भवेद्भवे यदि श्रेयःश्रिया संश्रियते ततः ॥ ५६
हिताभिलाषी यः स्वस्य तेन मानमहीधरः । भेदनीयः सदाप्युद्यन्मृदुताभिधधारया ॥ ५७
अहंकारो नदीपूर इव पुंसः कुलद्वयम् । भिनत्ति कूलद्वयवत् पद्मोच्छेदनलालसः ॥ ५८
दष्टो दर्पभुजङ्गेन नरश्चैतन्यशून्यधीः । नमस्यति गुरून् क्वापि पुरतो न स्थितानपि ॥ ५९
मानान्धलोचनो देही चारुमार्गं न पश्यति । अतः संसारकूपान्तर्निपतत्युचितं हि तत् ॥ ६०

मातरं पितरं भार्यामपि म्रियमाणामुपेक्षते मानमहागजेन्द्रपरवशः, यथैष पुरुषः।' राज्ञा परिजल्पितम् । 'भगवन्, अस्यां सभायामनेकलोकाकुलायां सैष पुरुष इति कथं ज्ञायते ।' भणितं श्रीभगवता । 'य एष मम वामस्तवदक्षिणपार्श्वे स्थितः प्रोन्नामितभ्रूयुगः पृथुलवक्षःस्थलो गर्वभरमुकुलितदृष्टिरुत्तप्तकनकवर्णतनुराताम्रलोचन एतेन रूपेण मूर्तो मान इव समागतः । यदेतेनामानमानमूढचेतसा कृतं तदाकर्ण्यताम् । तथा हि,

अस्त्यवन्तीजनपदे नगरी श्रीगरीयसी । विशाला सुमनःशाला विशाला शालशालिता ॥ ६१
सुप्रापं यत्र सिप्रायाः पयः पीयूषसोदरम् । निपीय लोको न सुधापायिनो ऽपि प्रशंसति ॥ ६२
यत्राभ्रंलिहहर्म्याग्रचन्द्रशालासु योषितः । राजन्ते वीक्षितुं लक्ष्मीं स्वर्गवध्व इवागताः ॥ ६३
धनिनां यत्र हर्म्येषु सदनेषु मनीषिणाम् । वर्धते श्रीसरस्वत्योर्मिथः प्रीतिर्गतागतैः ॥ ६४

तस्या नगर्याः पूर्वोत्तरदिग्विभागे योजनमात्रप्रदेशे कूपपद्राभिधानो ग्रामः । तत्रैकः पूर्वं राजवंशप्रसूतो भागधेयपरिहीनः क्षत्रभटो नाम जीर्णठक्कुरः परिवसति । तस्य चैक एव वीरभटाख्यः पुत्रो निजजीवितादप्यधिकवल्लभो ऽस्ति । अन्यदा स तं तनुजं परिगृह्योज्जयिन्यां प्रद्योतननृपस्य सेवाहेवाकपरो बभूव । दत्तः क्षितिपतिना तस्य स एव कूपपद्रो ग्रामः । कालेन च स क्षत्रभटो ऽनेकसमीपसंपर्कवैरिवीरवारविदारितावयवो जराजीर्णतया चरणचङ्क्रमणाक्षमस्तमेव पुत्रं वीरभटं भूपस्यार्पयित्वा गृह एव स्थितः । तस्यापि शान्तिभटाभिधः सूनुरस्ति । स च क्रमतः क्षितिपस्य सेवां कर्तुं प्रवृत्तः । तस्य स्वभावतः स्तब्धस्यात्यन्तमानिनो यौवनगर्वितस्य प्रद्योतनराज्ञा राजपुत्रवर्गेण च शान्तिभट इति नामधेयस्य मानभट इति नाम विदधे । नरेश्वर, स एष मानभटः ।'

§ १३ ) अन्यदा सदसि सर्वेषु स्वस्वस्थाननिविष्टेषु मानभटः समागमत् । ततः स्वस्वामिनः सचिवपुङ्गववर्गस्य कृतनमस्कारो निजस्थाने राजपुत्रं पुलिन्दाख्यमुपविष्टं दृष्ट्वा प्रोचिवान् । 'भोः पुलिन्द, मदीयमिदमासनस्थानं समुत्तिष्ठ त्वम्' इति । पुलिन्देन भणितम् । 'अहमजानन्नेवेहोपविष्टस्तावत् क्षमस्व ममागः, न पुनरुपविक्ष्ये । ततः 'तव मानभटस्य स्थाने पुलिन्दो निविष्टः' इति वदद्भिरपरैः स उत्तेजितः । तद्यथा ।

'त्यजन्ति मानिनः सर्वे तृणवज्जीवितं धनम् । उज्झन्ति मानं न क्वापि मान एव महद्धनम् ॥ ६५
लघ्वर्कमूलवद्द्रव्यं मानं मन्दरवद्गुरु । त्यजन्ति मानिनः पूर्वं परं च न कथंचन ॥ ६६

एतज्जनवचनमाकर्ण्य क्रोधाध्मातहृदयो मानभटो निर्दयः कार्याकार्यमविचार्यानार्य इव स्वस्मृतिमवगणय्य कृपाण्या वक्षःस्थले पुलिन्दं जघान । तं निपात्य स च सदसो निःसृत्य पुलिन्दपाक्षिकराजपुत्रेषु पृष्ठिलग्नेष्वपि वेगवत्तरया गत्या स्वग्राममागम्य कृतापराधो भुजङ्गम इव स्ववेश्म प्रविश्य पितुः पुरतो पुरतो यथावृत्तं कथयामास । तन्निशम्य पितृपित्रा जल्पितम् । 'पुत्र, यत्कृतं तत्कृतमेव । अत्र पुनः सांप्रतं सांप्रतं विदेशगमनम्, तदनुप्रवेशो वा । तत्र तदनुप्रवेशो न घटते, तावद्विदेश एव गम्यम् । अन्यथा जीवितव्यं न । ततस्त्वरितमेव वत्स, सज्जीकुरु वाहनम् । तत्रारोप्य सकलमपि गृहसारं

2 ) P मुनींद्रः. 7 ) P B °न्मृदुताभिदुधारया. 16 ) P सुमनसःशाला. 21 ) P एकवीरभटाख्यः. 27 ) P नाभाऽवतस्य B नामावनम्य for नामधेयस्य, P B सैष मान°. 31 ) P add : & ते before ततः. 23 ) P उज्झंते. 35 ) B adds पूर्वं द्रव्यं परं मानं before क्रोधाध्मात. 37 ) C °मागत्य. 40 ) B adds on the margin the following ( to come after वाहनम् । ) -येन तदाश्रित्य रेवातीरे गम्यते । तेन च मानभटेन मानाध्मातमनसापि किमपि दाक्षिण्यं दधता वाहनं सज्जीकृतम् ।.

1 रेवातीरं प्रति प्रेषितौ क्षत्रभटवीरभटौ। परं स्वयं व्याघुट्य मानभटः कतिभिरपि स्वपुरुषैः परिवृतः 1
पित्रा वार्यमाणो ऽपि पौरुषाभिमानितया स्थितः।
3 'द्विधापि लाभः संग्रामे शूरो मृतिमवैति चेत्। स्वर्गशर्माथवा जीवेत्ततः श्रेयः श्रियः पदम्॥' ६७ 3
इति स यावच्चिन्तयन्नस्ति तावत्तत्र पुलिन्दस्य बलं प्राप्तमेव। ततस्तत्र तयोर्युद्धं प्रवृत्तं, मानभटेन
मानवाहारूढेनाकर्षितखड्गरत्नेन तद्बलं सकलमप्यभञ्जि। ततः स गुरुप्रहारार्तो निर्व्यूढपराक्रमः स्वपुरुषैः
6 सह पितुः पथि गच्छतो मिलितः। अथ तौ क्रमेण यान्तौ नर्मदोपकण्ठे पर्यन्तग्राममेकमाश्रित्य दुर्गमं 6
तस्थतुः। सो ऽपि मानभटः कियद्भिर्दिनै रूढव्रणः संजज्ञे।

§ १४) तत्र तयोस्तस्थुषोः कियानपि कालो व्यतिचक्राम।

9 तत्रान्यदा वसन्तश्रीर्वनावन्यामवातरत्। सपल्लवश्रियो ऽभूवन् यस्याः संगान्महीरुहः॥ ६८ 9
अशोका अपि कुर्वन्ति सशोका विरहिस्त्रियः। स्मरन्त इव चित्तान्तस्तत्तत्पादतलाहतीः॥ ६९
अनङ्गो ऽपि हि यत्संगाद्धन्त हन्ति वियोगिनः। पुष्पश्रियैव सर्वत्र तत्र मित्रबलं महत्॥ ७०
12 किल माध्वीकगण्डूषोक्षितेन भृशरोषितः। स्त्रैणं विरहितं हन्ति केशरः केशरश्रिया॥ ७१ 12
पलाशास्तु पलाशाढ्याः पलाशा इव रेजिरे। वियोगाक्रान्तनारीणामरीणाः प्राणितच्छिदे॥ ७२
कङ्केल्लिशाखिनां शाखा नवपल्लववेल्लनैः। अञ्जलोत्तारणानीव पुष्पकालस्य तन्वते॥ ७३

15 § १५) अथ स मानभटो ग्रामतरुणनरैः सह दोलायामधिरूढवान्। ग्रामजनेनोदितं 'यो यस्य 15
हृदयंगमस्तस्य तेन नाम गेयमेव।' प्रतिपन्नं ग्राम्यपुरुषैः। एवं भणिते निजनिजप्रियाणां पुरस्तरुणपुरुषवर्गो
गीतं गातुं प्रारेभे। ततः को ऽपि गौराङ्गीं को ऽपि श्यामलाङ्गीं को ऽपि तन्वङ्गीं को ऽपि नीलोत्पलाक्षीं
18 गायति। ततो दोलाधिरूढेन मानभटेन निजा जाया गौराङ्ग्यपि श्यामाङ्गीनामोच्चारेण गीता। एवं च श्यामाया 18
नाम गीयमानं श्रुत्वा तस्य प्रिया गौराङ्गी समधिकं चुकोप। ततो ऽपराभिर्युवतिभिः सा हसितेति। 'सखि,
तव रूपमप्रमाणं सौभाग्यभङ्गी च यत्तव पतिरन्यायाः श्यामाङ्ग्या मनोवल्लभाया नामोत्कीर्तनमातनोति।'
21 ततः सा सौभाग्यवती गौराङ्गी निक्षिप्तहृदयशल्येव क्षणं चिन्तयामास। 'अहो, मम प्रियेण सखीजन- 21
स्यापि पुरतो मानो ऽपि न रक्षितः। अहो, अस्य निर्दाक्षिण्यम्। अहो, निर्लज्जता। अहो, निःस्नेहता।
येन प्रतिपक्षगोत्रग्रहणं कुर्वता महद्दुःखं प्रापितास्मि, ततो ममापमानितसौभाग्यलक्ष्म्या न समीचीनं
24 प्राणितम्' इति विचिन्त्य सा गौराङ्गी महिलावृन्दस्य मध्यान्निर्गमनोपायमिच्छति, परं न तद्दृष्टिवञ्च- 24
नावसरं प्राप्नोति। इतश्च,

स्वप्रियाद्गोत्रस्खलनश्रुतिसंतप्तचेतसः। तस्या दुःखमिव प्रेक्ष्य द्वीपमन्यं रविर्ययौ॥ ७४
27 कमलानि परित्यज्य मधुपाः कुमुदावलिम्। भेजुः प्रायेण नैकत्र मधुपानां रतिर्भवेत्॥ ७५ 27
अस्तं गते दिनस्यान्तात् खगे विश्वप्रकाशके। क्रोशन्ति स्म खगानामसौहृदादिव दुःखिता॥ ७६
पर्यपूरि तथा विश्वमपि विश्वं तमोभरैः। यथा न लक्ष्यते लोकैस्तदा पाणिर्निजो ऽपि हि॥ ७७
30 सर्वा अपि क्षणादेव ग्रस्यन्ते तमसा दिशः। इनाद्रिना सपत्नेन को नाम न हि दूयते॥ ७८ 30
अभूत्तमोमयं भूमितलं निखिलमप्यथ। राज्यं तमसि कुर्वाणे यथा राजा तथा प्रजा॥ ७९
न जलं न स्थलं नोच्चं न नीचं नयनाध्वनि। न समं नासमं सर्वं तमसैकीकृतं जगत्॥ ८०
33 तत ईदृक्षे समये सा युवतिः सार्थमध्यतः कथंचिन्निर्गत्य मरणोपायं चिन्तयन्ती गृहमाजगाम। तत्र 33
सा श्वश्र्वा पृष्टा 'वत्से, कुत्र ते पतिः'। भणितं तया। एष आगत एव मम पृष्ठे लग्नः' इति वदन्ती
सावशा वासवेश्म प्रविवेश। ततो ऽसावतिगुरुदुःसहप्रतिपक्षगोत्रवज्रप्रहारदलितेव जजल्पेदम्।
36 'आकर्णयत भो लोकपालका नीतिपालकाः। विना प्रियं निजं नान्यो मया चित्ते विचिन्तितः॥ ८१ 36
परं न कृतमेतेन वरं प्राणप्रियेण यत्। यदस्म्यन्तर्वयस्यानामपमानपदं कृता॥' ८२
इत्युदीर्य तयात्यन्तकोपया कण्ठकन्दले। अक्षेपि पाशकः प्राणान् विधृत्य तृणवद्द्रुतम्॥ ८३

39 § १६) इतश्च स मानभटस्तां रमणीगणमध्यस्थामप्रेक्षमाणो जाताशङ्कः स्वभवनमाजग्मिवान्। 39
तेन मातुः पार्श्वे पृष्टं 'यद्भवद्वधूः समागता किं वा नेति'। मात्रा जल्पितम्। 'यदत्र समागत्य वासभवने
प्रविष्टा' इति समाकर्ण्य मानभटस्तत्रागम्य त्वरितमेव पाशं तस्याश्चिच्छेद। अथो सा जलेन संसिच्यमाना
42 क्षणेन स्वस्थचित्ता समभवत्। भणितमनेन। 'प्रिये, किं केनापराद्धं, कथं कुपिता, किमिदं त्वया निर्मि- 42

6) C om. पर्यन्त. 12) P माध्वीगण्डू°. 26) P C omit line स्वप्रिया etc. to चेतसः, P om. तस्या, B अस्या for तस्या.
31) P B प्रजाः. 33) C ईदृशे. 36) P विंतेऽतिर्चिंतितः B चित्तेपि चिंतितः. 39) P B स्वभुवन°. 40) P B वासभुवने. 41) C
°स्तत्रागत्य, P जलजेन.

1 मित्तं स्वकीयं जीवितं ममापि च संशयदोलामारोपितम्' इत्याकर्ण्य गौराङ्गी प्रियं प्रति वाक्यमाह स्म 1
'यत्र सा सौभाग्यवती कमलदलदीर्घलोचना श्यामाङ्गी निवसति तत्र त्वमपि गच्छ' इति । मानभटे-
3 नोक्तम् । 'प्रिये, सर्वथैवास्य वृत्तान्तस्यानभिज्ञः । का श्यामाङ्गी, केन कदा दृष्टा, केन तव पुरो निवेदितम्, 3
इति कथय ।' एतन्निशम्य सा रोषानलदह्यमानमानसा बभाण । 'अधुना त्वमनभिज्ञो ऽसि यदा त्वया
दोलाधिरूढेन सखीजनपुरतस्तस्याः श्यामाङ्ग्या गीतमुद्गीतमेतत्कथं विस्मृतम् ।' एवमुक्त्वा तया
6 महापुण्यारण्यस्थमुनिनेव मौनमवलम्ब्य स्थितम् । मानभटेन चिन्तितम् । 'यदसावकारणे ऽपि कोप- 6
पर्वतमारुरोह' । ततस्तेन प्रसाद्यमानापि सा पुनः पुनर्न किंचिज्जल्पितवती । केवलममानं मानमेवाश्रित्य
स्थितवती । मानभटेन चिन्तितम् । 'यदेतस्या रोषपोषितचित्ताया अनुनये पादपतनमेव हितम्' इति
9 विचिन्त्य तेन तदेव कृतम् । परं तेन कृतेनापि प्राज्याज्यसंसिक्तज्वलनज्वालेव साधिकतरं क्रोधदुर्धरा 9
बभूव, न पुनश्चेतसि शमरसं पुपोष । ततः स मानभटश्चिन्तयति स्म । 'युक्तमेषा मृगाक्षी प्रसाद्यमानापि
नाम न प्रसीदति स्म । यत ईदृश्य एव स्त्रियो भवन्ति ।

12　प्रत्यासन्ना भवेन्मोक्षलक्ष्मीर्मोक्षाभिलाषिणाम् । न जायते ऽन्तरा नाम दुस्तरा स्त्रीनदी यदि ॥ ८४ 12
सेवन्ते कामुकाः कामतापच्छेदाय कामिनीः । परं प्रत्युत जायन्ते महासंतापभाजनम् ॥ ८५
सौदामिनीव संध्येव निम्नगेव नितम्बिनी । चञ्चलप्रकृतिर्दृष्टनष्टरागातिनीचगा ॥ ८६
15　विवेकपङ्कजं हन्ति मानसे महतामपि । कामिनीयं हिमानीव कस्तामिच्छति तत्सुधीः ॥ ८७　15
विवेकपर्वतारूढान् गुणप्रौढानपि द्रुतम् । हेलयापि महेलासौ वीक्षितेनापि पातयेत् ॥ ८८
नवीना कापि दृश्येत शस्त्रीव स्त्री शरीरिणाम् । आदीयन्ते यया प्राणा बाह्या आभ्यन्तरा अपि ॥

18　§ १७ ) इति चिरं विचिन्त्य वासभवनान्निःसृतो मानभटो जनयित्र्याप्रच्छि 'पुत्र, कथय किमेतत्' । 18
ततः स तस्या अदत्तस्वप्रतिवचनो बहिर्निर्गतः । कान्तया चिन्तितम् । 'अहो, वज्रकठिनहृदयास्मि येन
भर्तुः स्वयं पादपतितस्यापि न प्रसन्नाभवं ततो न वरं कृतम्, पुनः पुनः पदपतनाप्रसादवीक्षापन्नो
21 मम प्राणेशः कुत्र जगाम, इति न सम्यग् जानामि, तस्मादमुष्य पृष्ठलग्ना व्रजामि' इति चिन्तयित्वा 21
वासवेश्मतो निर्गता । 'पुत्रि, क्व चलितासि' इति श्वश्रूपृष्टा 'मातः, तव पुत्रः क्वापि प्रस्थितः' इति
वदन्ती सा त्वरितपदं प्रधाविता ससंभ्रमं, पृष्ठे श्वश्रूरपि । चिन्तितं च तत्पित्रा वीरभटेन । 'सर्वमेव
24 कुटुम्बं क्वापि प्रस्थितम्' इति चिन्तयन् सो ऽपि तेषां मार्गे लग्नः । ततः स मानभटो घनतिमिराच्छादिते 24
कूपनिगमे व्रजन् तया कथमप्युपलक्षितः । स च बहुपादपशाखासहस्रसंजातान्धतमसस्य कूपस्य
तटमाजगाम । तत्र च तेनोपलक्षिता पृष्ठतः समायान्ती निजजायेति । तामवलोक्य 'एतस्याः परीक्षां
27 करोमि' इति विचिन्त्य तेन कूपान्तः शिला निक्षिप्ता । तच्छिलापतनसंजातशब्दमाकर्ण्य 'मम पतिः 27
पतितः' इति मत्वा तद्भार्या दुःखार्तावटे त्वरितमात्मानं मुमोच । ततः श्वश्रूरपि तद्दुःखदुःखिता स्वं मुक्त-
वती, ततस्तस्या दुःखेन महता पृष्ठलग्नः श्वशुरो ऽपि । ततस्त्रितयमपि विनष्टं दृष्ट्वा स चेतसि चिन्तितवान् ।
30 'मयात्र किं कर्तव्यम्, एतेन दुःखेनात्मानं किं कूपे क्षिपामि, अथवा न' इति विचार्य तेन प्राप्तकालमेतेषां 30
मृतानां निवापक्रियामातन्य परमवैराग्यमागतेन विषयान्तरं परिभ्रम्य परिभ्रम्य लोकेन निवेदितानि
भैरवपातगङ्गास्नानप्रभृतीनि समाचरता भार्यामातृपितृवधप्रभूतसंभूतदुरन्तदुरितजातोपशान्तये कौशाम्बी
33 नगरी सेजे । भो नरेश, तदयं वराको ऽनभिज्ञो मूढमना लोकोक्त्या तीर्थानि करोति । यदि तावच्चित्त- 33
शुद्धिस्तदा पुरुषो गृहे ऽपि तिष्ठन् पापं क्षिणोति । ततः सर्वथैव मनःशुद्धिरेव विधेया ।

चित्तशुद्धिं विना दत्तं वित्तं पात्रे ऽपि सर्वथा । तथा क्रियाकलापश्च भस्मनीव हुतं वृथा ॥' ९०

36 एवं निशम्य गुरूदितं मानभटो मानमपनीय भगवतो धर्मनन्दनस्य चरणमूलमाश्रितः । ततः प्रतिबुद्धेन 36
मानभटेन प्रव्रज्या याचिता । सूरिणा समादिष्टम् । 'वत्स, अतुच्छस्वच्छतानिधे, सर्वदैव निरतिचारं
चारित्रप्रतिपालनं दुष्करमेव । यत्र कर्तव्यं केशोत्पाटनम् । नित्यमेव प्राणातिपातविरत्यादीनि व्रतानि
39 निरतिचाराणि धारणीयानि । वोढव्यो ऽष्टादशसहस्रशीलाङ्गभारः । भोक्तव्यमरसविरसं रूक्षं भैक्षम् । 39
पातव्यं प्रासुकैषणीयं निःस्वादु जलम् । शयितव्यं भूमौ । दुस्सहपरीषहोपसर्गवर्गसंसर्गे ऽपि न मना-

1 ) B इत्याकर्ण्य कर्णशूचिक्षेपादिव । दूनोवाच । तव मानसे कमलदलदीर्घलोचना. 2 ) P सौभाग्यभा for सौभाग्यवती. 4 ) B त्वमज्ञोसि. 18 ) P B वासभुवना°. 19 ) B अदत्तप्रतिवचनो. 20 ) P स्वयं पट (द?) पति°. 22 ) C मातुस्तव, C क्व for क्वापि. 26 ) B निजा जायेति. 32 ) B inter. प्रभूत & संभूत. 37 ) B वच्छ स्वच्छगुणातुच्छ सर्वदैव. 39 ) B °ष्टादशशीलांगसहश्रभारः, B विरसरूक्षं.

1 गपि शैथिल्यमाधेयम् । यन्मदनदन्तैर्लोहचणकभक्षणं सुकरं न पुनर्जिनप्रणीतव्रतप्रतिपालनम् ।' ततः 1
श्रीधर्मनन्दनगुरोरुपदेशवचःपीयूषं मानमहाविषमविषदर्पनिर्दलनसमर्थमाकण्ठमुत्कण्ठया निपीय
3 मानभटः प्रव्रज्यां जग्राह । 3

। इति माने मानभटकथानकम् ।

§ १८ ) पुनरपि गुरुराह ।

6 'इहध्वे यदि कल्याणमात्मनो भव्यजन्तवः । तदार्जवकृपाणेन च्छेद्या माया प्रतानिनी ॥ ९१ 6
मायानदीमहापूरं यद्यमूर्ख तितीर्षसि । ऋजुत्वाख्यतरीं तूर्णं ततः सज्जय यत्नतः ॥ ९२
माया रात्रिचरी ज्ञेया जगज्जन्तुभयंकरी । अवक्रचित्तसद्भावस्फूर्जन्मन्त्रप्रभावतः ॥ ९३
9 मायानृतखनिर्येन कृता स्यात्तस्य दुर्गतिः । न कृता येन तस्येह श्रेयःश्रीर्वशवर्तिनी ॥ ९४ 9
माया दुर्नयभूपालकेलिभूमिरियं वरा । जननी विश्वदुःखानां काननं पापभूरुहाम् ॥ ९५
माया क्रियमाणा यशो धनं मित्रवर्गं च नाशयति । जीवितव्यं च संशयतुलामारोपयति । भो नरेश्वर,
12 यथैष पुरुषः ।' भूभृता प्रोक्तम् । 'भगवन्, न जानीमो वयं कः स पुरुषः, किमेतेन कृतम् ।' श्रीधर्मनन्दनः 12
प्रोचे । य एष तव संमुखः पाश्चात्यभूभागे मम स्थितः संकुचितदेहभागः कृष्णकायकान्तिः पापीयान्
दृश्यते स मायावी । अनेन मायाविना यत्पूर्वं कृतं तदाकर्ण्यताम् । तथा हि,
15 जम्बूद्वीपाभिधे द्वीपे क्षेत्रे भरतनामनि । काश्यदेशे ऽस्ति विख्याता पुरी वाराणसी वरा ॥ ९६ 15
स्फुटं स्फाटिकयद्भित्तौ यत्रेक्षन्ते मृगीदृशः । चरन्त्यो ऽपि निकेतान्तः स्व आदर्श इवानिशम् ॥ ९७
दुःखं तु त्यागिनामेव सर्वैश्वर्यविराजिनाम् । कदाचनापि प्राप्यन्ते याचनाय न याचकाः ॥ ९८
18 यत्र कामानलो यूनामदीपिष्ट कुतूहलम् । संध्यासमीरणैः सिद्धसिन्धुसीकरहारिभिः ॥ ९९ 18
या चतुर्दशस्वप्नजन्ममहिम्नः अमूर्तमूर्तिरमणीयतातिरस्कृतानल्पकन्दर्पस्य उत्पन्नविमलकेवलज्ञानाव-
लोकिताशेषपदार्थसार्थस्य संसारोदरविवरसंचरिष्णुसकलजनतात्राणदानोद्धतविशुद्धसद्धर्मदेशनासिंह-
21 नादविधुरितसकलकुमतकरिवरस्य सुरासुरनरेश्वरसंसेव्यमानचरणारविन्दयुगलस्य तीर्थकृतो भगवत-21
स्त्रिजगदानन्दनस्य श्रीवामानन्दनस्य जन्मभूमिः । तस्या नगर्याः पश्चिमोत्तरदिग्विभागे शालिग्रामो
नाम ग्रामः ।
24 अम्बुभिर्बन्धुरो ऽगाधैः संकटो विकटैर्वटैः । मञ्जुलो वञ्जुलश्रेण्या चित्तप्रीत्यै न कस्य यः ॥ १०० 24
§ १९ ) तत्र चैको वैश्यजातिर्गङ्गादित्याख्यः परिवसति । तत्र ग्रामे धनधान्यसमृद्धे ऽपि स
एवैको दारिद्र्यमुद्राविद्रुतः । कुसुमशरसमानरूपे ऽपि जने स एवैको वैरूप्यधारी । किं बहुना, स
27 एवैको दुर्वचनपरो निखिलजनोद्वेजनीयदर्शनः कृतघ्नः कर्णेजपः सर्वागुणगणमन्दिरं च । तस्य ग्रामजनेन 27
मायाशीलस्य पूर्वनाम गङ्गादित्य इत्यवमत्य मायादित्य इत्यभिधा विदधे । भो नरेन्द्र, स चायं
मायादित्यः । तत्र ग्रामे वणिक्पुत्र एकः पूर्वसुकृतसंचयक्षयपरिक्षीणद्रविणः स्थाणुरित्याख्यः । तस्य
30 तेन मायादित्येन समं प्रीतिरुत्पन्ना । स च स्वभावेन सरलः कृतज्ञः प्रियवादी दयालुरवञ्चनपरः सदा 30
दीनवत्सलो ऽनादीनवश्चेति । तेन स्थाणुना ग्रामवृद्धजनेन प्रतिषिध्यमानेनापि सौवचित्तप्रविशुद्धतया
मायादित्यस्य समीपं [ सामिप्यं ] न कदापि मुच्यते ।
33 जानाति साधुर्वक्राणि दुर्जनानां मनांसि न । आर्जवेनार्पयत्येव स्वकीयं मानसं परम् ॥ १०१ 33
ततस्तयोः सज्जनदुर्जनयोः प्राज्ञमन्दयोरिव मरालबकयोरिव भद्रगजबर्बरकूलगजयोरिव स्वभावेन
स्थाणोः कैतवेन मायादित्यस्य तु मिथः प्रीतिरवर्धत । अन्यदा विश्वस्तचेतसावन्योन्यं विविधान्
36 धनोपार्जनोपायान् परिकल्प्य स्वजनवर्गं परिपृच्छय कृतमङ्गलोपचारौ गृहीतपाथेयौ दक्षिणदिशाभिमुखं 36
जग्मतुः । तत्र ताभ्यामनेकगिरिसरिच्छाखिश्वापदसंकुलं वनं दुर्लङ्घ्यमुल्लङ्घ्य स्वर्गपुरप्रतिष्ठं प्रतिष्ठान-
पुरमवाप्य विविधवाणिज्यादि कर्म कुर्वाणाभ्यां कथंचित्प्रत्येकं पञ्च काञ्चनसहस्री समुपार्जिता । ततस्तौ
39 'द्रव्यमेतच्चौरभिल्लजनेभ्यः परित्रातुं दुष्करम्' इति विचिन्त्य स्वदेशं प्रति गमनसमुत्सुकमनसौ दश 39
सुवर्णसहस्र्या दश रत्नीं स्वीकृत्य जरच्चीराञ्चले बद्ध्वा मुण्डितमस्तकौ प्रावृतधातुरक्तवाससौ विरचितदूर-
तीर्थयात्रिकलोकवेषौ भिक्षां याचमानौ क्वापि मूल्येन क्वापि सत्रागारेष्वश्नतौ कमपि संनिवेशमीयतुः ।

1 ) P B °माधेयं । यल्लोहचणकक्षक्षणं न पुनर्जिन· 4 ) B C om. इति· 12 ) P वयं कोपि पुरुषः B वयं कोपि स पुरुषः· 13 ) P B पाश्चात्यभागे· 14 ) P B °विना पूर्वं यत्कृतं. 15 ) P B काशदेशो· 19 ) P B omit या, B तिरस्कृताऽनल्पकंदर्प्पदर्प्पस्य. 25 ) P °गंगादेव्याख्यः. 34 ) B दुर्जनयोः चंदनतरुपिचुमंदयोरिव· 37 ) B adds नदी after गिरि, P om. पुरप्रतिष्ठं etc. ending with द्रव्य.

1 तत्रोक्तं स्थाणुना। 'भो मित्र, मार्गश्रमखिन्नदेहो भिक्षायै गन्तुं न शक्नोमीति तदद्य निरवद्या मण्डका एव भक्ष्यन्ते।' तच्छ्रुत्वा मायादित्यः प्रोचे। 'त्वमेव पत्तनान्तःप्रविश्य मण्डकान् कारय, नास्मिन्नर्थे
3 निपुणो ऽस्मि, परं त्वरितमागन्तव्यम्।' स्थाणुना भणितम्। 'भवत्वेवं कथमयं रत्नग्रन्थिः क्रियताम्।' मायादित्यो जगाद। 'कस्तावज्जानाति नगरव्यवहारं तस्मात्को ऽप्यपायो भविष्यति तव प्रविष्टस्येति ममैव पार्श्वे रत्नग्रन्थिस्तिष्ठतु।' स्थाणुस्तस्य करे रत्नग्रन्थिमर्पयित्वा पुरं प्रविवेश। चिन्तितं च
6 मायादित्येन। 'यदि केनाप्युपायेन रत्नग्रन्थिरसौ ममैव भवति तत्कृतार्थपरिश्रमः स्याम्' इति विचिन्त्य प्रत्युत्पन्नपापमतिना तेन मायिना सत्यरत्नग्रन्थिप्रतिरूपो द्वितीयः पाषाणशकलग्रन्थिः कृतः। तदा च 'कान्दविकापणेष्वनुद्घाटः' इत्यकारितमण्डक एव स्थाणुरायातः। भणितं स्थाणुना। 'मित्र, कथमद्य भय-
9 भ्रान्तविलोचन इव भवान् लक्ष्यते।' मायादित्येन निवेदितम्। 'मया त्वं सम्यक् समागच्छन्नत्र नावगतः किंतु चौर इति ज्ञातमतो बिभ्यदस्मि, न कार्यममुना रत्नग्रन्थिना।' एवं वदता तेन मायाविना गमनाकुलितचेतसा पुनर्विरचितं सत्यरत्नग्रन्थिं तस्य समर्प्य स्वयमसत्यरत्नग्रन्थिं स्वीकृत्य 'अहं भिक्षायै
12 गच्छामि' इति कपटेन भणित्वाहोरात्रेण द्वादश योजनान्यतिक्रम्य यावद्रत्नग्रन्थिर्विलोकितस्तावत्केवलं पाषाणखण्डान्येव दृष्टानि। तन्निरीक्षणे वञ्चित इव मुषित इव स बभूव। ततस्तस्य पार्श्वतः सत्यरत्न-ग्रन्थिग्रहणाय पुनरपि कूटकपटधारी चिरं सर्वत्र बभ्राम। स स्थाणुर्मित्रमार्गान्वेषणं चिरं चकार, परं स
15 न मिलितः। ततो ऽनेकधा विलप्य मित्रगुणं संस्मृत्य तेन दिनः समतिक्रमितः। रात्रौ पुनः कुत्रापि देवकुलान्तः सुप्तः।

§ २०) पाश्चात्ययामे केनापि गूर्जरपथिकेन गीतम्।

18 'धवल इव यो ऽत्र विधुरे स्वजनो नो भारकर्षणे प्रवणः। स च गोष्ठाङ्गणभूतलविभूषणं केवलं भवति॥' १०२
इति सूक्तं श्रुत्वा स्थाणोरपि श्लोक एकः स्मृतिमायातवान्।

'अथ क्षितौ विपत्तौ च दुःसहे विरहे ऽपि च। ये ऽत्यन्तधीरताभाजस्ते नरा इतरे स्त्रियः॥' १०३

21 तां रात्रिमतिक्रम्य तेन चिन्तितम्। 'यदि मृतं मम मित्रं भवति तदास्य मानुषाणां रत्नानि पञ्च समर्पयामि' इति पुनः कृतमतिः स्थाणुः स्वनगरं प्रति चचाल। व्रजतस्तस्य स्थाणोः क्रमेण नर्मदातीरे स मायादित्यो विलक्ष्यास्यो निःश्रीकशरीरो लोचनगोचरमुपाजगाम। ततस्तेन स्थाणुं मित्रं वीक्ष्य
24 गाढमवगूह्य च कपटेनालीकवृत्तान्तो निवेदितुमारेभे। 'मित्र, तदा तव सकाशादहं निर्गत्य गेहं गेहं परिभ्रममाणो धनिनः कस्यापि वेश्मनि प्रविष्टः, तत्र मयालब्धायां भिक्षायां किंचित्कालं यावत्स्थितं तावत्तत्पदातिभिः क्रोधान्धैः साक्षाद् यमदूतैरिव चौर इति भणद्भिर्विविधैः प्रहारैर्मार्यमाणो ऽहं
27 गृहस्वामिनः सकाशे नीतः। तेन समादिष्टम्। 'भव्यं कृतमेष धृतो यदनेनास्माकं कुण्डलमपहृतम्। तावत्सर्वथायं यत्नेन ध्रियतां यावद्राजकुले निवेदये।' ततो मया चिन्तितम्।

'भुजङ्गगतिवद्वक्रचित्तेन विधिना नृणाम्। अन्यथा चिन्तितं कार्यमन्यथैव विधीयते॥' १०४

30 § २१) ततो ऽकृतापराधो विलपन् वेश्मनः कोणे तैर्निक्षिप्तः। तत्र स्थितस्य दुःखार्तस्य मे दिवसो व्यतीतः। संप्राप्ता रात्रिः। सा तु स्वप्नसंजातभवत्समागमसंभूतसुखपरम्परासु स्थितस्य मम त्वरितमेव निष्पुण्यकस्य लक्ष्मीरिव क्षणदा क्षयमाप। संप्राप्तो ऽपरो दिवसः। तत्र मध्याह्नसमये कापि नायिका
33 अनुकम्पया मम योग्यमाहारमानिनाय। सापि मां रमणीयरूपं विलोक्यानुरागवती संजाता। विजनीभूते च तत्र सा मया पृष्टा 'भद्रे, त्वां पृच्छामि यदि स्फुटं सर्वमपि निवेदयसि'। तयोक्तं 'वरेण्य, निखिलमपि निवेदयिष्ये'। मयोचे 'किमहं निर्मन्तुः पदातिभिर्गृहीतः'। तया जल्पितम्। 'सुभग, एतस्यां
36 नवम्यां मद्भर्ता देवताराधननिमित्तं मलिम्लुचो ऽयमिति च्छद्मना स्वीकृतं त्वां देव्यै बलिं दास्यति।' ततो मयाधिकजातजीवितान्तभयेन पुनः पृष्टा 'कथय मम को ऽपि जीवनोपायो ऽस्ति।' तया कथितम्। 'नास्ति तव जीवनोपायः, न पुनः स्वस्वामिनो द्रोहं करोमि, परं तथापि त्वयि मम महान् स्नेहः, ततो
39 वचः शृणु। अथ नवम्यां सकलो ऽपि परिच्छदो मत्स्वामिना सह तीर्थभुवि स्नातुं यास्यति तदा तव रक्षपालो ऽप्येको द्वौ वा भाविनौ।' इत्याकर्ण्य प्रस्तावं परिलभ्य गृहादहं निःसृत्य केनाप्यवीक्ष्यमाणः स्थाने स्थाने त्वां विलोकयन् सरलबहलवानीरे रेवातीरे यावदायातस्तावत्त्वं दृष्टः। मित्र, तव
42 दुस्सहवियोगे एतन्मयानुभूतम्।' एतद्वृत्तान्तं निशम्य सम्यग्बाष्पजलप्लुतलोचनः स्थाणुः समजनि।

8) R °णेषु तद्घोट इत्यकारित. 10) B चौर इति ज्ञातः। अतो. 11) B om. सत्यरत्नग्रन्थिं तस्य समर्प्य स्वय,मं P स्वीकृत्याह॥ भिक्षायै. 12) P om. °र्विलोकितस्तावत्के etc. ending with सत्यरत्नग्रन्थि. 22) B व्रजतस्तेन स्थाणोः. 23) P निःश्रीकशरीरलोचन. 28) P ध्रियतां. 30) P om. °स्य दुःखार्तस्य etc. ending with दिवसः। तत्र. 33) B om. मम. 37) C inter. पुनः & पृष्टा. 38) P परं तं पि. 41) P B दृष्टः। एतद् दुःसहविरहवियोगे मित्र मयानुभूतं। तद् वृत्तांतं ( twice in P ) निशम्य.

1 ततो द्वावपि धौतवदनौ कृताहारक्रियौ प्रचलितौ। ततो मार्गभ्रष्टौ दिङ्मोहितचित्तौ भयभ्रान्तदृशौ च 1
संसार इव दुस्तरे कान्तारे विविशतुः। 'कुत्रागतौ, कुत्र गमिष्यावः' इति तौ न जानीतः। स्थाणुना
3 भणितम्। 'क्षुधाधिकं मां बाधते तत्त्वं रत्नग्रन्थिं गृहाण, कदाचिन्मम पार्श्वात्पतिष्यतीति समर्पितो ऽनेन 3
रत्नग्रन्थिः।' चिन्तितं च मायादित्येन। 'अहो, यन्मम कर्तव्यमस्ति तदमुना स्वयमेव कृतम्। ततो मध्याह्ने
ललाटंतपतपने ऽतीवतृष्णातरलितौ पानीयं सर्वत्र पश्यन्तौ वटपादपाधस्तादवटं ददृशतुः।
6 ततश्चिन्तितं तेन दुष्टबुद्धिना 'सांप्रतमस्यैव कूपपातनमेवानपाय उपायः'। भणितं मायादित्येन। 'स्थाणो, 6
कूपे कियत्प्रमाणं पयः, विलोक्य कथ्यताम्, यथा तदनुमानेन दृढां वल्लीतन्तुभिर्दृढां रज्जुं करोमि।' स
तु महानुभावो ऽवक्रहृदयः पयःप्रमाणवीक्षाकृते प्रवृत्तः। ततस्तेन मोहमोहितचेतनेन मायाविनानपेक्ष्य
9 लज्जामवमत्य प्रीतिमनालोच्य दाक्षिण्यमविचार्य परलोकमविचिन्त्य सज्जनमार्गं स्थाणुर्नीरं निरीक्षमाणः 9
कूपे न्यक्षेपि। स च कूपे दलतृणचयचिते जम्बालान्तः पतितो ऽपि तथाविधां बाधां देहे न सेहे।
ततस्तेन विश्वस्तचेतसा चिन्तितम्। 'अहो, पूर्वं दारिद्र्यम्, ततः कान्तारान्तः परिभ्रमणम्, तत्रापि
12 प्रियमित्रवियोगः, एतत्रितयमपि पापिना विधिना विरचितमेव। अहमत्र केन निर्दयहृदयेन क्षिप्तः। 12
अत्र मायादित्य एव समीपवर्ती नान्यः। कथमेतेनास्मि पातितः। अथवा नैतत् संवादि, दुष्टं मया
खलु चिन्तितम्।

15 कदाचिद्वायुना स्वर्णशैलचूलापि कम्पते। उदेत्यंशुः प्रतीच्यां च न मित्रं तनुते त्विदम्॥ १०५ 15

धिगहो, ममापि हृदयस्यानल्पविकल्पसंकल्पः। ततः केनापि राक्षसेन वा पिशाचेन वा पूर्ववैरिणा
क्षिप्तो ऽस्मि।' स्थाणुरेवं विचिन्त्य स्वस्थचित्तस्तस्यामप्यवस्थायां तस्थौ। प्रकृतिरेवेदृशी सज्जनानाम्।
18 चिन्तितं मायादित्येन। 'अहो, यत्कर्तव्यं तत्कृतमेव। सांप्रतं दशानां रत्नानां फलं गृह्णामि' इति 18
चिन्तयन् मायादित्यो वनान्तः परिभ्रमन् चौरसेनापतिना वीक्षितो धृतश्च रत्नानि च गृहीतानि।

§ २२) अथ चौरपतिः कथंचिद्भवितव्यतयानन्ययोदन्यया बाधितस्तमेव विशङ्कटावटतटमवाप।
21 समादिष्टं पल्लीस्वामिना 'भो भोः, कूपात्पयः कर्षत'। इत्याकर्ण्य तैः कूपे पयःकर्षणाय वल्लीवरत्रया 21
ग्रावगर्भः पलाशदलपुटकः क्षिप्तः। कूपान्तःस्थेन स्थाणुना तं वीक्ष्य महता शब्देन गदितम्। 'केनापि
दैवदुर्योगतः कूपे ऽत्र क्षिप्तः, ततो मामप्युत्तारयत।' तैः सेनानायकस्य पुरो विज्ञप्तम्। 'यत्केनाप्यत्र
24 जीर्णकूपे पुमानेकः पातितो ऽस्ति।' सेनापतिना जगदे।' 'भो भोः, अलमलं जलाकर्षेण, प्रथमं तमेव 24
वराकं कर्षत।' ततस्तदादेशवशंवदैस्त्वरितमेव स्थाणुः कूपतः कर्षितः। सेनापतिस्तं बभाषे 'भद्र
कुत्रत्यस्त्वं, कुतः समायातः, किमभिधानः, कथं जीर्णावटे निपातितः।' भणितं चानेन। 'देव, पूर्वदेशात
27 आवां द्वौ जनौ दक्षिणाशामाश्रित्य कियता कालेन पञ्च रत्नान्युपार्ज्य मुदितमानसौ स्वगृहं प्रतिगच्छन्तौ 27
मार्गपरिभ्रष्टौ तृषातरलितचित्तावेतस्यामटव्यां प्रविष्टौ। तत आवाभ्यां तृषातुराभ्यां जीर्णकूपो दृष्टः। अतः
परं देव, न किमपि सम्यग् जाने, यदस्मि केनापि पातित इत्यवैमि। परं यद्भवता कृपावता कूपात्संसारा-
30 दिव गुरुणा प्राणी सद्धर्मवचनोपदेशेनाकर्षितः।' एतदाकर्ण्य सेनापतिनोक्तम्। 'केवलं तेन दुराचारेण 30
भवान्निक्षिप्तः।' स्थाणुना भणितम्। 'नहि नहि शान्तं पापम्। स कथं मयि जीवितादप्यधिकः प्रियो
वयस्यः श्वपच इव दुश्चरितमाचरति।' सेनापतिना जल्पितं 'स तावत्कुत्रास्ते'। स्थाणुना जगदे 'सांप्रतं
33 नावगच्छामि'। अथ सर्वैरपि परिमोषिभिः परस्परं सहास्यमास्यं निर्माय भणितम्। 'यदयं वराकः 33
सर्वदैवावक्रचित्तः सद्भावः किमपि न जानाति स्वस्य शुद्धचित्ततया।' ततः पल्लीपतिरुवाच। 'सांप्रतमिदं
स एवास्य वयस्यो भविष्यति, यस्यामूनि रत्नान्यस्माभिर्गृहीतानि।' चौरैरुक्तं 'देव, संभाव्यत एतत्'।
36 अथ स पृष्टः 'कथय स कीदृशस्तव वयस्यः'। स्थाणुना भणितम्। 'देव, कृष्णवर्णः पिङ्गललोचनः 36
कृशाङ्गो मम वयस्यः।' सेनाधिपेनोक्तम्। 'भद्र, त्वया लक्षणसंपूर्णः सुहृल्लब्धो येन कूपे भवान्
पातितः। त्वं प्रत्यभिजानासि स्वानि रत्नानि दृष्टानि।' तेनोक्तं 'उपलक्षयामि'। ततस्तेन तस्य
39 रत्नानि दर्शितानि। तेन तान्यात्मीयानि परिज्ञाय जल्पितम्। 'कुत्र कदा वा रत्नानि प्राप्तानि, कथं 39
मन्मित्रं व्यापाद्याङ्गीकृतानि।' तैरुक्तम्। भवन्मित्रं न विनाशितम्, केवलं रत्नानि स्वीकृत्य नियम्य च

1 > P om. च. 5 > P B सर्वत्रैव. 7 > P B यथास्मि तदनुमानेन. 12 > P एतत्त्रितयपापिना. 13 > P अथवा न तमेतद्वृत्ता संवादि दुष्टं मया, B अथवा नूनमेतद्वृत्ताऽसंवादि. 16 > O संकल्पम्. 20 > M om. तट. 29 > P om. न, P om. कृपावता. 31 > P B प्रिये वयस्ये श्वपच. 36 > B om. स after कथय. 37 > P सेनाधिपत्येनोक्तम्.

स मुक्तः।' तेन सेनापतिना सदयेन स्थाणोः पञ्च रत्नान्यर्पयांचक्रे। तेन मित्रं विलोकमानेनैकस्मिन् वनगहने दृढवल्लीसंदानितबाहुलतो नियमितचरणयुगः पोट्टल इव निबद्धो ऽधोमुखो वीक्षितः। तं विगतबन्धं विधाय हाहारवं कुर्वाणः स्थाणुः सानुकम्पः प्रोवाच। 'मया रत्नानि पञ्च व्यावृत्य लब्धानि। तव सार्धं रत्नद्वयं ममापि च। त्वं पुनर्मनसि विषादं मा विदधीथाः।' इति भणित्वा स्थाणुना कान्तारपर्यन्तग्रामसीमां स समानिन्ये। तत्र तावदुपचारवृत्त्या स मायादित्यः कियद्भिरपि दिनैर्निर्व्यूढव्रणः समजनि। चिन्तितं च मायादित्येन। 'यदयं ममेदृशचेष्टितस्यापि परोपकारीति। ततो मया किं कर्तव्यम्, यन्मया मायाविना प्रथमं रत्नस्वीकारेण ततः कूपान्तर्निक्षेपेणालीकवचोभिश्च वयस्यो विप्रतारितः, ततो मम नरके ऽपि न निवासः, तस्माद् ज्वलनं प्रविश्यात्मानं काञ्चनमिवाशुशुक्षणौ विमलीकरिष्ये।' ततो ऽतीवमित्रवञ्चनालक्षणचिन्तासंतापपरायणश्चितानलं प्रवेष्टुं स्थाणुना ग्रामजनेन च निवार्यमाणो ऽपि मायादित्यः समीहिवान्। ततो ग्राममहत्तरैरनेकैर्वाक्यैः प्रतिबोधितः। ततः स्वमित्रवञ्चनसमुद्भूतपापनिराकरणाय स्थाणुना मित्रेणानुगम्यमानः सर्वाणि तीर्थानि लोकप्रसिद्ध्या समाराधयन् स मायादित्यः समागत्येह समुपविष्टो ऽस्ति। ततो मायादित्यः श्रीधर्मनन्दनगुरोर्मुखतः स्वं वृत्तान्तमवगम्य बभाण। 'यन्मया मायामोहितचेतसा स्वमित्रद्रोहिता कृता तदपगमनाय प्रसादं विधाय प्रभो, प्रभो दयावास, सिद्धिनिवासभुवं प्रव्रज्यां मह्यं देहि।' ततो भगवता धर्मनन्दनेन ज्ञानातिशयेन विलोक्योपशान्तमायाकषायप्रचारः स मायादित्यः श्रीतीर्थनाथप्रणीतप्रतीतयथोक्तविधिना प्रव्राजितः।

। इति मायायां मायादित्यकथा।

§२३) चारुचारित्रमलयाचलचन्दनेन गुरुणा श्रीधर्मनन्दनेन पुनरूचे।

न वर्जयति लोभं यः क्रोधादिरहितो ऽपि हि। निमज्जति भवाम्भोधौ स कालायसगोलवत्॥ १०६
जीवाः संसारकान्तारे विवेकप्राणहारिणा। स्पष्टं लोभाहिना दष्टा जानते न हिताहितम्॥ १०७
सलोभे मानवे सद्यो निर्मलापि गुणावली। विलीयते ऽग्निसंतप्ते लोहे तोयच्छटा यथा॥ १०८
प्रचुरैर्नीरधिर्नीरैरिन्धनैर्धूमकेतनः। न तुष्यति यथा जन्तुर्धनैरपि धनैस्तथा॥ १०९

लोभपरवशः प्राणी द्रव्यं नाशयति, मित्रं च हन्ति, दुःखाम्बुधौ निपतति च। पार्थिव, यथैष पुरुषः।' राज्ञा विज्ञप्तं 'भगवन्, स कः पुरुषः, किमेतेन कृतम्'। समादिष्टं भगवता। 'यस्तव पृष्ठिभागे वामे वासवस्योपविष्टो ऽतिकृशशरीरः केवलमस्थिपञ्जर इव रूपेण मूर्तो लोभ इव। नरेश्वर, अमुना लोभाभिभूतेन यत्कृतं तदेकचित्ततया श्रूयताम्। तथा हि। इहैव जम्बूद्वीपे द्वीपे भरतक्षेत्रे मध्यमखण्डे

समस्ति नगरी सौवरामणीयकसंपदा। स्वःपुरस्तन्वती तक्षशिला मनसि लाघवम्॥ ११०
कपिशीर्षावलीकम्रवप्रव्याजेन भोगिराट्। सहस्रशीर्षः सौन्दर्यं यस्या द्रष्टुमुपागतः॥ १११
प्राकारः स्फाटिको यत्र परिखाम्बुनि बिम्बितः। भोगावतीनिरीक्षार्थं विशतीव रसातलम्॥ ११२
सुजातिरम्याः सुशिवाः सदारम्भा वृषाश्रयाः। स्वभयाः स्वशना यत्रोद्याना इव जना बभुः॥ ११३
प्रासादा यत्र राजन्ते महाराजतनिर्मिताः। क्रीडानिमित्तमायाता मेरोरिव कुमारकाः॥ ११४
असंख्यातहरिख्यातां सदा जयविराजिताम्। यां पुरीं स्वःपुरी वीक्ष्य ह्रियेवादृश्यतामगात्॥ ११५
श्रीनाभेयपदस्थाने धर्मचक्रं मणीमयम्। श्रीबाहुबलिना यत्र सहस्रारं विनिर्ममे॥ ११६

यत्र शोभन्ते परमस्नेहलालसचेतसो जना अनगाराश्च सदा परमदारं सदारागपरं सदाहारसारं विभविवृन्दं मुनिमण्डलं चेति। तस्याः पुर्याः पश्चिमदक्षिणयोरन्तराले दिग्विभागे समुच्चधान्यकूटाभिराम उच्चलाख्यो ग्रामः। तस्मिन् शुद्धवंशभवो धनदेवाभिधः सार्थपतिपुत्रः परिवसति। परैः सार्थपतिपुत्रैः सह तस्य क्रीडां कुर्वतः कियानपि कालो व्यतिचक्राम।

§२४) स धनदेवः स्वभावत एव लोभदत्तचित्तः सततमेव वञ्चकशिरोमणिरलीकवचनभाषी परद्रव्यापहारी। ततस्तस्येदृशस्य तैः सार्थनाथतनुजैर्धनदेव इति नाम निराकृत्य लोभदेव इत्यभिधा विदधे।

---

10 > P B om. ततः. 11 > P B °गम्यमानस्तीर्थां सव्वाणि लोक°. 17 > P B omit गुरुणा श्री. 26 > B तक्षसिला. 28 > B has (on भोगावती) a marginal gloss, नागपुरी. 29 > On. सुजाति etc. B has a marginal gloss: जातिर्गोत्रं मालती च। सुष्ठु शिवं कल्याणं येषां, द्वि० शोभनाः शिवाः पुण्डरीका वृक्षाः सहकारा यत्र। सत्प्रधान आरंभो येषां ते तथा। सदारंभाः कदल्यो येषु॥ सुष्ठु निर्भयाः शोभना हरीतक्यो यत्र। शोभनं अशनं भोजनं द्वि० ऽशना वृक्षविशेषा यत्र॥. 31 > B has a marginal gloss on असंख्यात etc. असंख्यातैर्हरिभिरश्वैः प्रसिद्धां = जय इंद्रपुत्रः सकसन्विह्नवति कदापिनेत्यर्थः [?]. 33 > P B om. यत्र B has a gloss ( on परं ): परं केवलं अस्नेहमुनयः. 38 > P repeats ( after गुरुजनमनुज्ञाप्य ) लोभदेव इत्यभिधा etc. ending with गुरुजनमनुज्ञाप्य.

ततस्तस्य तारुण्यपुण्यावयवस्य मानसमतीव लोभाभिभूतमभूत् । अन्यदा द्रव्योपार्जनप्रगुणितचित्तो गुरुजनमनुज्ञाप्य लोभदेवस्तुरङ्गानुत्तुङ्गान् सज्जीकृत्य वाहनानि च स्वीकृत्य पाथेयं संगृह्य मित्रवर्गमापृच्छ्य तिथिकरणनक्षत्रपवित्रे मुहूर्ते चन्द्रबले वरलग्ने स्वामिना वीक्षिते स्नानं विधाय देवतार्चनं निर्माय च वहन्नाडिकादत्तपदः स्वजनेनानुगम्यमानः प्रमुदितवदनो दक्षिणाशां प्रति प्रचलितः । जनकेनोक्तम् । 'वत्स, तवाधीतसर्वशास्त्रस्य माणिक्यस्य घटनमिव भारत्याः पाठनमिव मौक्तिकानामुत्तेजनमिव सर्वथा शिक्षावचः कीदृग्, तथापि स्नेहमोहितचेतसा मया त्वां प्रति किंचिदुच्यते । 'पुत्र, दवीयो देशान्तरं, विषमा मार्गाः, कुटिलहृदया लोकाः, वञ्चनप्रगुणाः कामिन्यः, घनतरा दुर्जनाः, विरलाः सज्जनाः, दुष्परिपाल्यं क्रयाणकम्, दुर्धरं यौवनम्, विषमा कार्यगतिः, तावत्त्वया सर्वथैव क्वचन पण्डितेन, क्वचन मूर्खेण, क्वचन दयालुना, क्वचन निष्कृपेण, क्वचन सूरेण, क्वचन कातरेण मार्गो निर्गमनीयः ।' इति शिक्षावचोभिः सुतममन्दानन्दसंदोहमुग्धदुग्धाब्धिमध्यस्थं परिगलन्नयनयुगलजलं पिता विदधे । लोभदेवः कतिपयैरप्यनवरतप्रयाणकैर्दक्षिणापथमाश्रित्य कियतापि कालेन सोपारकपत्तनं प्राप्तवान् ।

यत्रोत्पातः पतङ्गेषु वक्रता भ्रूषु योषिताम् । प्रकम्पश्च पताकानां जनानां न कदाचन ॥ ११७
प्रामाणिकेषु संवादः कन्यासु करपीडनम् । मथनं च दधिष्वेव भङ्गः पूगीफलेषु च ॥ ११८
सम्यग्भवोच्छित्तिविधौ नितान्तं सद्धर्मकर्माहितचेतसो ऽपि ।
शिवार्थिनो यत्र जना यतन्ते कुर्मः स्तुतिं कां नगरस्य तस्य ॥ ११९

यत्र विश्वोल्लासियशोदयापरिगतो जनार्दन इव जनः सर्वमङ्गलोपचारचारश्च, पार्वतीपतिरिव विमोहयति संगतो गणिकागणो धार्मिकलोकश्च । तत्र जीर्णश्रेष्ठिनो रुद्राभिधानस्य गुणश्रेणिनिधानस्य वेश्मनि वसता कियतापि कालेन तुरङ्गान् विक्रीयाधिकं धनमुपार्ज्य लोभदेवेन स्वगृहागमनोत्सुकमनसा बभूवे । तत्रायमाचारः । 'ये केचिद्वणिजस्तत्रत्या देशान्तरागता वा सायं ते सर्वे मिलित्वा परस्परप्रीतिपूर्वकं क्रयविक्रयादिकेन किमुपार्जितम्, किं किं पण्यमद्य देशान्तरादागतम्' इति वार्तां वितन्वते । गन्धताम्बूलमाल्यादि परस्परं प्रयच्छन्ति ।

§२५) अन्यदा स लोभदेवस्तत्रैवोपविष्टस्तदा केनापि 'क्वापि देशान्तरे किमप्यल्पमूल्येन वस्तुनानल्पमूल्यं वस्तु प्राप्यते' इत्याचचक्षे । अथ केनचिद्वणिजा गोष्ठ्यन्तःस्थेन प्रोक्तम् । 'यदहं दुस्तरं वारिधिमुल्लङ्घ्य रत्नद्वीपमगमम् । तत्र मया पिचुमन्दपत्राणि दत्त्वा रत्नानि स्वीचक्रिरे । एवं विक्रयक्रयं विरचय्य व्यावृत्य क्षेमतयात्राहमागतः ।' इमां वार्तां श्रुत्वा लोभतत्त्वाहितमनसा लोभदेवेन स्ववेश्मगमनाभिप्रायं विमुच्य पुनर्नवीनद्रविणार्जनहेतवे चेतश्चक्रे । ततो निजवेश्मागत्य निर्मितस्नानभोजनो यथाश्रुतं लोभदेवः श्रेष्ठिरुद्रस्य पुरः कथयामास । 'तात रुद्र, तत्र रत्नद्वीपे गतानां महाँल्लाभ उत्पद्यते, यत्र निम्बपत्रै रत्नान्येतानि प्राप्यन्ते । ततः किं मया न तत्र समुद्यमः क्रियते ।' रुद्रश्रेष्ठिनादिष्टम् 'वत्स, यावन्मात्रो मनोरथो ऽर्थकामयोर्विधीयते तावन्मात्र एव प्रसरति, 'लाभाल्लोभो हि वर्धते' इति न्यायात् । अग्रेतनमर्थसंचयं स्वीकृत्य स्वदेशं गच्छ । किं च बहुलापायं जलधेरुल्लङ्घनम् । ततो ऽधिकलोभे मनो मा विधेहि । एतदेव द्रविणं यथेच्छं भुङ्क्ष्व । दीनादीनां दानं ददस्व । दुर्गतं जातिसंबद्धं च समुद्धर । सर्वथैव धनस्य फलं गृहाण । निगृहाण च समधिकद्रव्यार्जनलक्षणं लोभराक्षसम् ।' एतदाकर्ण्य लोभदेवेन जल्पितम् ।

'यः कार्ये दुर्गमे धीरः कार्यारम्भं न मुञ्चति । वक्षो ऽभिसारिकेव श्रीस्तस्य संश्रयते मुदा ॥ १२०

तथा तात, प्रारब्धकार्यनिर्वाहिमनसा पुंसा भवितव्यम् । त्वमपि मया सह रत्नद्वीपमागच्छ ।' श्रेष्ठिना भणितं 'ममागमनं न भावि केवलं त्वमेव व्रज' । लोभदेवेनोक्तम् 'कथं भवतस्तत्र गमनं न संपद्यते तन्निवेदय ।' रुद्रश्रेष्ठी प्रोवाच । 'यदहं सप्तकृत्वः समुद्रान्तर्यानपात्रेण प्रविष्टः, परं सप्तकृत्वो ऽपि मम वाहनं भग्नम्, तावदहं नार्थस्यैतस्य भाजनम् ।' लोभदेवेन जल्पितम् । 'घर्मांशोरपि प्रतिदिनमुदयाधिरोहप्रतापपतनानि किं पुनर्नान्यस्य इति परिभाव्य सर्वथैव कमलायाः समुपार्जने सावधानमनसा भाव्यम् । त्वया रत्नद्वीपे मया सह समागन्तव्यमेव ।' श्रेष्ठी जगाद पुनः । 'वत्स, त्वां प्रति सांप्रतं किंचिद्वदामि, अत्र यानपात्रे त्वमेव क्रयाणकनेता, अहं पुनर्मन्दभाग्यः' इति । ततस्तेन तदेवाङ्गीकृतम् ।

4 > P दिशि for प्रति. 8 > C G अतस्त्वया for तावत्त्वया. 9 > P B मूर्षेण for मूर्खेण. 15 > B has a marginal gloss on शिवार्थिनो etc. thus: विरोधोयं शिवार्थिन ईश्वरभक्तास्ते भवस्येश्वरस्योच्छेदविधौ कथं यत्नं कुर्वंति विरोध ( जंग ) श्चेत्थं शिवार्थिनो मोक्षार्थिनः । संसारोच्छेदविधौ. 17 > B has a marginal gloss (on विमोहयति) thus: मोहमूढं कारयति पक्षे विगतमोहं करोति । संगमात् पक्षे संगतो मिलितः ।. 18 > P स्वगृहगमनो°. 19 > P तत्राधमाचा°, P देशांतरानागता, B देशांतरादागता, P B om. सर्वे, C परस्परं. 23 > P यदसि दुस्तरवारिधि° B यदसि दुत्तरवारिधि°, P एनं विक्रयं क्रयं. 25 > P B स्ववेश्मगमनं विमुच्य, C ततो विजोत्तारके समागत्य निर्मित. 28 > P adds न before समुद्यमः. 34 > P समं for सह.

§२६) अथ सज्जीकृतं यानपात्रम्। गृह्यन्ते क्रयाणकानि। उपचर्यन्ते निर्यामकाः। निर्णीयते निमित्तविद्भिर्यात्रादिवसः। स्थाप्यते लग्नम्। निरूप्यन्ते निमित्तानि। विलोक्यन्ते उपश्रुतयः। संमान्यन्ते विशिष्टजनाः। अर्घ्यन्ते देवताः। सज्जीक्रियते सितपटः। ऊर्द्ध्वः क्रियते कूपस्तम्भः। संगृह्यते काष्ठसंचयः। स्थाप्यते परिग्रहः। आरोप्यते भक्तम्। भ्रियन्ते जलभाजनानि। एवं कुर्वतस्तस्य समागतो यात्रादिनः। तत्र च तौ कृतमज्जनौ मुदितचेतसौ सुमनोमालाविलेपनवासो ऽलङ्कारालंकृतौ द्वावपि सपरिजनौ यानपात्रमारुरुहतुः। चलितं यानपात्रम्। वादितानि तूर्याणि। चालितान्यरित्राणि। ततः प्रावर्तत गन्तुं जलधौ यानपात्रम्। अनुकूलो वायुर्ववौ। कियतापि कालेन वहनं रत्नद्वीपं ययौ। तस्मात्तावुत्तीर्यातीव रम्यतमं प्राभृतं गृहीत्वा भूपचरणयुगलमभिगम्य लब्धप्रसादविशदमानसौ क्रयविक्रयं विरचय्य व्यावृत्य निजकूलाभिमुखमुत्सुकौ प्रचेलतुः। अनुकूलवायुना वहनं प्रेर्यमाणं समुद्रान्तः परिवीक्ष्य लोभदेवेन व्यचिन्ति। 'अहो, प्राप्तो मनोरथादधिकतरो लाभः। संभृतं च रत्नैर्यानपात्रम्। तावत्तटं प्राप्तस्य वहनस्यैष मम भागी भावीति न सुन्दरमेतत्।' इति चिंतयन् लोभदेवो ऽवगणय्य दाक्षिण्यं समवलम्ब्य निष्करुणत्वं शरीरचिन्तायां समुपविष्टं रुद्रश्रेष्ठिनं जलधौ पातयामास। तस्मिन् यानपात्रे योजनत्रयमतिक्रान्ते लोभदेवेन महता शब्देन पूच्चक्रे 'अये, धावत धावत, मम वयस्यो दुरुत्तारे प्रचुरमकरघोरे सागरे पपातेति।' इत्याकर्ण्य निर्यामकलोकः परिजनश्च वीक्षितुं प्रवृत्तः। तैरुक्तं 'कुत्र पपात'। तेन निगदितम्। 'अत्रैव पतितो मन्ये मकरेण गिलितश्च। मया जीवतापि किम्। अहमपि तद्वियोगं दुस्सहमसहमानः प्राणत्यागं विधास्ये।' एतन्निशम्य सत्यं विमर्श्य कर्णधारकैः परिजनेन च प्रबोध्य स्थापितः। यानपात्रमपि प्रचलितम्। स रुद्रश्रेष्ठी अकामनिर्जरया जलधौ महामकरवदनकुहरदंष्ट्राक्रकचगोचरीभूतो ऽवसानं प्राप्य रत्नप्रभापृथ्व्याः प्रथमे योजनसहस्रे व्यन्तरभवने ऽल्पैश्वर्यपरो राक्षस उत्पेदे। तत्र तेन विभङ्गज्ञानवशातो मकरेण गिलितमात्मकायं गच्छद्यानपात्रं च विलोक्य चिन्तितम्। 'अरे, एतेन पापिना लोभदेवेनाहमत्र प्रक्षिप्तः। अहो, दुराचारस्यास्य साहसम्। न गणितः स्नेहसंबन्धः। न धृतश्चित्ते परोपकारः। न कृतं सौजन्यम्।' इति चिन्तयतस्तस्यानल्पः कोपानलो जज्वाल। एतेनेति चिन्तितम्। 'यदमुं व्यापाद्य सद्यः सर्वस्यार्थस्य भाजनं भविष्यामि। तत्तथा करिष्ये यथैतस्यापि नान्यस्य वा भवति।' इति चिन्तयित्वा राक्षसो मध्ये समुद्रमाययौ। तत्र बहित्रं विलोक्य कौणपः प्रतिकूलमुपसर्गं कर्तुमारब्धवान्।

§२७) अथाभूच्छ्यामलं मेघमण्डलं मरुद्ध्वनि। रुद्राभिधानं वीक्ष्येव श्रेष्ठिनं गतजीवितम्॥ १२१
भ्राम्यन्ति परितो ऽप्यभ्रं घना विद्युद्विलोचनाः। पश्यन्तः श्रेष्ठिनमिव सार्द्राः स्नेहिस्वभावतः॥ १२२
वर्षन्त्यमोघधाराभिः स्वैरं धाराभृतो ऽम्बुधौ। निशातशरराजीभिरिव वीरा रणाङ्गणे॥ १२३
विश्वमन्धीकृतं विश्वमुदितैर्धूमयोनिभिः। पुत्रा अनुहरन्ते हि पितरं नितरामिह॥ १२४
लोलकल्लोलमालाभिः प्रेर्यमाणं मुहुर्मुहुः। प्रचण्डपवनोद्धूतं प्राणिप्राणभयावहम्॥ १२५
तद्दोषवशतः पारावारान्तर्वहनं वहत्। अगण्यपण्यसंकीर्णं त्वरितं स्फुटमस्फुटत्॥ युग्मम्॥ १२६
लोभदेवो ऽम्बुधौ द्वीपमिव नीरं मराविव। भवितव्यतया प्राप फलकं तत्र चालगत्॥ १२७

सप्तभिरहोरात्रैस्तारद्वीपमायातवान्। स तत्र समुद्रवेलावनपवनेन शीतलेन प्रत्युज्जीवित इव क्षणम्। ततस्तत्तीरवासिभिः कृष्णकायकान्तिभिः शोणलोचनैर्यमदूतैरिव पुरुषैर्जगृहे। ततो लोभदेवो जगाद 'भवद्भिरहं कथं गृह्ये।' तैः कैतवेनोक्तम्। 'भद्र धीरो भव, मा विषादं भज, यदस्माकमेष नियोगः पोतवणिजो ऽवस्थां पतितस्य स्वागतं विधीयते' इति। एवंविधं जल्पद्भिस्तैर्लोभदेवो गृहमानीय विनयवामनैर्विष्टरे निवेश्य सवनस्नानं भोजनाच्छादनविधिं विधाय जल्पितः। 'भद्र, चेतसि विश्वासं समाश्रय, मा भयस्य भाजनं भव।' तत इत्याकर्ण्य चिन्तितमनेन। 'अहो, अयं कीदृगकारणवत्सलो लोकः। स यावदिति चिन्तयन्नस्ति तावत्तैर्निष्कृपैस्तं बद्ध्वा बाढं शस्त्रेण मांसलप्रदेशं विदार्य मांसमुत्कर्तितं शोणितं च जगृहे। स पुनरौषधयोगेन विलिप्ताङ्गो ऽक्षतशरीरो जज्ञे। पुनरपि षड्भिर्मासैरतीतैस्तस्य तदेव कृतम्। पुनरपि स पटुतरशरीरः कृतः। एवमनया रीत्या तस्यास्थिपञ्जरावशेषस्य समुद्रान्तःस्थस्य द्वादशवत्सरी व्यतीयाय।

2 ) P B निमित्तवद्भिर्या°. 3 ) On सितपट B has a marginal gloss thus: सिढ इति प्रसिद्धः. 5 ) P B °वासोलंकारपरिवृतौ द्वावपि. 6 ) On अरित्राणि B has a marginal gloss आउलां. 8 ) C °भिगम्य नमश्चक्रतुः। (ततः) लब्ध°, C रत्नान्युपार्ज्य for व्यावृत्य, C निजकुला°. 12 ) P जलधौ घातयामास. 13 ) P B inter. प्रचुरमकरघोरे & सागरे. 14 ) P परजनश्च. 16 ) P B एतन्निशम्य सम्यक्कर्णधारकैः. 19 ) P B एतेन लोभदेवेन पापिना अहमत्र. 29 ) B अगण्यपुण्य. 34 ) P om. इति. 35 ) B सविनयस्नानभोजना°, P B विश्वासमाश्रय. 37 ) P B मांसमुत्कीर्तितं.

1 §२८ ) अन्यदा लोभदेवस्तत्क्षणोत्कर्तितमांसखण्डः प्रवहच्छोणितलिप्ततनुर्भारण्डपक्षिणोत्क्षिप्तः । 1
तस्य व्योम्नि गच्छतः समुद्रोपरि परेण भारण्डपक्षिणा सह युध्यमानस्य भवितव्यतया चञ्चुपुटस्थितो
3 लोभदेवः सागरान्तः पपात । तज्जलेन निर्मितवेदनः सज्जन इव दुर्जनवचसा बहलतरकल्लोलमालाप्रेर्यमाणः 3
समुद्रेणापि मित्रविनाशमहापापकलुषितहृदय इव निष्कासितः । किमपि कूलं संप्राप्य तत्र क्षणमात्रं
शीतलमरुता समाश्वासितः काननान्तः संचरन् वटपादपतलं ददर्श। तत्र मरकतमणिकुट्टिमं सुगन्धनाना-
6 विधकुसुमसंचयचितं निरीक्ष्य लोभदेवो व्यचिन्तयत् । 'अहो, किल शास्त्रेषु श्रूयते, यथा देवाः स्वर्गे 6
वसन्ति तन्न ते रम्या रम्यविशेषज्ञाः । अन्यथा कथं लोकत्रयाह्लादकरमिमं प्रदेशं परित्यज्य त्रिदशास्त्रिद-
शालयमाश्रयन्ते ।' ध्यात्वेति स तत्र न्यग्रोधपादपाधस्तादुपविश्यातीवतीव्रवेदनार्तश्चिरं दध्यौ । 'स को
9 धर्मः, येन देवा दिव्यभोगधारिणो देवलोके सुखमनुभवन्ति । तत्किं पापमस्ति, येन नरके नैरयिका 9
मद्दुःखतो ऽप्यधिकं दुःखमुद्वहन्ति । ततो मया किं पुनः पापमाचरितं यदेवंविधं दुःखनिकेतनम-
भवम् ।' इति चिन्तयतो लोभदेवस्य चेतसि सहसैव तीक्ष्णशरशल्यमिव रुद्रश्रेष्ठी स्थितः । ततः स
12 चिन्तयामासेति । 12

§२९ ) 'अहो, अस्मादृशां किं जीवितेन ।

हतो वयस्यः सर्वस्य प्रियकारी कलानिधिः । श्रेष्ठी रुद्रो मया येन पापिना द्रव्यलोभतः ॥ १२८

15 तावत्सांप्रतमपि तत्किमपि तादृशमाचरामि येन प्रियमित्रवधकलुषितमात्मानं तीर्थभुवि व्यापाद्य सर्व- 15
पापविमुक्तो भवामि ।' इति चिन्तयन् लोभदेवः क्षणं सुप्तः, प्रबुद्धश्च एकस्यां दिशि कस्यापि मधुराक्षरां
गिरमाकर्ण्य चिन्तितमनेन । 'अये न संस्कृतं प्राकृतमपभ्रंशं च । इयं तावच्चतुर्थी पैशाचिकी भाषा,
18 तावदाकर्णयामि ।' ततस्तेषां पिशाचानामिति परस्परमुल्लापः प्रवर्तते, तावदेकेनोक्तम् । 'यदिदं पापा- 18
पनोदाय तपस्यतां पवनाभोगस्थानं रमणीयम् ।' अपरेणोक्तम् । 'इतो ऽपि चारुश्चामीकराचलः ।' अन्येन
भणितम् । 'अस्मादपि तुहिनशिशिरशिलातलस्तुहिनगिरिरेव रमणीयः ।' इतरेणोक्तम् । 'एवं मा मा
21 वदत, सर्वपापापहारिणी सुरनिर्झरिणी प्रधाना ।' इति निशम्य तां प्रति प्रचलितो लोभदेवः परित्यक्त- 21
लोभसंगः समुपागताभङ्गवैराग्यरङ्गः । क्रमेण च नरेश्वर, समागत्यात्रैव निविष्टः ।' एवं वृत्तान्तं भग-
वता कथितमाकर्ण्य व्रीडाप्रमोदविषादपरवशः श्रीधर्मनन्दनगुरुचरणमूलमवाप्य लोभदेवः प्रोवाच ।
24 'यद्भन्यचरणारविन्दैरावेदितं तदवितथमेव । किमत्र मया कर्तव्यम् ।' ततः श्रीधर्मनन्दनमुनिपेन प्रोक्तम् । 24
'वत्स, सर्वथा मित्रवधसंभूतपापजातक्षयाय लोभमहानिशाचरमनीहाहेत्या पञ्चत्वमानीय विनयवामनो
भूयसा तपसा पुराकृतकर्ममर्मनिर्मथनाय जैनतपस्यासरस्यां राजहंसलीलामलंकुरु । क्षान्तिकान्तासेवा-
27 हेवाकितामाश्रय । कायोत्सर्गमुग्रमाचर । पापमहाराजप्राकृतीर्विकृतीः परिहर । यत्र न जरा न मृत्युर्न 27
व्याधिर्न चाधिर्न च दुःखं तच्छाश्वतं महोदयपदं विशदं ततः प्राप्स्यसि ।' तदाकर्ण्य लोभदेवेनोक्तम् ।
'भगवन्, यदि तावदेतस्य चारित्रस्य योग्यो ऽस्मि ततो मम प्रव्रज्यादानप्रसादं विधेहि ।' भगवता
30 श्रीधर्मनन्दनेन गुरुणा पादपतितस्य तस्य बाष्पजलप्लुतलोचनस्य प्रशान्तलोभस्य लोभदेवस्य व्रतमदायि । 30

। इति लोभे लोभदेवकथा ।

§३० ) पुनरपि गुरुरुवाच ।

33 'हन्ति हन्त महामोहस्तुहिनौघ इवोदितः । पङ्केरुहं विवेकाख्यं यशःपरिमलोर्जितम् ॥ १२९ 33
सर्वदुःखमयो भूप भव एष जिनैर्मतः । तस्य स्वभावं जानन्ति महामोहहता नहि ॥ १३०
भुवो ऽवतंसः संजज्ञे स एवागण्यपुण्यभाक् । सदध्वनौ न यः क्वापि ह्रियते मोहवाजिना ॥ १३१
36 अनेन मोहराजेन दुर्धरेण जगत्त्रयी । जिग्ये जिनमुनीन् मुक्त्वा तीव्रव्रतधुरंधरान् ॥ १३२ 36
सर्वदायमहो मोहो महासागरसंनिभः । न यस्य प्राप्यते स्ताघो महावंशैरपि क्वचित् ॥ १३३

महामोहमोहितमनाः पुमान् गम्यागम्यमपि न विचारयति । स्वसारमप्यभिसरति । जनकमपि
39 मारयति । नरेश, यथैष पुरुषः ।' विज्ञप्तं नृपतिना । 'स्वामिन्, अनेकलोकसंकुलायां सभायां कः पुरुषः, 39
इति नावैमि ।' तदवगम्य गुरुणा भणितम् । 'य एष तव दूरे दक्षिणदेशे वासवस्य लेप्यमय इव कार्या-
कार्यविचारविमुखो दृश्यमानसुन्दरावयवः स्थाणुरिव स्थितः ।' एतेन महामोहमोहितचेतनेन यत्कृतं
42 तच्छ्रूयतामिति । 42

10 ) P B दुःखनिकेतनमिति. 12 ) P om. किं. 18 ) P B प्रवर्त्तते । एकेनोक्तं. 29 ) C inter. भगवन् & यदि. 31 ) P B om. इति. 36 ) P अन्येन for अनेन. 41 ) C वासवस्य वामो लेप्यमय, P B om. महा.

1 §३१) अस्ति समस्तकुशलजनावृतग्रामाभिरामः कोशलाभिधो जनपदः । तत्र परचक्रदुर्लङ्घ्या 1
कामिनीमुखचन्द्रचन्द्रिकात्यन्तधौतधवलगृहा कोशलाख्या नगरी ।

3 स्वर्नदीसंगतैर्यत्र मरुल्लोलैर्ध्वजाञ्चलैः । मार्जयन्तीव शशिनः कलङ्कममरालयाः ॥ १३४ 3
रमारामाभिरखिलैः सुभगंभावुकैर्गुणैः । मात्राधिकतया यत्र पराभूयन्त भूरिशः ॥ १३५
वातावधूतप्रासादधवलध्वजवेल्लनैः । यत्र त्रिपथगा व्योम्नि सहस्रपथगाभवत् ॥ १३६
6 तत्र क्षत्रशिरोरत्नं पवित्रमतिभाजनम् । कोशलः कुशलः क्षोणीपालः प्रत्यर्थिकोशलः ॥ १३७ 6
वाहिनीप्रसरविस्फुरद्रजोमण्डलेन रविरस्तदीधितिः ।
यस्य विक्रमगुणैकवर्णने न क्षमः फणभृतामपीश्वरः ॥ १३८
9 यदश्वीयक्षुण्णक्षितिविततरेण्वा रविरपि क्षतज्योतिर्यत्सिन्धुरनिकरदानोदकभरैः । 9
प्रसस्रुर्वाहिन्यः प्रतिपथममन्दैः प्रतिरवैरहो निःश्वासनामजनि किल गर्जिर्जलभृताम् ॥ १३९
यस्य प्रयाणे पृथिवीश्वरस्य निःश्वासनादाः किल ये प्रसस्रुः ।
12 त एव विद्वेषि महीपतीनां पलायनोत्साहकरा बभूवुः ॥ १४० 12
यद्यात्रास्वपि दुर्गलङ्घनलसन्निःश्वासनादैः स्फुरत्सैन्योद्धूतरजोभरैरविरतं प्रत्यर्थिपृथ्वीभृताम् ।
बाधिर्यं श्रवणेष्वथान्ध्यमभवन्नेत्रेषु तस्य स्तुतिं कर्तुं न क्षमते सहस्ररसनो ऽप्युर्वीभृतो विक्रमे ॥ १४१

15 §३२) अथ तस्य महीशक्रस्य मूर्त्या जयन्त इव परं नाकुलीनः, सिंह इव विक्रमी न नखरायुधः, 15
सवितेव प्रकाशकरो न कठोरः, चन्द्र इव सर्वाह्लादकरो न कलङ्कितः, तोसलाख्यः संख्यावतां मुख्य-
स्तनूभवः समभवत् । एवंविधविविधगुणसंपूर्णेन तेनानिवारितप्रसरेण निजनगर्यां परिभ्रमता कदाचि-
18 त्कस्यापि महतो नगरश्रेष्ठिनो हर्म्यरम्यगवाक्षविवरविनिर्गतं धाराधरपटलप्रकटीभूतपूर्णिमाकुमुदबा- 18
न्धवमिव बालिकाया वदनकमलं कुवलयदलदीर्घलोचनयुगलं ददृशे । सापि तमालोक्य साक्षादिव
मनोभवमुद्दामानुरागसागरान्तर्निमग्नमानसा तदात्वमेव समजायत । तद्दर्शनेन तस्यापि चेतः पञ्चशरेण
21 परदारावलोकनेन जनितकोपेनेव तितउरिव पञ्चभिः शरैः शतच्छिद्रं व्यधायि । ततस्तेन निर्दयविषम- 21
शरप्रहारप्रसूतवेदनाविवशेनेव दक्षिणकरेण वक्षःस्थलं पस्पृशे, वामेन नाभिपार्श्वे तर्जन्यङ्गुली चोर्ध्वी-
कृता, तया च तन्निरीक्षणपरवशया वामेतरपाणिना कृपाणप्रतिकृतिः प्रकटिता । ततः कुमारस्तच्चेष्टित-
24 मालोक्य स्वावासं प्रति प्रचलितो व्यचिन्तयदिति । 24

'यस्या मुखेन लावण्यपुण्येन द्विजनायकः । न्यक्कृतो ऽङ्कच्छलात्कुन्दे चिक्षेप क्षुरिकां निजे ॥ १४२
यदास्येन्दूदयादुल्ललास लावण्यवारिधिः । यत्रामृतायितं वाचा दृष्टिभ्यां शफरीयितम् ॥ १४३
27 प्रवालायितमोष्ठाभ्यां मुक्तापङ्क्तीयितं द्विजैः । कूर्मायितं कुचाभ्यां च दोर्भ्यां वेत्रलतायितम् ॥ १४४ 27
इयं शृङ्गारसर्वस्वं राजधानी मनोभुवः । उद्दामयौवनग्राहहरा लावण्यदीर्घिका ॥ १४५
अहो अस्या बालिकायाः सर्वरूपातिशायिरूपं, अहो अद्भुता कापि सौभाग्यभङ्गी, अहो विदग्धत्वम्,
30 अहो निरुपमा लावण्यलक्ष्मीः' इति ध्यायन्नेव निजावासमासदत् । साथ क्रमेण नयनपथातीते ऽपि 30
तस्मिन्नराधीश्वरनन्दने इभ्यतनया विषमबाणबाणप्रहारप्रसरजर्जरशरीरसर्वावयवा मुक्तदीर्घोष्णनिः-
श्वासधूमध्यामलीकृतशय्यागृहविचित्रचित्तभित्तिः शयनीये लुलोठ ।

33 इष्टं मन्त्रमिव स्वान्ते स्मरन्ती तं नृपात्मजम् । सा तस्थौ सुकुमाराङ्गी कुरङ्गीनयना चिरम् ॥ १४६ 33
न शय्यायां न च ज्यायां न जने न वने रतिः । तस्या न चन्द्रे नो चन्द्रे वियोगिन्याः कदाप्यभूत् ॥ १४७
शीतांशुरपि घर्मांशुश्चन्दनं च हुताशनः । निशापि वासरस्तस्या वैपरीत्यं तदाभवत् ॥ १४८
36 यतः, 36
'योगिनां चन्दनाद्यैर्यैः शीतैः प्रीतिः प्रजायते । तनुर्ज्वलति तैरेव सततं विप्रयोगिणाम् ॥' १४९

§३३) स कुमारो यावदन्यदा तस्या हृदयहारिण्याः संगमोपायतोयेन दुस्सहविरहदहनोत्तप्तदेह-
39 निर्वापणमभिलषन्नस्ति तावत्पर्यस्तकिरणदण्डश्चण्डकिरणः पश्चिमाचलचूलिकावलम्बी बभूव । तदा- 39
ऽतिप्रसृते संतमसे कुसुमशरशरप्रसरव्यथितो 'दुःखेन विना सौख्यं नास्ति' इत्यवगम्य कुमारः समुद-
तिष्ठत् । ततस्तोसलो निजं वसनं गाढं नियम्य कुवलयदलश्यामलां यमजिह्वाकरालां क्षुरिकां कटीतटे

---

12) P पलायिनोत्साह. 15) B has a marginal gloss (on नखरायुधः) thus: नखरा नखा एवायुधं स्यादस्य स नखरायुधः कुमारः पुनर्न नखरायुधः कोऽर्थः खरायुध तीक्ष्णायुधः । तेन प्रकृत्यर्थवाचको । 16) B adds करः after कठोरः. 20) P सागरांतर निर्मग्न. 21) P लोकनजनित. 26) P यदास्येहृदयादु°. 38) PB दहनतप्त.

1 बद्धा दक्षिणकरे वैरिवीरवारनिशुम्भनं कृपाणरत्नमंसावलम्बितं वसुनन्दकं च कृत्वा रचितनीलपट- 1
प्रावरणस्तत्सदनान्तिकमागत्य वियदुत्क्षिप्तकरणं दत्त्वा वातायनमाससाद । निर्मलप्रज्वलद्यष्टिप्रदीप-
3 प्रद्योतितावयवां पराङ्मुखीं शयनतले विनिविष्टां तामेणलोचनामालोकत। कुमारेण पृथिव्यां वसुनन्द- 3
कोपरि कृपाणं मुक्त्वा निभृतपदसंचारमुपगम्य तस्याः सुदृशो लोचने पाणिभ्यां पिहिते। ततस्तया
सर्वाङ्गरोमाञ्चकञ्चुकमुद्वहन्त्या चिन्तितम्। यदद्य सर्वतो ममाङ्गं पुलकितं बालमृणालिनीदलकोमलं कर-
6 किशलयं तज्जाने सैष मत्स्वान्तसर्वस्वतस्करः।' इति विमृश्य तयाभाणि 'अहो सौभाग्यनिधे, मां मुञ्च'। 6
कुमारेण हसता तन्नयनद्वयी शिथिलीचक्रे। तया तस्य गृहागतस्य विनयवृत्त्याभ्युत्थानं विदधे। तया दत्ते
प्रधाने [ विष्टरे ] कुमारः समुपाविशत्। कुमारेणोक्तं 'तव संगममिच्छामि' । तयोदितम्। 'देव युक्त-
9 मेतत्परं कुलाङ्गनानां केवलं शीलपालनमेव हितम्।' इत्याकर्ण्य कुमारेण जल्पितं 'यद्येवं भवती शील- 9
वती ततो व्रजामि' । इत्युक्त्वा खङ्गरत्नं वसुनन्दकं च स्वीकृत्य ससंभ्रममुत्तस्थौ। तया तं वस्त्राञ्चले
धृत्वा प्रोक्तम्। 'भद्र पारिपन्थिक इव मम हृदयं मुषित्वा कुत्र व्रजसि। यतस्त्वां बाहुलतापाशनियमितं
12 करिष्ये।' इत्याकर्ण्य कुमारः स्थितः । तयोक्तम्। राजपुत्र, यदत्र परमार्थस्तं तावदाकर्णय पश्चा- 12
द्यद्युक्तं तत्कुर्याः।

§ ३४) अस्त्येतस्यामेव कोशलायां श्रेष्ठी नन्दनाभिधः। तस्य पत्नी रत्नरेखाख्या। तत्कुक्षिसंभवा
15 सुवर्णदेवाभिधाना पित्रोरतीववल्लभा कन्यकास्मि । ततः पितृभ्यामहं विष्णुदत्तपुत्रस्य हरिदत्तस्य पाणि- 15
पीडनाय प्रदत्ता। स च मामुपयम्य वाणिज्याय यानपात्रमारुह्य लङ्कापुरीमभिजग्मिवान्। तस्य प्रोषित-
स्याद्य द्वादशो वत्सरः सातिरेकः। विपन्नो जीवति वेति न ज्ञायते। एतं यौवनमहासागरमपारं काम-
18 महावर्तगर्तदुस्तरं विषयमत्स्यकच्छपोत्कटमतिगहनं निरपत्रादमुलङ्घयन्त्या ममेयन्ति दिनानि जातानि। 18
दुर्जेयतया विषयाणां चञ्चलतया चेन्द्रियग्रामस्यैकदा मम मानसे इति विकल्पसंकल्पमाला बभूव 'अहो
जरामृत्युरोगशोकक्लेशप्रचुरे संसारे प्रियसंगमादपरं न किंचिच्छर्मास्ति, तच्च न विद्यते। ततोऽजाग-
21 लस्तन इवारण्यमालतीकुसुममिव बधिरकर्णजाप इव निरर्थकं मे जीवितम्। इति विचिन्त्य चिरं मरण- 21
कृताध्यवसाया 'सुदृष्टं जीवलोकमद्य करोमि' इति यावद्गवाक्षमारूढा तावत्तत्र भवितव्यतया भवान्मम
लोचनगोचरं गतः। त्वां दृष्ट्वा रागपरवशा तत्कालमेव जातास्मि। त्वया च परामृष्टं हृदयम्, एकाङ्गुलि-
24 रूर्ध्वीकृता। मया तदवगतं यदेतेन राजपुत्रेण मम संज्ञा कृता। हृदयपरिस्पर्शनेनेति कथितम्। 'यस्त्वं मम 24
हृदयस्याभीष्टतमा' । अङ्गुल्या ऊर्ध्वीकृतया चेति कथितं 'यदेकदा संगमं दद्स्व' इति । ततो मया तव
खङ्गानुकारी निजकर इति प्रदर्शितः, 'यदा किल त्वं खङ्गबलेनैव समागच्छसि तदा तव संगमो नान्यथा'
27 इति। तदाप्रभृति राजपुत्र, तव संगमाशाबद्धमानसा 'को ऽपि मा ज्ञासीत्' इति वेपमाना कृतमरण- 27
निश्चया यावदस्मि तावद्भवान् समायातवान् । ततः सांप्रतं विनष्टं विज्ञानम्, गलितो गुरुजनविनयः,
परिमुषितं विवेकरत्नम्, विस्मृतो धर्मोपदेशो भवत्संगमेन । किंच यदि तावत्त्वया सह संगतिं करोमि
30 ततो मम कुलमन्दिरे दुःशीलेत्येषा पराभवः स्वजनानां गुरुतरो ऽपवादश्चेति। यदि लोकापवादः सह्यते 30
तदा तव ममापीप्सितं, अन्यथा मृत्युर्वरम्' इति जल्पन्ती सुदती निशाकरेणैव निशा गाढतरं कुमारेण
समालिङ्गिता सफलीकृतयौवना च। प्रीत्या च दिवसे भाविस्वविरहविनोदचिह्नं निजनामाङ्कां मुद्रिका-
33 मेकां तस्यै स तदा ददौ। ततो ऽलङ्कृतदिग्विभागे संध्यारागे कुमारः सहसा तन्मन्दिरात्तेनैव प्रयोगेण 33
तद्यथागतं गतः। एवं च तस्यानुदिनं प्रतिवसतस्तत्र तया सहाष्टमो मासो व्यतीयाय। तत्र च तथाविध-
कर्मसंयोगेन भवितव्यतया नियोगेन सा गर्भवती बभूव । तत्सखीजननिवेदितवृत्तान्ताया रत्नरेखाया
36 मुखात् नन्दश्रेष्ठिना समवगत्य संजातकोपेन कोशलनरेश्वरस्य पुरो न्यवेदि । राज्ञादिष्टम् । 'गच्छ 36
गृहे ऽन्वेषयामि लग्नः' । ततो राजादेशमवाप्य मन्त्रिणा सर्वत्र विलोकमानेन तोसलकुमारः प्रातः, विज्ञप्तं
च राज्ञे। ततो गुरुतरकोपस्फुरदधरेण धराधरेणादिष्टम्। सचिव, नाहमन्यायिनं पुत्रमपि सेहे, तदेनं
39 द्रुतमेव निगृहाण। सचिवो 'यदाज्ञापयति स्वामी' इति भणित्वा कुमारं केनापि व्याजेन श्मशानभूमि- 39
मानिनाय। तत्र कार्याकार्यदक्षिणेन मन्त्रिणोक्तम्। 'कुमार, तव दुर्वृत्तेन तवोपरि कुपितस्ते पिता, भवान्
वध्य आज्ञप्तो ऽस्ति, स्वामिसुतत्वेन त्वमपि मम प्रभुः कथं त्वां व्यापादयामि। सदैवास्मि तव वंशसेवकः,
42 ततस्त्वं तथा व्रज यथा तव प्रवृत्तिरपि न श्रूयते। त्वया क्वापि न कथ्यं यदसि तोसलः।' इति भणित्वा 42

2) PB प्रज्वलयष्टि. 8) PB om. विष्टरे. 14) B कोसलायां. 26) B inter. किलं & त्वं. 30) P मत्कुलमंदिरे.
31) B निशाकरेणेव. 37) P B गृहमन्वेषयामि. 40) P B कुपितः पिता. 41) P B आज्ञप्तोसि, P repeats (after यदसि)
तव वंशसेवकः etc. to न कथ्यं यदसि.

मन्त्रिणा कुमारो विसर्जितः। कुमारो ऽपि तदैव निर्गत्य प्रचुराणि पुराण्युल्लङ्घ्य क्रमेण पाटलीपुत्रमगच्छत्। तदा तत्र च राजा जयवर्मा राज्यं पालयति स्म। स कुमारस्तत्र तस्य सेवापरो ऽभवत्।

§ ३५ ) इतश्च तस्यां कोशलायां सा सुवर्णदेवा ज्ञातदुःशीलत्वेन बन्धुजनेन निन्द्यमाना जनेन च कुमारविरहोद्विग्नमानसा गर्भभवदुःखभरबाधिता व्यचिन्तयदिति। 'स कुत्र राजपुत्रो यो मां परित्यज्य ययौ' इति चिन्तयन्ती सा कस्याश्चित्सखीमुखात् 'तव दोषेण राजादेशतः सचिवेन कुमारो हतः' इति श्रुत्वा सगर्भत्वेनाकृततदनुमरणा निशीथे केनापि च्छद्मना गेहतो निर्गत्य भवितव्यतायोगेन पाटलीपुत्रपुरं प्रति प्रचलता केनचित्सार्थेन सह चचाल। सा सुदती मन्दं मन्दं गच्छन्ती गर्भवेदनार्ता चरणचङ्क्रमणाप्रवीणा पश्चात्सार्थात्परिभ्रष्टा तालहिन्तालतमालकदम्बजम्बूजम्बीरादिफलदलशतसंकुले महाकानने मूढदिग्विभागा अपरिज्ञातनिगमा तृष्णातरलितचेतोवृत्तिः क्षुधार्ता श्यामवदना पथश्रान्ता सिंहनिनादविद्रुता व्याघ्रदर्शनवेपमानहृदया दुरध्वपतिता विलापानकार्षीदिति। 'हा तात, अहमभीष्टतमापि त्वया परित्राणं न कृतम्। हा मातः, ममापि त्वया रक्षणं न कृतम्। हा प्रियतम, यस्य तव कृते मया हेलयापि शीलं कुलं यशस्त्रपा सखीजनश्च पटप्रान्तलग्नतृणवद् वेश्मप्रमार्जनोद्धृतावस्करवत् सर्वमपि तत्यजे, स त्वमपि मामुपेक्षसे।' इति विलपन्ती मूर्च्छिता धरायां पपात। अत्रान्तरे कुमुदिनीविभुस्तां मृतामिवावगत्य दुःखार्तो विश्रस्तकरः प्रतीचीजलनिधेरन्तः परिममज्ज। ततो महागजेन्द्रयूथमलिने विन्ध्यगिरिशिखरमालानीले समन्ततः प्रसृते संतमससमूहे शीतलेन वायुना जातानुकम्पेनेव समाश्वासिता सा। ततस्तस्मिन्महाभीमे वने एकाकिनी अशरणा सुवर्णदेवा प्रसूता एकं दारकं द्वितीयां दारिकां च। ततश्च।

सुतजन्ममुदारण्ये वासार्त्या तन्मनः क्षणम्। जग्रसे ऽहर्मुखमिव भासा भूच्छाययापि च ॥ १५०

सा च प्रलपितुमारेभे।

पित्रा मात्रा च भर्त्रा च स्वजनेन च वर्जिता। वत्स त्वमेव शरणं त्वं गतिस्त्वं मतिर्मम ॥ १५१

पिता पाति च कौमारे यौवने रक्षति प्रियः। स्थविरत्वे तनूजस्तु निर्नाथा स्त्री कदापि न ॥ १५२

इतश्चाहर्पतिः प्राप पूर्वपर्वतमस्तकम्। तस्या दुष्टमहाकष्टतिरस्कारकृताविव ॥ १५३

उदितस्तेजसामीशः कोपाटोपादिवारुणः। वर्णलोपकृतो ध्वान्तसंघातस्य विघातने ॥ १५४

§ ३६ ) एवंविधे प्रत्यूषप्रस्तावे चिन्तितमनया। 'किमधुना मया कार्यं तावन्मरणं न वरम्, यतो बालयुगलं मयि मृतायां मृतमेव, तदस्य पालनमेव संप्रति श्रेयः'। इति ध्यात्वा गता कस्यापि ग्रामस्य परिसरम्। ततस्तोसलराजपुत्रनामाङ्कां मुद्रां बालस्य कण्ठे निक्षिप्य निजनामाङ्कितमुद्रां बालिकायाश्च निजोत्तरीयप्रान्तद्वयेन दारकं दारिकां च पृथग्ग्रन्थौ बबन्ध। तद्बालयुगलं तत्र मुक्त्वा स्वयं सुवर्णदेवा शरीरवैवर्ण्यनिराकरणाय विन्ध्याचलोपत्यकानिर्झरणमुपाजगाम। अत्रान्तरे नवप्रसूता व्याघ्री स्वशिशोर्भक्ष्यार्थं भ्रमन्ती नवशोणितगन्धहृतचित्ता चीवरोभयप्रान्तबद्धं बालयुगलं जग्राह। तस्या व्रजन्त्या वसनान्तबद्धा दारिका पथि पपात, न च तया गलितापि दारिकाज्ञायि। तदा च पाटलीपुत्रेशश्रीजयवर्मनृपस्यागतः सभार्यस्तत्र दूतः। स तां दारिकां दृष्ट्वा गृहीत्वा च निरपत्यायाः स्वभार्यायाः समर्पयामास। तौ च दम्पती क्रमेण तां पुत्रीमङ्गीकृत्य पाटलीपुत्रमायातौ। ताभ्यां तस्या बालिकाया वनदत्तेति नाम विदधे।

§ ३७ ) इतश्च व्याघ्री स्तोकं भूभागमुपेता कुतो ऽपि कार्यान्तरात्तत्रायातेन राज्ञः श्रीजयवर्मणो राजपुत्रशबरशीलेन व्याघ्र इतिकृत्वा गुरुतरशल्यप्रहारेण हता मृता च। तं च बालकं कोमलमृणालदेहं रक्तोत्पलसमक्रमयुगलं विकस्वरेन्दीवरनयनं पार्वणचन्द्राननं स ददर्श। ततस्तं शबरशीलः प्रमुदितचेता निजप्रियतमायै 'तव पुत्रः' इति वितीर्णवान्। तत्कान्तया 'प्रसादः' इति भणितम्। वर्धापनकमहोत्सवं विधाय द्वादशे दिवसे पित्रा तस्य पुत्रस्य व्याघ्रदत्त इति नामधेयं गुण्यं ददे। सर्वत्र च नगरान्तस्तदास्यप्रच्छन्नगर्भा पत्नी प्रसूतेति विदितमभवत्। शबरशीलस्तेन बालकेन साकं पाटलीपुत्रमवाप। तत्र च समानशीलराजपुत्रैः सार्धं क्रीडां कुर्वतस्तस्य महामोहमोहितचेतसो लोकेन मोहदत्त इति संज्ञा कृता। एवं मोहदत्तः सह कलाकलापेन वयसा गुणगणेन च वर्धितुमारेभे। इतश्च सुवर्णदेवा गात्रपावित्र्यं निर्माय समागता बालकयुग्ममप्रेक्षमाणा मूर्छिता। पुनरपि वायुना लब्धचैतन्या चिरं विललाप। ततः स्वयमेव सा स्वं संबोध्य ततः स्थानात् प्रचलिता। पुरतो व्याघ्रीपदानि दृष्ट्वा व्याघ्र्या बालकयुगलं

7 ) B प्रतिचलता. 10 ) B हा ताताहमभीष्टतमापि त्वया परित्यक्ता। हा. 11 ) P om. हा मातः etc. कृतम्।, B परित्राणं for रक्षणं. 12 ) C inter. शीलं & कुलं. 14 ) P B °वावगम्य.। 15 ) P B गिरिशिषरशिषरिमाला. 25 ) B तदत्र for तदस्य. 27 ) B दारकं च दारिकां, B सुवर्णदेवी. 30 ) P जयवर्मानृपस्या°. 32 ) P B ckkh तया for ताभ्यां. 37 ) P om. पुत्रस्य. 40 ) P B सकल for सह, B सुवर्णदेवी. 42 ) P B om. सा.

1 भक्षितमिति चिन्तयन्ती तदनुमार्गमनुसरन्ती कस्मिन्नपि गोष्ठे कस्याश्चिदाभीर्या वेश्मनि समागता । तया 1
'दुहिता' इति स्थापिता । तत्र कियन्ति दिनानि स्थित्वा ग्रामानुग्रामं परिभ्रमन्ती पाटलीपुत्रं साप्या-
3 याता । तत्र कर्मसंयोगेन तस्मिन्नेव दूतगृहे सा प्रविष्टा । तत्र च दूतकान्तया तद्दुहिता तस्या एव प्रति- 3
पालनार्थमर्पिता । सुवर्णदेवा तामात्मीयां सुतामजानन्ती केवलं तत्सुतामेव हृदि भावयन्ती तां वर्धयि-
तुमारभत । सा सुता क्रमेणोदग्रयौवनप्राग्रहरा लावण्यातिशायिनी सौभाग्यभूमिका चातुर्यधुर्या जाता ।

6 § ३८) इतश्च जनमनःप्रमोदभरदायिनि मधुरमधुकरनिकरध्वनिताकुले वसन्तकाले मदनत्रयोदश्यां 6
बाह्योद्याने कामदेवस्य यात्रां वीक्षितुं मातृसखीपरिवृता गता वनदत्ता । स्वैरं परिभ्रमन्ती च तत्रागतेन
मोहदत्तेन विलोकिता, तया च सः । तयोः परस्परं विलोकनेन प्रीतिः समभूत् । तत्रान्योन्यदर्शननीर-
9 संसिक्तस्नेहमहीरुहं मिथुनं महतीं वेलां यावत्तस्थौ, तावत्सुवर्णदेवया स्वदुहितरि गाढतरं मोहदत्तानुरागं 9
विभाव्य जल्पितम् । 'वत्से, तवेहागताया गुर्वी वेला जाता, तव पितापि दुःखाकुलितमानसो भविष्यतीति
तावत्प्रवर्तस्व गृहं व्रजामः । यदि तावत्तव कौतुकं ततो वत्से, मदनोत्सवे निवृत्ते निर्जने कानने समागत्य
12 पुनर्निजेच्छया भगवन्तमनङ्गं विलोकयेः' इति जल्पन्ती तया समं वनान्निर्गता । चिन्तितं च मोहदत्तेन । 12
'अहो, एतस्या ममोपरिसमस्ति स्नेहः' इति सुवर्णदेवावचोऽवश्यं संकेतजनकं परिभावयन्मोहदत्तः
काननान्निःससार । सा वनदत्ता काममहापिशाचग्रस्तेन देहेन निकेतनमायाता न पुनश्चेतसा । तत्रापि
15 गुरुविरहज्वलनज्वालावलीकरालदेहा 15

कङ्केल्लिपल्लवाकीर्णशयनीयतलस्थिता । वितीर्णास्थानहुंकारा कामज्वरभरातुरा ॥ १५५
मृणालवलया रम्भादलावरणसंवृता । चन्दनद्रवसंसर्गसर्वाङ्गलतिका तदा ॥ १५६
18 निर्गच्छदुष्णनिःश्वासशुष्यमाणाधरावनी । परित्यक्तकलाभ्यासपुष्पताम्बूलभूषणा ॥ १५७ 18
विच्छायवदनाम्भोजा दिवा चन्द्रकलेव या । न पल्यङ्के न वा भूमितले प्राप्तसुखाभवत् ॥ १५८
चतुर्भिः कलापकम् ॥

21 § ३९) वनदत्तान्यदा मदनोत्सवे व्यतीते तस्मिन्नेवोद्याने गन्तुकामा जननीसखीजनान्विता राज- 21
मार्गे तोसलराजपुत्रेण वीक्षिता । देशान्तरपरावर्तितरूपयौवनलावण्यवर्णस्तोसलस्तया सुवर्णदेवया
न प्रत्यभिज्ञातः । तेन सापि दूरदेशान्तरासंभावनीयसमागमा नावगता । केवलं तस्य तोसल-
24 राजपुत्रस्य वनदत्ताया उपरि महती प्रीतिरुत्पन्ना । चिन्तितं च तेन । 'एतां चारुलोचनां द्रव्यदानेन 24
विक्रमेण वापरेण वाप्युपायेन परिणेष्यामि । सुन्दरमभवद्यदेषा बाह्योद्यानभुवं प्राप्ता । ततोऽहमपि
तदनुमार्गलग्नो यास्यामि' इति विचिन्तयन् गन्तुं प्रवृत्तः । सा च वनदत्ता करिणीव सुललितगमना
27 क्रमेण वनान्तर्विचचार । इतश्च गुरुतरानुरागदत्तहृदयेन तोसलेन लोकापवादमनपेक्ष्य दूरतो व्रीडां 27
विमुच्य जीविताशामपि परित्यज्य भयमवगणय्य चिन्तितम् 'अयमत्रावसर इति ।' ततः कर्षितकराल-
करवालो महामोहमूढमानसस्तोसलो बभाण । 'भद्रे, यदि जीवितेन ते कार्यं तदा मयैव समं रमस्वेति ।
30 अन्यथा कृपाणलतयानया भवतीं कथाशेषां करिष्ये ।' तत्तादृशं वृत्तं वीक्ष्य हाहारवमुखरे सखीजने 30
सुवर्णदेवया च पूत्कृते । 'भो भो जनाः, त्वरितं प्रधावत प्रधावत, अनेन मम पुत्री निरपराधैव कानने
व्याधेन हरिणीव विनाश्यते ।'

33 § ४०) इतश्च सहसा मोहदत्तः कदलीगेहतः कर्षितनिस्त्रिंशो निःसृत्य प्रोवाच । 'रे रे पुरुषाधम 33
अग्राह्यनामधेय निस्त्रप, स्त्रीषु प्रहरसि । अहमस्या रक्षकस्तन्मम संमुखो भव ।' इति श्रुत्वा तोसलस्तद-
भिमुखं प्रत्यधावत । तोसलेन मोहदत्तस्य कृपाणप्रहारः प्रदत्तः । तेन च मोहदत्तेन करणकौशलेन
36 तस्य प्रहारं वञ्चयित्वा प्रतिप्रहारेण तोसलराजपुत्रः कृतान्तदन्तक्रकचगोचरीकृतः । ततो मोहदत्तो वन- 36
दत्ताभिमुखं चलितः । तया स जीवितदातेति प्रियः प्रतिपन्नः । सुता जीवितेति हृष्टमानसा सुवर्णदेवा
समभवत् । मोहदत्तेन भणितम् । 'भद्रे, विश्वस्ता भव, कम्पं मुञ्च, भयं मा कार्षीः ।' ततस्तेन मोहितेन
39 मोहदत्तेनालिङ्ग्य यावत्तया सह रंस्यते तावदकस्मादेव दीर्घमधुरः स्वरस्तस्य कर्णातिथित्वं भेजे । 39

'जनकं मारयित्वापि जनन्याः पुरतोऽपि च । अरे रिरंससे मूढ स्वसारमपि संप्रति ॥' १५९
ततो मोहदत्तेन विलोकितोऽपि कापि कोऽपि न दृष्टः । एवं वाक्त्रयाकर्णनजातशङ्कः कोपकौतूहला-
42 बद्धचित्तः खड्गरत्नव्यग्रपाणिर्मोहदत्तः सर्वतः काननान्तर्विलोकितुं प्रारेभे । तावद्भगवान् साक्षादिव धर्म 42

4) B सुवर्णदेवी, P B om. तां. 7) P B परिभृता. 8) P B om. तया च सः।. 11) P निर्वृत्ते. 13) B समस्तस्नेह.
26) P om. च. 30) O °मुखरेण सखीजनेन. 41) P B om. विलोकितोऽपि, P °जाताशंकः.

1 एको ऽनगारचूडामणिस्तस्य दृग्गोचरमागतः । 'अमुना मुनिपतिना जल्पितम्' इति चिन्तयन्मोहदत्तः 1
श्रमणक्रमणयुगलमभिनम्य नातिदूरे निविष्टः सुवर्णदेवा वनदत्ता सखीजनश्च । ततो मोहदत्तेन विज्ञप्तम् ।
3 'भगवन्, यत्त्वं कथयसि मातुः पुरतः पितरं व्यापाद्य स्वसारमभिरमसे तत्कथं ममायं पिता, कथमियं 3
माता, कथं चेयं स्वसा, इति ।' ततः स मुनिपतिः कोशलाया आरभ्य वृत्तं तोसलमृतिं यावत्तत्पुरः
स्पष्टमाचष्टे । एकं तावदकृत्यं कृतं यत्त्वया पूर्वं जनकस्तोसलो व्यापादितः, इदं तावद्द्वितीयं यत्त्वं भगिनी-
6 मभिवाञ्छसि । ततः सर्वथा धिग् महामोहविलसितम् ।' एतन्निशम्य सुवर्णदेवा वनदत्ताप्यधोमुखी 6
बभूव ।

§ ४१ ) मोहदत्तो ऽपि निर्विण्णकामभोगो महाशुचिसमं मानुषत्वं मन्यमानः प्रचुरतरवैराग्यमार्ग-
9 मनुलग्नो जजल्पेदम् । 9

'अनन्तदुःखवृक्षाणां मूलमज्ञानमेव च । अज्ञानमेव वृजिनं भयमज्ञानमेव च ॥' १६०

ततो मुनीश, मम कथय मया सर्वथैवाधन्येन किमाचरणीयम्, येन सकलमपि पापं मूलादेव
12 विनश्यति ।' भगवता समाख्यातम् । 12

'कलत्रपुत्रमित्रादि सर्वमुत्सृज्य सर्वथा । दीक्षां भज भवाम्भोधिमज्जिनीमङ्गिनीमिव ॥' १६१

मोहदत्तेनेति जल्पितं 'भगवन्, मां प्रव्रज्यासंगतं तर्हि तनु' । मुनिनादिष्टम् । 'यदहं चारणश्रमणो न
15 गच्छप्रतिबद्धस्तेन तव व्रतं दातुमनीशः ।' तथा 15

दशाष्ट यस्य पञ्चाशद् योजनानि यथाक्रमम् । विस्तारे शिखरे मूले प्रोचुः सिद्धान्तवेदिनः ॥ १६२
श्रीनाभिनन्दनो यत्र पवित्रितजगत्त्रयः । अवस्थितिं स्वयं चक्रे स शैलेषु शिरोमणिः ॥ १६३
18 कर्माण्यपि विजृम्भन्ते यत्र तावद्धपुष्मताम् । श्रीनाभिसूनुर्नाभ्येति यावल्लोचनगोचरम् ॥ १६४ 18
कर्मेभपुण्डरीकश्रीः पुण्डरीकमहामुनिः । यत्रावृतः शिवं प्राप पञ्चभिर्मुनिकोटिभिः ॥ १६५
यस्मिन्नमिविनम्याख्यौ विद्याधरपती तथा । मुनिकोटिद्वयीयुक्तौ परमं पदमीयतुः ॥ १६६
21 श्रीरामभरतौ वालिखिल्यानां दशकोटयः । प्रद्युम्नादिकुमाराणां सार्धास्तिस्रश्च कोटयः ॥ १६७ 21
नारदः पाण्डवाः पञ्च परे ऽपि मुनिपुङ्गवाः । यत्रापुः क्षीणकर्माणः सर्वदुःखक्षयं पदम् ॥ युग्मम् ॥
यत्रैकस्यापि सिद्धिः स्यात् तत्तीर्थं जगदुत्तमम् । अस्य किं प्रोच्यते यत्र निर्वृता मुनिकोटयः ॥ १६९
24 यत्र भूमीरुहश्रेणीरमणीयसमुच्छलात् । जिनाङ्घ्रिस्पर्शरहितान् हसत्यन्यमहीधरान् ॥ १७० 24
स्फुरन्निर्झरझात्कारैर्य एवमिव जल्पति । जनाः किमन्यतीर्थेषु भ्रमन्ते हा विहाय माम् ॥ १७१
अतीवगुप्ता यत्रास्ति शङ्के वश्यार्थमोषधी । तद्वृणोति स्वयं सिद्धिः प्रकामं कामवर्जिता ॥ १७२
27 § ४२ ) तत्र श्रीशत्रुञ्जये महातीर्थे मया गच्छता गगनतलेनावधिज्ञानतः परिज्ञातं त्वया निहतं 27
जनकं, चिन्तितम् 'एकमकार्यं कृतमनेन यावद्द्वितीयं नाचरति तावत्संबोधयाम्येनम्' । 'अयं तावद्भव्यः
परमनेन मोहमोहितचेतसा विहितमहितम् ।

30 लक्षयोजनमानेन कलितं काञ्चनाचलम् । निवेशयन्ति दण्डस्य पदे ये चैकहेलया ॥ १७३ 30
स्वयंभूरमणाभिख्यं सागरं ये जिनेश्वराः । तरन्ति दुस्तरं बाहुदण्डाभ्यामपि लीलया ॥ १७४
एकेन भुजदण्डेन धरामपि सभूधराम् । आतपत्रमिव क्षिप्रं लीलयैव धरन्ति ये ॥ १७५
33 त्रिलोकीतिलकास्ते ऽपि कर्मादेशवशंवदाः । किमुच्यते वराकस्य भवतो मोहदत्त ही ॥ १७६ 33

अतो मया संप्रति वियतः समुत्तीर्य त्वं प्रतिबोधितः ।' विज्ञप्तं मोहदत्तेन 'भगवन्, कथं पुनः प्रव्रज्या
प्राप्या' इति । मुनिना भणितम् । 'व्रज त्वं कौशाम्ब्यां दक्षिणे पार्श्वे भूपतेः पुरन्दरदत्तस्योद्याने
36 समवसृतं श्रीधर्मनन्दनं मुनिप्रधानं गणाधिपं द्रक्ष्यसि । तत्र स गणभृत्तमः स्वयमेव तव वृत्तान्तमवगत्य 36
दीक्षां दास्यति ।' इति वदन् कुवलयदलश्यामलं गगनतलमुत्पतितः । भोः पुरन्दरदत्तमहाराज, सैष
तद्वचनं श्रुत्वा गृहवासं परित्यज्य मामन्वेषयन्निहागत इति ।' एवं च तदाकर्ण्य मोहदत्तेन भणितम् ।
39 'भगवन्, इदमित्थमेव किमपि नालीकं तावन्मां प्रव्रज्याभाजनं विधेहि ।' 39

श्रीधर्मनन्दनगुरुर्गुरुगौरवार्हो मोहव्यपोहविशदीकृतचित्तवृत्तौ ।
दीक्षां जिनेशगदितामथ मोहदत्ते दत्ते स्म सर्वसुखसिद्धिपदस्य बीजम् ॥ १७७

2 ) P B om. ततो. 3 ) P B om. कथयसि. 4 ) P B कोसलाया. 8 ) C °समानं for समं. 10 ) B om. च । अज्ञानमेव etc. ending with च. 23 ) B स्यात्तत्तीर्थं. 26 ) B °मौषधी. 27 ) B परिज्ञाय त्वया, P B निहितं. 29 ) P repeats चेतसा विहितं. 30 ) P om. लक्षयोजनमाने. 33 ) P adds लक्षयोजनमानेन कलितं कां before त्रिलोकीति°. 34 ) P महा for मया. 37 ) B भो. 41 ) P B सिद्धपदस्य.

पुनरपि श्रीधर्मनन्दनेन भणितम् । 'भो वासव मन्त्रिवासव, यत्त्वया पृष्टं यथैतस्य चतुर्गतिलक्षणस्य संसारस्य किं प्रथमं कारणम् । तत्रामी महामल्लाः पञ्च क्रोधमानमायालोभमोहाः प्रवृत्ता जीवं दौर्गत्यपथमुपनयन्ति ।'

इत्याचार्यश्रीपरमानन्दसूरिशिष्यश्रीरत्नप्रभसूरिविरचिते कुवलयमालाकथासंक्षेपे श्रीप्रद्युम्नसूरिशोधिते क्रोधमानादिकषायचतुष्टयतथामोहस्वरूपवर्णनो नाम प्रस्तावो द्वितीयः ॥ २ ॥

## [ अथ तृतीयः प्रस्तावः ]

§ १ ) ततः स नृपतिः प्रमुदितचेताः सदामन्दानन्दकन्दकन्दलनाम्बुदस्य श्रीधर्मनन्दनस्य मुखतः कषायादिविपाकफललक्षणदेशनावचनामृतं तृष्णातरलित इव निपीय सदसः समुत्थाय निजं धाम समाजगाम । इतश्च दिवसाधीश्वरे ऽस्तगिरिशिखरमुपागते सायन्तनविधिं विधिवद्विधाय वसुधाधिपतिरचिन्तयत् । 'अस्मिन् मदनमित्रे महोत्सवे ईदृशे प्रदोषे ते साधवः किं कुर्वन्ति, किं यथावादिनस्तथाविधायिनः, किं वान्यथा, विलोकयामि' इति विचिन्त्यालक्षितः सर्वत्र प्रसृते तमोभरे कटीतटनिबद्धक्षुरिकः कृपाणपाणिरेकाकी भूपतिः सौधान्निर्गत्य नगरान्तररथ्यासु मिथुनानां दूतीनामभिसारिकाणां च प्रभूतान्परस्परालापानाकर्णयन् कस्मिंश्चिच्चत्वरे सान्धकारे स्तम्भमिव वृषसेणोद्धृष्यमाणमूर्द्धदमं कमपि मुनिं प्रतिमास्थं कृशाङ्गं दवदग्धस्थाणुसदृशं मन्दाराचलवन्निश्चलं वीक्ष्य दिवा स्तम्भो ऽत्र नाभूत् 'किं को ऽपि धर्मनन्दनसंबन्धी व्रती, अथवान्यः को ऽपि दुष्टः पुमान्, अनेन रूपेण तावत्परीक्षामस्य रचयामि' इति ध्यात्वाकृष्टरिष्टिर्हत हतेति वदन्नासन्नमागतः । तमक्षुब्धं मुनिं वीक्ष्य निक्षिप्य स्तुतिं कुर्वन्प्रदक्षिणात्रयं पूर्वं दत्त्वा प्रणिपत्य पुरतो ऽगच्छद्विद्युदुत्क्षिप्तकरणेन । ततो ऽसौ दुर्लङ्घ्यं प्राकारमुल्लङ्घ्योद्यानासन्नसिन्दूरकुट्टिमतलमाजगाम । तत्र च तेन भूभुजा श्रीधर्मनन्दनाचार्यस्य केचित्साधवो मधुरस्वरेण स्वाध्यायं विरचयन्तः केचिद्धर्मशास्त्राणि पठन्तः केचित्पदस्थपिण्डस्थरूपस्थरूपातीतध्यानदत्तावधानाः केचिद्गुरुचरणशुश्रूषापरायणाः केचिद्विचाराचारपरा विलोकिताः । ततो नृपतिर्दध्याविति । 'अहो यथाभिधायी तथाविधायी' । 'भगवान् क्व पुनः, स स्वयं किं करोति ।' इति विमृशंस्तद्दिनदीक्षितानां तेषां पञ्चानामपि मुनीनां पुरो धर्ममुपदिशन्तं निशम्य किं कथयत्येषामग्रे ।' इति विचिन्त्य नरेश्वरस्तमालतरुमूले निषण्ण इत्यश्रौषीत् । 'भो भो देवानांप्रियाः, कथमपि जीवा इमे पृथिव्यप्तेजोवायुवनस्पतिष्वनन्तकालं भ्रान्त्वा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियतामवाप्य तिर्यक्पञ्चेन्द्रियत्वं च, ततश्चातीवदुर्लभं मनुष्यजन्म लभन्ते । तत्राप्यार्यदेशप्रशस्यजातिसुकुलसर्वेन्द्रियपटुत्वनीरोगताजीवितव्यमनोवासनासद्गुरुसमायोगतद्वचःश्रवणानि दुष्प्रापाणि । इयत्यां सामग्र्यां संपन्नायामपि जिनप्रणीतबोधिरत्नमतीवदुर्लभम् । तच्च लब्ध्वा धर्मं प्रति संशयेन अन्यान्यधर्माभिलाषेण फलं प्रति संदेहेन कुतीर्थिकप्रशंसया तत्परिचयेन चतुर्भिः कषायैः पञ्चभिर्विषयैर्व्यामूढा वृथा निर्गमयन्ति सम्यक्त्वम् । एके च 'ज्ञानमेव प्रधानम्' इति वदन्तः क्रियाहीनाः पङ्गुवत् । अपरे च 'क्रियैव प्रशस्या' इति मन्यमाना अन्धवद्धवदवान्तर्विनश्यन्ति मोहमोहिताः ।' इति कथयति भगवति नृपतिर्ध्यातवान् । 'तावत्सर्वमपि सत्यमेतत् । किं पुनरिदं दुर्लभं राज्यं महिलाप्रभवं शर्म परिजनसुखं चानुपाल्य पश्चाद्धर्ममाचरिष्यामि, इति चिन्तयतस्तस्य महीभृतः श्रीधर्मनन्दनगुरुणा ज्ञानेन भावमुपलक्ष्य तेषामेव पञ्चानां पुरः प्रोचे । 'यदेतद्राज्यसौख्यं स्त्रियश्च लोके सर्वमेतदनित्यं तुच्छं चेति । पुनः सिद्धिभवं सुखमनन्तमक्षयमव्याबाधं चेति ।'

§ २ ) अस्ति समस्तपुरवरं पाटलीपुत्रं पुरम् । तत्र धनो धनेन धनद इव वणिगुत्तमः । सो ऽन्यदा यानपात्रेण रत्नद्वीपं प्रति प्रचलितः । तस्य संचरतः समुद्रान्तः प्रचण्डेन वायुना समुल्लसताभ्रंलिहकल्लोलमालाभिः प्रेर्यमाणं यानपात्रं पुस्फोट । स धनस्तदा क्षुधाक्षामकुक्षिराहारमिव, हिमार्तो वैश्वानरमिव, तृषाक्रान्तस्तोयमिव फलकमेकं प्राप्य सप्तभिर्वासरैः कटुकफलसमाकुलपादपशतसंकुलं संसारमिवालब्धपारं विषमिव महाविषमं कुडङ्गद्वीपमाशिश्राय । तत्र तेन स्वैरं परिभ्रमता सहसापरः पुरुषो ददृशे । धनस्तं निरीक्ष्य हर्षितवदनो भव्यजीव इव जैनधर्मं स्वच्छमनाः पप्रच्छ । 'कुत्रत्यः केन हेतुनात्र

7 > B adds on the margin गुरो befor मुखतः. 8 > B puts No. 1 on फल and No. 2 on विपाक, B adds on the margin चेता after तरलित. 10 > B मित्रमहोत्सवे. 14 > P B om. कोऽपि after किं. 15 > P रूपे तावत्. 16 > P B om. दत्त्वा. 19 > C inter. पदस्थ and पिण्डस्थ. 21 > P om. तेषां, B trans. तेषां after मुनीनां. 25 > P B °तद्वचनश्रवणानि. 33 > P °नंतक्षयम°. 37 > B adds मरुपांथः शाखिनमिव after वैश्वानरमिव, B तृष्टा for तृषा.

1 द्वीपं समायातः।' तेन तदवगम्य भणितम्। 'सुवर्णद्वीपं प्रति प्रचलतो मम भीषणे जलधावगाधे पूर्व- 1
भवार्जितदुष्कृतेनेव वायुना प्रेरितं त्वरितमेवागण्यपण्यसंभृतं पोतमस्फुटत्। ततो ऽहं फलकमेकं प्राप्य
3 कुडङ्गद्वीपमाश्रितः।' ततो धनेनेति भणितं 'सममेवात्र परिभ्रमावः'। अथ तत्रैव ताभ्यां परिभ्रमद्भ्यां 3
कदाचित्तृतीयं पुरुषं मिलितं विलोक्य पृष्टम्। 'भद्र, कुतः पुरादत्र द्वीपे समायातवान्।' तेनेति जल्पि-
तम्। मम व्रजतो लङ्कापुरीं वाहनं भग्नं फलकप्राप्त्यात्र संप्राप्तः।' ताभ्यां निगदितम्। 'अतीव रम्यतरम-
6 भूत्, यदस्माकं त्रयाणामपि समदुःखानां महती मैत्री समजनि। तावदत्र कस्मिन्नपि समुन्नते पादपे भिन्न- 6
यानपात्रचिह्नमूर्ध्वीक्रियते।' तथेति प्रतिपद्य तैर्वल्कलमेकं तरुशिखरे निबद्धम्। ततस्तृष्णाक्षुधाक्रान्ताः
सर्वत्र परिभ्रमन्तस्तं कमपि तादृशं शाखिनं न पश्यन्ति। एवं किल भक्ष्यतरुफलोद्गमः। एवं तैः सर्वत्र
9 द्वीपे स्वैरं विचरद्भिर्दुःखशतसमाकुलैः कथमपि वेश्माकाराणि त्रीणि कुडङ्गानि दृष्टानि। ते एकैकं 9
कुडङ्गमाश्रित्य स्थिताः। तेषु च काकोदुम्बरिकामेकैकां निरीक्ष्य चातीवोच्छ्वसितहृदयैर्भणितम्।
'अहो, सांप्रतं प्राप्तव्यं प्राप्तम्, वयं निर्वृतचेतसः संजाता एतद्दर्शनमात्रेणापि।' तैः कुडङ्गेषु प्रविश्य
12 काकोदुम्बरिकाफलानि विलोकितानि, परमेकमपि फलं न ददृशे। ततस्त्रयो ऽप्यतीवदुर्मनसो बभूवुः। 12
कैश्चिदपि दिवसैस्तेषां मनोरथशतैः काकोदुम्बरिकाः फलाकुलास्तत्र जज्ञिरे। ते काकाद्युपद्रवेभ्यो
रक्षन्तस्तिष्ठन्ति। इतश्च केनापि सांयात्रिकेण करुणावता भिन्नवहनचिह्नमालोक्य कर्णधारद्वयं प्रैषि।
15 ततस्ताभ्यां सर्वत्रान्वेषयद्भ्यां पुरुषत्रयं कुडङ्गस्थं काकोदुम्बरिकाफलबद्धजीविताशयं निरीक्ष्य भणितम्। 15
आवां पोतवणिजा प्रेषितौ भवतामानयनाय। अत्र द्वीपे दुःखशतप्रचुरे किं तिष्ठथ।' तत्रैकेन
नरेणेत्युक्तम्। 'किमत्र द्वीपे कष्टम्, एतत् कुडङ्गं गृहतुल्यम्, एषा च काकोदुम्बरिका फलिता
18 भूयो ऽपि फलिष्यति, अहं महता सुखेनात्र तिष्ठामि, कथमपि परतटं नागच्छामि'। इति भणित्वा तत्रै- 18
वैकः पुरुषः स्थितः। ततस्ताभ्यां निर्यामकाभ्यां द्वितीयो भणितः। 'त्वमपि परतटमागच्छ।' तदाकर्ण्य
तेन भणितम्। 'अहं काकोदुम्बरिकापक्वफलमेकमुपभुज्य यः को ऽपि पश्चान्नाविकः समेष्यति तेन
21 सहागमिष्यामि'। इति भणित्वा द्वितीयो ऽपि तत्र तस्थिवान्। ततस्ताभ्यां तृतीयो भणितः। 'भो भद्र, 21
किमत्र करोषि सांप्रतं परतीरमागच्छ।' 'भवतां स्वागतम्' इति भणित्वा तृतीयः पुमान् ताभ्यां समं
गत्वासमप्रीत्या तरण्यामारुरोह। कियद्भिरपि दिनैर्वहनं तटं प्राप। तत्र पुत्रमित्रकलत्रधनधान्यादि-
24 भिर्वस्तुभिर्मिलितः सततमेव स सुखमनुभवन्नास्ते। 24

§ ३) अथास्योपनयः श्रूयताम्।

य एष जलधिर्घोरः संसारः स दुरुत्तरः। यः कुडङ्गो महाद्वीपः स मानुष्यभवः स्मृतः॥ १
27 ये कुडङ्गा निवासास्ते ये तत्र पुरुषास्त्रयः। त्रिःप्रकारा भवेयुस्ते जीवाः संसारवर्तिनः॥ २ 27
काकोदुम्बरिका यास्तु कान्तास्तास्तारलोचनाः। फलानि यानि तत्र स्युस्तान्यपत्यानि भूरिशः॥ ३
वृथाकृताशापाशास्ते या एवात्यन्तकोविदाः। दारिद्र्यदुःखरोगौघशकुनेभ्यो निरन्तरम्॥ ४
30 यत्परत्र हितं स्वस्य तदेवायाति विस्मृतिम्। वैधेयानां गृहानेककार्यव्यापृतचेतसाम्॥ ५ 30
यः पोतेशः स च गुरुर्निर्यामौ धर्मयोर्युगम्। या तरी तत्र दीक्षा सा यत्तीरं सा च निर्वृतिः॥ ६
संसारदुःखसंतप्तान् जीवानुत्तारयन्ति ये। सर्वदैव महासत्त्वाः सर्वतत्त्वावलोकिनः॥ ७
33 निन्द्यं मनुष्यजन्मेदं शोचनीयमनेकधा। मोक्षसौख्यं भजस्वेति ते वदन्ति यतीश्वराः॥ ८ 33
अभव्यजीवस्तत्रैको द्वीपे ऽत्र नृभवे वदेत्। यत्सौख्यं स च मे मोक्षस्तत्तेन मम किं पुनः॥ ९
ब्रूते द्वितीयः संसारी दूरभव्यो मुनीश्वर। पुत्रमित्रकलत्रादिममत्वं त्यक्तुमक्षमः॥ १०
36 भव्यस्तृतीयो वदति श्रुत्वा सद्धर्मदेशनाम्। मनुष्यलोके कस्तिष्ठेदरिष्टे दुःखबाधया॥ ११ 36
सप्ताङ्गराजि यद्राज्यं प्राज्यं रम्या च संततिः। भवे भवे भवत्येव जैनदीक्षा कदापि न॥ १२
ततो ममालमेतेन जन्मना दुःखजन्मना। समुद्यमं करोम्येष महोदयपदश्रिये॥ १३
39 भूयो ऽप्यूचे कथामेतामुक्त्वा श्रीधर्मनन्दनः। भो वत्सा व्रतदृष्टान्तमाकर्णयत संप्रति॥ १४ 39

§ ४) तथाहि जम्बूद्वीपे ऽत्र क्षेत्रे भरतनामनि। देशो ऽस्ति मगधाभिख्यो वसुधामुखमण्डनम्॥ १५
अनेकदेशविख्यातं श्रियामेकः समाश्रयः। अस्ति राजगृहं तत्र नगरं नगराजितम्॥ १६

1) B द्वीपे समायातस्तेन, B प्रचलितो. 2) P °भवार्जितविगतदुःकृते° B भवार्जिताभितदुःकृते°, P B omit प्रेरितं. 3) P B om. ततो. 8) B सर्वतः for सर्वत्र, C om. एवं किल...फलोद्गमः।. 12) P ततोऽजीवत्रयोपि दुर्मनसो B ततोतीव त्रयोपि दुर्मनसो. 14) P B सांयात्रिकेन. 17) P B एतं or एनं for एतत्, P एका च. 21) P B inter. भणित्वा or द्वितीयोऽपि. 24) P om. स. 26) C °घोरसंसारः 27) P om. second ये, C त्रिप्रकारा. 32) P जीवानुत्तीरयंति B जीवानुत्तरयंति. 33) After वदन्ति य P repeats सर्वदैव महासत्त्वाः etc. to ते वदन्ति. 34) P leaves some space after द्वीपेत्र नृभ and then continues with म मोक्षस्तत्तेन. 41) P °देशतिख्याती श्रेयामेकः.

1 तस्मिन् परंतपो नाम्ना कर्मणा च महीपतिः । विख्यातकीर्तिविस्फूर्तिर्दिशासु चतसृष्वपि ॥ १७ 1
शश्वद्दिवस्वतस्तुल्यो यः कैलासौकसः समः । वाचस्पतेः समानश्च प्रतापेन श्रिया धिया ॥ १८
3 वीतरागपदाम्भोजभृङ्गः सम्यक्त्वधारकः । प्रतापशोषिताशेषारातिभूमीरुहो ऽभवत् ॥ विशेषकम् ॥ 3
वशीकृतनतानेकभूपमौलिविलासिभिः । मणीनां किरणैर्यस्य पादपीठं समर्चितम् ॥ २०
यस्तु कण्ठीरव इव प्रदरैर्नखरैः खरैः । विपक्षान् गजलक्षाणि क्षणुते स क्षमापतिः ॥ २१
6 तस्यानेकपुरन्ध्रीणां श्रेष्ठा ज्येष्ठा गुणश्रिया । समस्ति शशिकान्तास्या शशिकान्ताभिधा प्रिया ॥ २२ 6
तत्र चास्ति महादक्षः शुद्धबुद्धिर्धनाभिधः । श्रेष्ठी गरिष्ठः सुगुणैः पुण्यसंभारभाजनम् ॥ २३
धारिणीति शुभारम्भा रम्भारूपसरूपरुक् । प्रभुतेव सदाचारस्यास्य लोकंपृणा प्रिया ॥ २४
9 धनपालो धनदेवो धनगोपस्तथा परः । धनरक्षितनामाथ चत्वारस्तनयास्तयोः ॥ २५ 9
सर्वे ऽपि पाठिताः पुत्राः पित्रोपाध्यायसंनिधौ । अल्पैरपि दिनैर्विद्यास्वनवद्याश्च ते ऽभवन् ॥ २६
मनोभवनृपोद्यानं शृङ्गारद्रुमजीवनम् । ततस्तेन [ः स्त्रैण ] जनानन्ददायि यौवनमाययुः ॥ २७
12 तत्रैव स धनः पुत्रान् महेभ्यानां समश्रियाम् । कन्यकाभिः सुरूपाभिः क्रमशः पर्यणाययत् ॥ २८ 12
प्रथमस्योज्झिका जाया भक्षिकाख्या परस्य च । रक्षिकाथ तृतीयस्य चतुर्थस्य तु रोहिणी ॥ २९
सुखं विषयजं ताभिः सेवमानाः सुता गतम् । भूयिष्ठमपि ते कालं देवा इव न जानते ॥ ३०
15 स कदाचिद्धनः श्रेष्ठी जजागार निशाञ्चले । धर्मानुध्यानमाधाय गृहचिन्तां चकार च ॥ ३१ 15
स्त्रिया गृहस्य निर्वाहो नरि यन्तरि सत्यपि । धुरयेव शताङ्गस्य भृतस्यानेकवस्तुभिः ॥ ३२
पुत्रपौत्रवधूभृत्यैराकीर्णमपि मन्दिरम् । भार्याहीनं गृहस्थस्य शून्यमेव विभाव्यते ॥ ३३
18 भुक्ते प्रियतमे भुङ्क्ते सुप्ते च स्वापिति स्वयम् । तस्य पूर्वं च जागर्ति सा श्रीरेव न गेहिनी ॥ ३४ 18
करोति सारां सर्वस्मिन् द्विपदे च चतुष्पदे । सर्वस्यौचित्यमाधत्ते सा लक्ष्मीर्गृहिणीमिषात् ॥ ३५
एतासां तु वधूटीनां मध्यान्मम निकेतने । गृहभारसमुद्धारकारिणी का भविष्यति ॥ ३६
21 ततः स प्रातरुत्थाय प्रातःकृत्यं विधाय च । सूपकारैः कलासारैर्धान्यपाकमकारयत् ॥ ३७ 21
पितृवर्गं चतसृणां वधूटीनां निमन्त्र्य सः । अपरं पौरलोकं च भोजयामास सादरम् ॥ ३८
भोजनान्ते ततः श्रेष्ठी बान्धवान् स न्यवेशयत् । सत्त्वकार च ताम्बूलस्रग्दुकूलविलेपनैः ॥ ३९
24 § ५ ) समक्षमथ सर्वेषां वधूमाकार्य चोज्झिकाम् । पञ्च शालिकणास्तस्याः समार्पयदखण्डितान् ॥ ४० 24
गत्वैकान्ते तया चित्ते विन्तितं मन्दमेधसा । अभूद्वृद्धत्वसंबन्धात् श्वशुरो विपरीतधीः ॥ ४१
महान्तमुत्सवं कृत्वा जनानाहूय सर्वतः । पञ्च शालिकणानेष पाणौ मम यदार्पयत् ॥ ४२
27 त्यजामि किं कणैरेतैर्यदा याचिष्यते ऽसकौ । तदान्यानर्पयिष्यामि ध्यात्वेत्युज्झांचकार तान् ॥ ४३ 27
अथ वध्वै द्वितीयस्यै पञ्च शालिकणान् ददौ । धनः श्रेष्ठी गृहीत्वा सा विजने ऽचिन्तयच्चिरम् ॥ ४४
हेतुना श्वशुरः केन भ्रान्तो बुद्धियुतो ऽप्यसौ । यः कार्येण विना गेहे तनुते द्रविणव्ययम् ॥ ४५
30 प्रयच्छति कणान् पञ्च लोकस्य पुरतः करे । त्यजामि तान् कथं दत्ता ये तातेन मम स्वयम् ॥ ४६ 30
सा स्नुषा निस्तुषानेतान् कृत्वा क्षिप्रमभक्षयत् । आकारयदथ श्रेष्ठी तृतीयां रक्षिकां वधूम् ॥ ४७
व्यश्राणयत्कणान् पञ्च तस्याः सा च व्यचिन्तयत् । मन्ये किंचिन्महत्कार्यं कणैरेतैर्भविष्यति ॥ ४८
33 सर्वानेतान् प्रयत्नेन रक्षामि महता यदा । याचिष्यते गुरुस्तूर्णमर्पयिष्ये तदा कणान् ॥ ४९ 33
हृदये चिन्तयित्वेति स्वालङ्कारकरण्डके । शुद्धवस्त्रे नियन्त्र्येति क्षिप्त्वा रक्षिकया तया ॥ ५०
वीक्षामास त्रिसंध्यं सा देवतामिव तान् कणान् । आकारिता ततस्तेन चतुर्थी रोहिणी वधूः ॥ ५१
36 तेन प्रजल्पिता दत्त्वा पञ्च शालिकणान् करे । त्वत्तो वत्से यदा याचे देया एते तदा त्वया ॥ ५२ 36
विजने रोहिणी गत्वाचिन्तयद्बुद्धिशालिनी । मत्या मे श्वशुरो वाचस्पतिप्रतिकृतिः कृती ॥ ५३
महाजनप्रधानो ऽसौ नानाशास्त्रविशारदः । वर्धयामि तदेतेन प्रदत्तं कणपञ्चकम् ॥ युग्मम् ॥ ५४
39 तयैवं ह्यनुध्याय प्रेषितास्ते पितुर्गृहे । भ्रातॄणामिति चादिष्टं निजा इव कणा अमी ॥ ५५ 39
वर्षे वर्षे च वर्षासु वापं वापं स्वहालिकैः । तथा कथंचनाधेयं यान्ति वृद्धिं यथा पराम् ॥ युग्मम् ॥ ५६
ततस्तैर्बन्धुभिस्तस्या गिरा प्राप्ते घनागमे । उप्ताः शालिकणाः पञ्च ते वप्रे वारिहारिणि ॥ ५७
42 स्तम्बीभूय गता वृद्धिं शालयः कणशालिनः । प्रस्थस्तेषामभूदेकः प्रथमे वत्सरे ततः ॥ ५८ 42

---

11 ) P B ततस्तेन. 18 ) B स्वप्ते for सुप्ते. 25 ) P B स्वसुरो. 34 ) P क्षिप्ता. 36 ) P पञ्च शाखाकणान्. 41 ) P वप्रे कारिहारिणि.

द्वितीये त्वाढको ऽनेके द्रोणा वर्षे तृतीयके । खारीशतानि तुर्ये तु पल्यलक्षाणि पञ्चमे ॥ ५९
अथान्यस्मिन् दिने श्रेष्ठी निमन्त्र्य स्वजनान् बहून् । महान्तमुत्सवं चक्रे पूर्वरीत्या निकेतने ॥ ६०
समाहूयोज्झिकां ज्येष्ठां वधूमर्थयति स्म सः । वत्से समर्पय मम तच्छालिकणपञ्चकम् ॥ ६१
तदाकर्ण्य गृहस्यान्तः सहसापि प्रविश्य सा । पञ्च शालीनथानीय तस्य हस्ते समार्पयत् ॥ ६२
तेनापि जल्पिता सर्वप्रत्यक्षं शपथैर्निजैः । त एव शालयो वत्से न वा सत्यं वदाधुना ॥ ६३
तयाथ जल्पितं तात प्रोज्झितास्ते मया कणाः । श्रुत्वेति लोकपुरतः श्रेष्ठी रुष्टः स जल्पति ॥ ६४
अयुक्तं कृतमेतेन यूयमेतद्भणिष्यथ । अन्यथा पापया त्यक्ताः शालयस्ते मदर्पिताः ॥ ६५
तस्मादस्याः करिष्यामि फलं तत्त्यागसंभवम् । छगणादिपरित्यागकारिणी भवतूज्झिका ॥ ६६
द्वितीयां तामथाहूय श्रेष्ठ्यूचे पुत्रि तान् कणान् । समर्पय ममेदानीं साब्रवीद्भक्षिता मया ॥ ६७
स श्रेष्ठिपुङ्गवो ऽवोचत् स्वजनानां पुरस्ततः । पचनादिषु कार्येषु भवताद्भक्षिका वधूः ॥ ६८
तृतीया श्वशुरेणोक्ता सा शालिकणरक्षणम् । निजं न्यवेदयत्तुष्टः श्रेष्ठिश्रेष्ठस्ततो ऽवदत् ॥ ६९
मदीयमन्दिरे लोकाः कोशे सर्वाधिकारिणी । वधूटी रक्षिकानाम्नी भवत्वेषा ममाज्ञया ॥ ७०
आकार्य जल्पितानेन चतुर्थी रोहिणी ततः । समानय कणान् पञ्च वत्से त्वमपि सांप्रतम् ॥ ७१
प्रजल्पितं तया तात शकटानि बहूनि मे । अर्प्यन्तां वृषभाः प्राज्याः शालिरानीयते यथा ॥ ७२
अभाणि श्रेष्ठिना तेन वत्से पञ्च कणाः कथम् । जज्ञिरे यानवाह्यास्ते स हेतुः कथ्यतां मम ॥ ७३
यत्कृतं मूलतो वध्वा कथितं तत्पुरस्तथा । मुदितस्तत्तदाकर्ण्य स श्रेष्ठी समजायत ॥ ७४
स्नुषायाः सो ऽर्पयामास शकटान् वृषभांस्तथा । अथानीतस्तया वध्वा शालिः सर्वः पितुर्गृहात् ॥ ७५
प्राहाथ स्वजनो धन्यो धनो यस्येदृशी वधूः । निन्यिरे कीदृशीं वृद्धिं पञ्च शालिकणा यया ॥ ७६
ऊचे तया ततस्तात गृह्यन्तां पञ्च ते कणाः । इति श्रुत्वा तदा श्रेष्ठी जनप्रत्यक्षमब्रवीत् ॥ ७७
सर्वस्वस्वामिनी गेहे वधूर्मम भवत्वसौ । अस्या एव समादेशः कर्तव्यः सर्वमानुषैः ॥ ७८
अस्या यः खण्डयत्याज्ञां स्थातव्यं तेन नो गृहे । सर्वैरपि जनैः शीर्षे तद्वचः शेखरीकृतम् ॥ ७९
उद्यदानन्दसंदोहमेदुरः स धनः क्रमात् । निश्चिन्तचित्तः सद्धर्मालङ्कर्मीणस्ततो ऽभवत् ॥ ८०
एतदाख्यानकं शैक्षाः कथितं भवतां मया । सिद्धान्तोदितमेतस्य भावार्थं शृणुताधुना ॥ ८१
यथा राजगृहं लोके मानुषत्वमिदं तथा । यथा धनस्तथाचार्यो विचारचतुराननः ॥ ८२
यथा वध्वस्तथा ज्ञेया विनेयाश्च चतुर्विधाः । पञ्च शालिकणा ये सा ज्ञेया पञ्चमहाव्रती ॥ ८३
यथा स्वजनवर्गो ऽसौ तथा संघश्चतुर्विधः । दानं शालिकणानां यत्तन्महाव्रतरोपणम् ॥ ८४
उज्झिकेव शालिकणानुज्झेत्पञ्चमहाव्रतीम् । यः स्यादत्र परत्रापि स दुःखौघस्य भाजनम् ॥ ८५
निश्शङ्कमुपभुक्तास्ते यथा भक्षिकया तया । व्रतमाजीविकाहेतोर्न विधेयं तथा बुधैः ॥ ८६
ररक्ष रक्षिका यद्वत् तच्छालिकणपञ्चकम् । तद्वद्व्रतिजनै रक्ष्यं तन्महाव्रतपञ्चकम् ॥ ८७
महाव्रतानि संप्राप्य वृद्धिं नेयानि धीमता । रोहिण्या गुरुणा दत्ताः पञ्च शालिकणा यथा ॥ ८८

। इति व्रतदृष्टान्तः ।

§ ६ ) विनयः शासने मूलं विनीतः संयतो भवेत् । विनयाद्विप्रमुक्तस्य कुतो धर्मः कुतस्तपः ॥ ८९
विनीतः श्रियमाप्नोति विनीतस्तूज्ज्वलं यशः । कदापि दुर्विनीतेन नैव स्वार्थः प्रसाध्यते ॥ ९०
यतः,
गुणवानपि नाप्नोति नूनं स्तब्धः परां श्रियम् । किंचिन्नम्रः पिबन्नम्भः कुम्भः प्राप्नोति पूर्णताम् ॥ ९१
अपराधतमःस्तोमनिर्मूलनदिनेश्वरः । स्वर्गापवर्गसंसर्गकारणं विनयः सदा ॥ ९२
विनयः सर्वथा कार्यः कुलीनेन वपुष्मता । गुरूणां गुणवृद्धानां तथा बालतपस्विनाम् ॥ ९३
गुणेषु विनयः श्लाघ्यस्तेजस्विषु यथा रविः । येन कर्मग्रहाः सर्वे प्रच्छाद्यन्ते निजोदयात् ॥ ९४
विनयात्संपदः सर्वा मेघादिव जलर्द्धयः । केवलज्ञानलाभश्च विनीतस्यैव जायते ॥ ९५
तथा हि ।
जम्बूद्वीपाभिधे द्वीपे क्षेत्रे भरतनामनि । क्षमापुरी क्षमारम्या समस्ति स्वस्तिकारिणी ॥ ९६

1) B त्वाढकानेके. 5) B नो वा for न वा. 16) P तत्पुरस्तया. 18) P प्राहाथ स जनो. 27) P °कणानुज्झेव पंच°.
31) P B इति व्रतदृष्टांतः ॥ १४२७ ॥ छ ॥ छ ॥ ( P has the symbol of *bhale* instead of छ ॥ छ ॥ ) नमः श्री सर्वज्ञाय ॥.
35) P किंचिनिम्रगः, P om. कुम्भः. 36) P निर्मूलनं दि°.

यस्या उन्नत[रम्य]राजसदनश्रेण्याः पुरो मेनकाप्राणेशो ऽपि बभूव हीनमहिमा वन्यश्रियामग्रतः ।
निःस्वानन्दनकाननस्य सुषमा क्षीराशयानां पुरः पंपादीनि सरांसि हन्त नितरां मुञ्चन्त्यहंकारिताम् ॥९७
तत्र क्ष्मापतिरभूत् क्ष्मापतिकृतस्तुतिः । नभस्तले भानुरिव श्रीमान् हर्षाभिधः सुधीः ॥ ९८
गुणौघे विद्यमाने ऽपि लोभो यस्याधिको ऽभवत् । अभिरामं गुणग्रामं ग्रहीतुं गुणशालिनाम् ॥ ९९
समुद्रकन्दर्पघनाघनानां सारं समादाय विधिर्व्यधाद्यम् ।
न चेदिदं तत्कथमन्यथाभूदसौ गभीरः सुभगः प्रदाता ॥ १००
यश्चानूनगुणप्रसूनपटलप्रत्युल्लसत्सौरभ-
व्याप्ताशेषमहीतलः शुभकलः श्रेयः श्रियामाश्रयः ।
स्फूर्जत्कीर्तिलतावितानविलसत्कन्दः सदानन्दभूः
प्रोन्मीलत्सुकृतोन्मुखो न विमुखो याच्ञाकृतां कुत्रचित् ॥ १०१
माद्यच्छात्रवकोटिकोटिकरटिप्रस्फोटकण्ठीरव-
स्ताम्यन्नीतिलतावलीकिशलनप्रोद्दामधाराधरः ।
यत्कीर्त्या च शुचीकृते त्रिभुवने ऽश्रान्तं स्फुरन्त्याभितः
सर्वज्ञो ऽपि वसन्न वेत्ति नियतं कैलासशैलं निजम् ॥ १०२
कल्पद्रुमाद्या ददतीप्सितं यत् सा शास्त्रवार्ता किल तेन दृश्या ।
प्रत्यक्षमेतं वसुधाधिनाथं तत्तन्मयं निर्मितवान् विधाता ॥ १०३

तत्र श्रेष्ठिपदभ्रष्टः श्रेष्ठी दौर्मुख्यदोषतः । विषवाक्य इति ख्यातो विद्यते कृषिजीवनः ॥ १०४
अन्यदा भक्तमादाय स्वयं कर्मकृतां कृते । गच्छन् शून्ये ददर्शैष रुदन्तं बालमेककम् ॥ १०५
प्रोद्यत्कृपाभरभ्राजिहृदयः शिशुमाशु तम् । लात्वा स्वपाणिनारोप्य कटीतटमभोजयम् ॥ १०६
त्यक्तः केनाप्ययं पाको वराकस्तद्विपत्स्यते । स्वीकृतेनैव तेनेति श्रेष्ठी क्षेत्रं ययौ निजम् ॥ १०७
स स्ववेश्म समागत्यापत्याभावार्दितस्ततः । दीनास्यायै कुटुम्बिन्यै तं मुदा डिम्भमार्पयत् ॥ १०८
लाल्यमानस्तया नित्यमात्मनात्मेव बालकः । कलाभिः कलितः प्राप कलाभृदिव यौवनम् ॥ १०९
दग्धं पितृगिरा लोकं स्ववाक्यैरमृतैरिव । निर्वापयन्नभूत्ख्यातः संख्यावान् सर्वतो ऽपि सः ॥ ११०
विनीत इति नाम्नाथ सर्वत्र प्रथितो ऽभवत् । श्रेष्ठित्वं नृपतिस्तुष्टो ऽदात्तस्मै तत्पितुः पदम् ॥ १११
जिनशासनमाहात्म्यसमुल्लासनवासनः । अभिरामगुणग्रामद्रुमारामो ऽवनीतले ॥ ११२
यो ऽभवन्नयनानन्ददायी यायी सदध्वनि । अवदातयशोजातसंपूरितदिगन्तरः ॥ ११३
श्रमणक्रमणाम्भोजसेवाहेवापरः सदा । अर्थसंप्रीणितात्यर्थावनीतलवनीपकः ॥ ११४
पैतृकं च पदं प्राप्य प्रसन्नमनसो नृपात् । स विनीतः श्रियां पात्रं भाग्यसौभाग्यभूरभूत् ॥ ११५

§ ७ ) अथ तत्रैव दुर्भिक्षं भीषणं समुपस्थितम् । यत्र धर्मक्रियालोपो भव्यानामपि संभवेत् ॥ ११६
कुतो ऽपि स्थानतो ऽभ्येत्य नित्यदुर्भिक्षदुःखिताः । वृद्धो वृद्धा युवा चैको ऽभवंस्तदनुजीविनः ॥ ११७
अथ वैरिदत्तकम्पा चम्पा नाम महापुरी । तत्रास्ति पृथिवीनाथो जितारिरिति संज्ञया ॥ ११८
प्रतापी कमलोल्लासी नृपस्तपनसंनिभः । न कर्कशकरश्चित्रं न गोमण्डलतापकृत् ॥ ११९
श्यामास्यो हि घनो वर्षन् तमोघ्नस्तपनस्तपन् । यः प्रभुस्त्वार्थिनो ऽत्यर्थमर्थैः प्रीणन्न तादृशः ॥ १२०
श्रीदर्पः कृतहर्षश्रीर्जिघृक्षुस्तमधीश्वरम् । प्रचचाल विनीतेन सार्धं प्रेष्ययुतेन सः ॥ १२१
तदागमं परिज्ञाय चम्पेशः संमुखो ऽचलत् । ततः परस्परं युद्धं सैन्ययोरुभयोरभूत् ॥ १२२
अरुधत्सादिनं सादी निषादी च निषादिनम् । रथिको रथिकं पत्तिः पत्तिं च स्फूर्तिमूर्तिभृत् ॥ १२३
निशातशरधोरण्या भटैर्दर्पसमुद्धवैः । अकालवृष्टिर्विहिता कालरात्रिरिवापरा ॥ १२४
रणे निपेतुर्मातङ्गास्तीव्रं प्रदरजर्जराः । शतकोटिक्षताः साक्षात् पर्वता इव सर्वतः ॥ १२५
शितकुन्ताहताङ्गाच्चोच्छलच्छोणितदम्भतः । कौसुम्भवसनेवाभूदम्भोधिवसना युधि ॥ १२६
निजस्वामिप्रसादस्याभूम भूम्ना ऽनृणा वयम् । इति वीरकबन्धास्ते नृत्यन्तस्तत्र रेजिरे ॥ १२७
उल्लल्लोहिताम्भोभिर्भीमा सङ्ग्रामभूमिका । कबन्धानि वहत्याशु काष्ठानीव तरङ्गिणी ॥ १२८

---

1 ) P उत्तरराज B उन्नतराज. 3 ) P क्ष्मापतिः कृत.° 4 ) B °को भवेत् ।. 5 ) P घनाघनीनां. 15 ) P B दृश्याः. 20 ) P °द्विपश्यति. 25 ) B °द्रुमारामेवनीतलः. 26 ) P यशोयातः. 28 ) P विनीतश्रियः पात्रं B विनीतः श्रियः पात्रं. 30 ) P वृद्धो वृद्धीमुवाचैको. 33 ) P प्रभुस्त्वर्थिने°. 39 ) P °हितांगाच्छोछलत् शोणित°.

1 दैवाचम्पेशसैन्यस्य सुभटैः करटैरिव । दिवान्धसैन्यवद्धर्षसैन्यं दैन्यमनीयत ॥ १२९ 1
पताकिन्यपि निःशेषा तस्य हर्षमहीपतेः । ननाश काकनाशं सा जीवमादाय सत्वरम् ॥ १३०
3 नश्यद्भिः पदिकैस्त्यक्तो विनीतो ऽपि गते विभौ । परं प्रेष्यैर्न तैर्मुक्तश्चेतनः सुकृतैरिव ॥ १३१ 3
पलायमानः प्रैक्षिष्ट स विनीतः सरस्वतीम् । तत्र स्नात्वा पयः पीत्वा तीरवृक्षमशिश्रयत् ॥ १३२
§ ८ ) अत्रान्तरे काान्दिशीकमेकमायुधपाणिना । केनचित्सादिना हन्यमानं मृगमवैक्षत ॥ १३३
6 कृपासंपूरितस्वान्तः स तयोरन्तरा स्थितः । यतः प्राणिपरित्राणं स्वप्राणैः के ऽपि कुर्वते ॥ १३४ 6
तस्मिन् सरङ्गे सारङ्गे गते दूरं निरीक्ष्य सः । जगाद सादिनं रोषपोषिणं मृगरक्षणात् ॥ १३५
सर्वप्राणिशरण्यानामुन्नतानां महात्मनाम् । त्वादृशां न समीचीनं दीनजन्तुविनाशनम् ॥ १३६
9 मन्ये त्वं लक्षणैरेभिः को ऽप्यसि क्षत्रियोत्तमः । शस्त्रघातो गृहीतास्त्रे क्षत्रियाणां प्रशस्यते ॥ १३७ 9
इत्यादिवाक्यैः पीयूषपेशलैस्तस्य तन्वतः । स भूपः पृथिवीचन्द्रः प्रबुद्धः कोपमत्यजत् ॥ १३८
धर्मोपदेशदातासौ ममाभूदिति तं समम् । उपकारचिकीः क्ष्मापः पुरे क्ष्मातिलके ऽनयत् ॥ १३९
12 तं विनीतं महीनाथः स्वपुरे सचिवं व्यधात् । सर्वाधिकारिणं यस्माद्गुणैः कस्को न रज्यते ॥ १४० 12
एतस्यानुपदं ते ऽथ त्रयो ऽपि प्राच्यकिंकराः । तामेव नगरीं प्राप्य सेवाहेवाकिनो ऽभवन् ॥ १४१
रक्षता सततं तेन न्यायेन नगरीजनम् । ऊर्जितोपार्जिता कीर्तिरात्मीयो ऽर्थस्तु साधितः ॥ १४२
15 तेनेत्युक्ताः कर्मकृतः स्नेहात्किमपि याचत । ते ऽवदन्निति निर्लोभा भाग्यैर्लभ्या हि किंकराः ॥ १४३ 15
§ ९ ) अथ क्षमापुरी भग्ना क्षणादेव जितारिणा । चम्पापुरीमहीपेन सर्वसैन्यजुषा रुषा ॥ १४४
स्वपुरीस्वपुरीस्वामिभङ्गतो वित्तहानितः । विषवाक्यो विनीतात्मा प्रवव्राज विरागवान् ॥ १४५
18 तप्यमानस्तपस्तीव्रं सहमानः परीषहान् । आधीयानः स सिद्धान्तं तन्वन्नाराधनां गुरौ ॥ १४६ 18
पापकर्मसु तन्द्रालुः श्रद्धालुर्धर्मकर्मसु । दयालुः सर्वभूतेषु स्पृहयालुः शिवाध्वनि ॥ १४७
सासहिश्चोपसर्गाणां शीलाङ्गानां च वावहिः । चाचलिः श्रमणाचारे सिद्धान्ताध्वनि पापतिः ॥ १४८
21 आजगाम समं स्वेन गुरुणा करुणानिधिः । तत्र क्ष्मातिलकपुरे विषवाक्यमुनिः क्रमात् ॥ १४९ 21
चतुर्भिः कलापकम् ॥

अनुज्ञाप्य गुरून् सो ऽथ मासक्षपणपारणे । प्रविवेश परिभ्राम्यन् विनीतसचिवौकसि ॥ १५०
24 कथमेवंविधो भूत्वास्माकीनस्वामिनः पिता । उच्चनीचादिगेहेषु पर्यटत्येष दुर्बलः ॥ १५१ 24
ततस्तमघसंघातघातिनं व्रतिनं मुदा । कर्ममर्मच्छिदं कर्मकृतः सर्वे ववन्दिरे ॥ १५२
तद्दत्तमन्नपानाद्यमकल्प्यमिति चेतसि । विचिन्त्य नाग्रहीत्साधुर्व्यावृत्योपाश्रयं गतः ॥ १५३
27 आगतस्य नृपावासाद्विनीतस्य च तस्य ते । प्रमोदमेदुराः कर्मकरास्तच्च न्यवेदयन् ॥ १५४ 27
तथैव सुविनीतात्मा विनीतो मन्त्रिपुङ्गवः । तपःपात्रस्य शिश्राय मुनेः पितुरुपाश्रयम् ॥ १५५
निरीक्ष्य विषवाक्यस्य मुनेरास्यसितद्युतिम् । विनीतसचिवाधीशचित्ताम्भोधिरवर्धत ॥ १५६
30 शुशोच च स्वं यदयं मम वेश्मागतो ऽपि हि । अगृहीतान्नपानीयो मुनिर्व्यावृत्य जग्मिवान् ॥ १५७ 30
स विनीतस्ततः शुद्धश्रद्धासंभारसंभृतः । अवन्दत गुरून् पूर्वं तथा च जनकं निजम् ॥ १५८
ततो गुरुरभाषिष्ट स्पष्टवाग्मन्त्रिनायक । शृणु धर्मवचश्चारु क्षिप क्षिप्रमघव्रजम् ॥ १५९
33 मा मुहस्त्वं मुधा स्नेहे ऽमुष्मिन् संसारकारिणि । आदरं कुरु सद्धर्मे ध्रुवं संसारहारिणि ॥ १६० 33
धर्मः पितेव मातेव हितं यद्विदधात्ययम् । क्रियते तन्न केनापि शिशूनामिव देहिनाम् ॥ १६१
स च धर्मस्तितिक्षादिर्भिक्षूणां दशधा मतः । सम्यक्त्वमूलो गृहिणां ज्ञेयो द्वादशधा पुनः ॥ १६२
36 देवे ऽर्हति गुरौ साधौ धर्मे च जिनभाषिते । या स्थिरा वासना सम्यक् सम्यक्त्वसिदमाश्रय ॥ १६३ 36
स्थूलाहिंसादीनि पञ्चाणुव्रतानि गुणत्रिकम् । शिक्षाव्रतचतुष्कं च स्वीकुरुष्व शिवश्रिये ॥ १६४
विधेहि विधिना मन्त्रिन् त्रिसंध्यं देवतार्चनम् । चिरं चारुयशः कुन्दधवलं प्राप्नुहि स्फुटम् ॥ १६५
39 दीनादीनां श्रियं देहि विधेहि विशदं मनः । न्यायाध्वनि भवाध्वन्यो भिन्द्धि क्रोधादिशात्रवम् ॥ १६६ 39
जिनेन्द्रमुखसंभूतं सिद्धान्तं सादरं शृणु । सिद्धिसीमन्तिनीं शर्मदायिनीं तत्क्षणाद्वृणु ॥ १६७
सर्वसौख्यमयं स्थानं क्वापि मोक्षं विना न यत् । विद्यते देहिभिर्भाव्यं तत्तदर्थं समुत्सुकैः ॥ १६८

12 ) P सर्वाधिकारणं. 15 ) P तेवदन्नतिनिर्लोभा B तेवदन्नेति°. 25 ) P संयात. 26 ) B तद्दत्तमन्नपानीयमकल्पमिति. 33 ) P ध्रुवसंसार. 41 ) C समुत्सकैः.

§ १० ) तथा च । जीवाजीवपुण्यपापाश्रवसंवरनिर्जराबन्धमोक्षानि नव तत्त्वानि । दानशीलतपोभावनामयश्चतुर्विधो धर्मः । आश्रवपञ्चकाद्विरतिः पञ्चेन्द्रियाणां निग्रहः क्रोधमानमायालोभलक्षणदुर्जेयकषायजयः मनोदण्डवचनदण्डकायदण्डत्रयविरमणं चेति सप्तदशधा संयमः । नरकगति-तिर्यग्गति-मनुष्यगति-देवगतिलक्षणाश्चतस्रो गतयः । मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानमिति पञ्च [ ज्ञानानि ] । अनित्यता १ अशरण २ भव ३ एकत्व ४ अन्यता ५ अशौच ६ आस्रव ७ संवर ८ निर्जरा ९ धर्मस्वाख्याततता १० लोक ११ बोधि १२ प्रमुखा भावना द्वादश । नमस्कारसहित १ पौरुषी २ पुरिमार्धं ३ एकासनक ४ एकस्थानक ५ आचामाम्ल ६ उपवास ७ चरिम ८ अभिग्रह ९ विकृति १० प्रभृतिदशविधं प्रत्याख्यानम् । अथवा-'अनागतमतिक्रान्तं, कोटीसहितं नियन्त्रितं चैव । साकारमनाकारं परिमाणकृतं निरवशेषम् ॥ संकेतमद्धा' चैतदपि दशविधम् । क्षुधा १ पिपासा २ शीत ३ उष्ण ४ दंश ५ अचेल ६ अरति ७ स्त्री ८ चर्या ९ निषीधिका १० शय्या ११ आक्रोश १२ वध १३ याचना १४ अलाभ १५ रोग १६ तनुस्पर्श १७ मल १८ सत्कारपुरस्कार १९ प्रज्ञा २० अज्ञान २१ सम्यक्त्व २२ [ लक्षणाः ] द्वाविंशति परीषहाः । स्पर्शन-रसन-घ्राण-चक्षुः-श्रोत्राणीन्द्रियपञ्चकम् । औत्पत्तिकी १ वैनयिकी २ कार्मजा ३ पारिणामिकी ४ चेति चतस्रो बुद्धयः । आर्तध्यानं रौद्रध्यानं धर्मध्यानं शुक्लध्यानं चेति चतुर्विधं ध्यानम् । पदस्थं पिण्डस्थं रूपस्थं रूपातीतमेतदपि चतुर्धा । ज्ञानं दर्शनं चारित्रं चेति रत्नत्रयम् । कृष्णलेश्या १ नीललेश्या २ कापोतलेश्या ३ तेजोलेश्या ४ पद्मलेश्या ५ शुक्ललेश्या ६ चेति [ लेश्या ] षट्कम् । सामायिकं १ चतुर्विंशतिस्तवो २ वन्दनकं ३ प्रतिक्रमणं ४ कायोत्सर्गः ५ प्रत्याख्यानं ६ [ चेति ] षड्विधमावश्यकम् । पृथ्वीकायो ऽप्कायस्तेजस्कायो वायुकायो वनस्पतिकायस्त्रसकायश्चेति षड् जीवनिकायाः । मनोयोगो वचनयोगः काययोगश्चेति योगत्रयी । ईर्यासमिति-भाषासमिति-एषणासमिति-आदाननिक्षेपसमिति-उत्सर्गसमिति [ लक्षणाः ] पञ्च समितयः । इन्द्रियपञ्चकं मनोबलं वचनबलं कायबलं चेति बलत्रयम् उच्छ्वासो निःश्वास आयुश्चेति दशविधाः प्राणाः । मद्यं विषयाः कषाया निद्रा विकथाश्चेति प्रमादपञ्चकम् । अनशनमूनोदरता वृत्तिसंक्षेपो रसत्यागस्तनुक्लेशः संलीनता चेति षड्विधं बाह्यं तपः । प्रायश्चित्तं वैयावृत्यं स्वाध्यायो विनयो व्युत्सर्गः शुभध्यानं चेत्याभ्यन्तरं षड्विधं तपः । आहारसंज्ञा १ भयसंज्ञा २ मैथुनसंज्ञा ३ परिग्रहसंज्ञा ४ [ रूपाः ] चतस्रः संज्ञाः । ज्ञानावरणीयं १ दर्शनावरणीयं २ वेदनीयं ३ मोहनीयम् ४ आयुष्कं ५ नाम ६ गोत्रम् ७ अन्तरायं ८ चेत्यष्टधा कर्म । मनोगुप्तिर्वचनगुप्तिः कायगुप्तिरिति गुप्तित्रयम् । अपायापगमातिशयः ज्ञानातिशयः पूजातिशयो वचनातिशयश्चेति चत्वारो ऽतिशयाः ।

§ ११ ) तथा च श्रीजिनेश्वराणां चतुस्त्रिंशदतिशया यथा । देहो ऽद्भुतरूपगन्धो निरामयः स्वेदमलविवर्जित इति प्रथमः । उच्छ्वासनिःश्वासौ कमलपरिमलोपमाविति द्वितीयः । रुधिरामिषे तु गोक्षीरधाराधवले अनामगन्धिके चेति तृतीयः । आहारनीहारविधी अदृश्यौ चेति चतुर्थः । अदृश्ये इति मांसचक्षुषां न पुनरवध्यादिलोचनेन पुंसा । यदाहुः,

'पच्छन्ने आहारे अदिस्से मंसचक्खुणो ।' एष चतुर्थः ।

एते चत्वारो ऽपि जगतो ऽप्यतिशेरते तीर्थकरा एभिरित्यतिशयाः, सहोत्थाः सहजन्मानः । अथ कर्मक्षयजा अतिशयाः । योजनप्रमाणे ऽपि क्षेत्रे समवसरणभुवि नृणां देवानां तिरश्चां च कोटिकोटिसंख्यमवस्थानमिति प्रथमः कर्मक्षयजो ऽतिशयः । वाणी अर्धमागधी नरतिर्यक्सुरलोकभाषया संवदति तद्भावाभावेन परिणमतीत्येवंशीला, योजनमेकं गच्छति व्याप्नोत्येवंशीला योजनगामी चेति द्वितीयः । भानां प्रभाणां मण्डलं भामण्डलं मौलिपृष्ठे शिरःपश्चिमभागे तच्च विडम्बितदिनकरबिम्बलक्ष्मीमनोहरमिति तृतीयः । साग्रे पञ्चविंशतियोजनाधिके गव्यूतिः क्रोशद्वये गव्यूतीनां शतद्वये योजनशत इत्यर्थः, रोगो ज्वरादिर्न स्यादिति चतुर्थः । तथा वैरं परस्परविरोधो न स्यादिति पञ्चमः । तथा ईतिर्धान्योपद्रवकारी प्रचुरो मुषिकादिप्राणिगणो न स्यादिति षष्ठः । तथा मारिरौत्पातिकं सर्वगतं मरणं न स्यादिति सप्तमः । तथा अतिवृष्टिर्निरन्तरं वर्षणं न स्यादित्यष्टमः । तथा अवृष्टिः सर्वथा वृष्ट्यभावो न स्यादिति नवमः । दुर्भिक्षं भिक्षायाम-

---

4 ) P मनःपर्याय B मनःपर्यय. 5 ) P B put serial nos. for अनित्यता etc. 6 ) P B put serial nos. in. some of these lists, and here and there they are separately written with terminations. C is not quite particular in putting these nos. 7 ) P वरिस for चरिम. 11 ) C om. अज्ञान. 17 ) P २ तेउकाय ३ वाउकाय ४ वनस्पति. 24 ) P मोहनीयं च ३ आयुचतुष्कं. 25 ) P गुप्तिरिति त्रयम्. 27 ) C adds च after श्री जिनेश्वराणां. 33 ) B कोटिकोटिसंख्यानामवस्थानमिति. 35 ) P योजनगामिनो B योजनगामिनां. 37 ) P B कोशद्वयं.

1 भावो न स्यादिति दशमः। तथा स्वराष्ट्रात्परराष्ट्राच्च भयं न स्यादित्येकादशः। एवमेकादशातिशयाः कर्मणां 1
ज्ञानावरणीयादीनां चतुर्णां घातात् क्षयाज्जायन्ते इति। तथा देवकृता अतिशयाः। खे आकाशे धर्म-
3 प्रकाशकं चक्रं भवतीति देवकृतः प्रथमोऽतिशयः। तथा खे चमरा इति द्वितीयः। तथा खे पादपीठेन सह 3
मृगेन्द्रासनं सिंहासनमुज्ज्वलं निर्मलमाकाशस्फटिकमयत्वादिति तृतीयः। तथा खे छत्रत्रयमिति चतुर्थः।
तथा खे रत्नमयो ध्वज इति पञ्चमः। तथा पादन्यासनिमित्तं सुवर्णकमलानि नव भवन्तीति षष्ठः। तथा
6 समवसरणे रत्नसुवर्णरूप्यमयं प्राकारत्रयं मनोज्ञं भवतीति सप्तमः। तथा चत्वारि मुखान्यङ्गानि गात्राणि 6
च यस्य स तथा तद्भावश्चतुर्मुखाङ्गता भवतीत्यष्टमः। तथा चैत्याभिधानो द्रुमोऽशोकवृक्षः स्यादिति नवमः।
तथा अधोमुखाः कण्टका भवन्तीति दशमः। द्रुमाणां नम्रता स्यादित्येकादशः। तथा उच्चैर्भुवनव्यापी
9 दुन्दुभिध्वानः स्यादिति द्वादशः। तथा वातः सुखत्वादनुकूलो भवतीति त्रयोदशः। तथा पक्षिणः प्रद- 9
क्षिणगतयः स्युरिति चतुर्दशः। तथा गन्धोदकवृष्टिरिति पञ्चदशः। बहुवर्णानां पञ्चवर्णानां जानूत्सेध-
प्रमाणानां मणीचकानां वृष्टिः स्यादिति षोडशः। तथा कचानामुपलक्षणत्वाल्लोम्नां च कूर्चस्य नखानां
12 पाणिपादजानामवस्थितत्वस्वभावत्वमिति सप्तदशः। तथा भुवनपत्यादिचतुर्विधदेवनिकायानां जघन्य- 12
तोऽपि समीपे कोटिर्भवतीत्यष्टादशः। तथा ऋतूनां वसन्तादीनां सर्वदा पुष्पादिसामग्रीभिरिन्द्रियार्थानां
स्पर्शनरसगन्धरूपशब्दानाममनोज्ञानामपकर्षेण मनोज्ञानां च प्रादुर्भावेनानुकूलत्वं भवतीत्येकोनविंशः।
15 इति देवैः कृता एकोनविंशतिस्तीर्थकृतामतिशयाः। एते च यदन्यथापि दृश्यन्ते तन्मतान्तरमवगम्यमिति। 15
ते च सहजैश्च चतुर्भिः कर्मक्षयजैरेकादशभिः सह मीलिताश्चतुस्त्रिंशद्भवन्तीति।

§ १२ ) अथ वचनातिशयाः। संस्कारवत्त्वं-संस्कृतलक्षणयुक्तत्वम् १, औदात्त्यम्-उच्चैर्वृत्तिता २, उप-
18 चारपरीतता-अग्राम्यत्वम् ३, मेघगम्भीरघोषत्वं-मेघस्येव गम्भीरशब्दत्वम् ४, प्रतिनादविधायिता-प्रति- 18
रवोपेतत्वम् ५, दक्षिणत्वं सरलत्वम् ६, उपनीतरागत्वं-मालवकैशिक्यादिग्रामरागयुक्तता ७, एते च सप्त
शब्दापेक्षयातिशयाः। अन्ये त्वर्थातिशयाः। तत्र महार्थता-बृहदभिधेयता ८, अव्याहतत्वं-पूर्वापरवाक्या-
21 र्थाविरोधः ९, शिष्टत्वम्-अभिमतसिद्धान्तोक्तार्थता वक्तुः शिष्टतासूचकत्वं वा १०, संशयानामसंभवः- 21
असंदिग्धत्वम् ११, निराकृतान्योत्तरत्वं-परदूषणाविषयता १२, हृदयंगमता-हृदयग्राह्यत्वम् १३, मिथः
साकाङ्क्षता-परस्परेण पदानां वाक्यानां वा सापेक्षता १४, प्रस्तावौचित्यं-देशकालाव्यतीतत्वम् १५, तत्त्व-
24 निष्ठता-विवक्षितवस्तुस्वरूपानुसारिता १६, अप्रकीर्णप्रसृतत्वं-सुसंबद्धस्य सतः प्रसरणम्, अथवा असंबद्धा- 24
धिकारित्वातिविस्तरणाभावः १७, अस्वश्लाघान्यनिन्दिता-आत्मोत्कर्षपरनिन्दाविप्रयुक्तत्वम् १८, आभि-
जात्यं-वक्तुः प्रतिपाद्यस्य वा भूमिकानुसारिता १९, अतिस्निग्धमधुरत्वं-घृतगुडादिवत्सुखकारित्वम् २०,
27 प्रशस्यता-उक्तगुणयोगात्प्राप्तश्लाघता २१, अमर्मवेधिता-परमर्मानुद्घट्टनस्वरूपत्वम् २२, औदार्यम्-अभि- 27
धेयार्थस्यातुच्छत्वम् २३, धर्मार्थप्रतिबद्धता-धर्मार्थाभ्यामुपेतत्वम् २४, कारकाद्यविपर्यासः-कारककाल-
वचनलिङ्गादिव्यत्ययवचनदोषापेतता २५, विभ्रमादिवियुक्तता-विभ्रमो वक्तृमनसो भ्रान्तता स आदिर्येषां
30 विक्षेपादीनां स विभ्रमादिर्मनोदोषस्तेन वियुक्तत्वम् २६, चित्रकृत्त्वम्-उत्पादिताविच्छिन्नकुतूहलत्वम् २७, 30
अद्भुतत्वं-प्रतीतत्वम् २८, तथानतिविलम्बिता-प्रतीता २९, अनेकजातिवैचित्र्यं-जातयो वर्णनीयवस्तु-
स्वरूपवर्णनानि तत्संश्रयाद्विचित्रत्वम् ३०, आरोपितविशेषता-वचनान्तरापेक्षयाहितविशेषणत्वम् ३१,
33 सत्त्वप्रधानता-साहसोपेतता ३२, वर्णपदवाक्यविविक्तता-वर्णादीनां विच्छिन्नत्वम् ३३, अव्युच्छित्तिः- 33
विवक्षितार्थसम्यक्सिद्धिं यावदव्यवच्छिन्नवचनप्रमेयता ३४, अखेदित्वम्-अनायाससंभवः ३५,
इत्येवमर्हतां पञ्चत्रिंशद्वाचां गुणातिशया भवन्तीति।

36 § १३ ) दानगतोऽन्तराय इत्येको दोषः, लाभगतोऽन्तराय इति द्वितीयः, वीर्यगतोऽन्तराय इति 36
तृतीयः, भुज्यत [ इति ] भोगः स्रगादिस्तद्गतोऽन्तराय इति चतुर्थः, उपभुज्यत [ इति ] उपभोगो
ऽङ्गनादि तद्गतोऽन्तराय इति पञ्चमः, हासः-हास्यमिति षष्ठः, रतिः-पदार्थानामुपरि प्रीतिरिति सप्तमः,
39 अरतिः रतेरविषय इत्यष्टमः, भीतिः-भयमिति नवमः, जुगुप्सा-घृणेति दशमः, शोकः-चित्तवैधुर्यमि- 39
त्येकादशः, कामः-मन्मथ इति द्वादशः, मिथ्यात्वं-दर्शनमोह इति त्रयोदशः, अज्ञानं-मौढ्यमिति

8 ) B तथा कंटका अधोमुखा भवंतीति दशमः तथा द्रुमा वृक्षा नमंतीति एकादशः खे दुंदुभिनाद उच्चैरतिशयेनेति द्वादशः। 9 ) P read त्रयोदश etc. without. 10 ) om. पञ्चवर्णानां. 12 ) B P °मवस्थितस्वभा, B सप्तदश is made सप्तदशमः with the addition of मः on the line. 14 ) B स्पर्शरसगंध, P °मपाकर्षेण. 25 ) P अभिजात्यं. 28 ) P B °भ्यामनपेतत्वम्. 30 ) C °दोषत्वेन वियुक्तत्वं. The printed text puts hyphens which are not found in the Mss. In the Mss. the words stand separate or joined in Saṁdhi.

1 चतुर्दशः, निद्रा-स्वाप इति पञ्चदशः, अविरतिः-अप्रत्याख्यानमिति षोडशः, रागः-सुखाभिज्ञस्य सुखानु- 1
स्मृतिपूर्वे दुःखे तत्साधने ऽप्यभिमते विषये गर्धत इति सप्तदशः, द्वेषः-दुःखाभिज्ञस्य दुःखानुस्मृति-
3 पूर्वे दुःखे तत्साधने वा क्रोध इत्यष्टादशः, इत्यष्टादशदोषास्तेषामृषभादीनामर्हतां न भवन्तीति । अतीता- 3
नागतवर्तमानलक्षणं कालत्रयम् । धर्मास्तिकायो ऽधर्मास्तिकायः पुद्गलास्तिकायो जीवास्तिकाय आकाशा-
स्तिकाय एते पञ्चास्तिकायाः । एतत्सर्वमपि श्रीजैनशासनरहस्यं विवेकिना परिज्ञेयम् ।

6 § १४) विनीतो देशनामेनां श्रुत्वा तत्त्वानुगामिनीम् । 6
नमस्कृत्य गुरून् गेहं गुणग्रामगुरूनगात् ॥ १६९
एवं स नित्यमभ्येति हित्वा व्यापारमात्मनः । धर्मामृतं पिबत्येष तृषाक्रान्त इव स्वयम् ॥ १७०
9 सो ऽन्यदा चलितान् ज्ञात्वा प्रभून् विनयतो ऽवदत् । जनको ऽस्त्वत्र मे येन प्रीतिरुत्पद्यते ऽमुतः ॥१७१ 9
ततस्ते सूरयो ऽवोचन् ज्ञात्वा ज्ञानेन तत्त्वतः । नायं ते जनको मन्त्रिन् किंतु ते पोषकः पिता ॥ १७२
विनीतः प्राह निर्माय निर्मायः स्वं शिरोनतम् । कस्तर्हि ते ततः प्रोचुः सूरयस्तत्त्वकोविदाः ॥ १७३
12 पिता कर्मकरो वृद्धो माता कर्मकरी च ते । युवा च कर्मकृद्भ्रातेत्यवगच्छ कुटुम्बकम् ॥ १७४ 12
अन्यथाभाषिणो नामी निश्चित्येति प्रणम्य तान् । स जगाम निजं धाम बाष्पाविलविलोचनः ॥ १७५
मषीमलिनवस्त्राया धूमध्यामलचक्षुषः । कौतुकात्पश्यति जने स किङ्कर्याः पदे ऽपतत् ॥ १७६
15 त्वमत्रस्थापि न ज्ञाता हतकेन मया हहा । मातः सिद्धिरिवेदानीं गुरुभिः कथितासि मे ॥ १७७ 15
त्वयाहं पुत्रवन्नित्यमजानत्यापि लालितः । कृतघ्नेन मया कर्मकृत्वे हासि नियोजिता ॥ १७८
दुर्भिक्षे पोषितं हा धिक् पिक्येव त्वामशक्तया । पापयासि मया मार्गे त्यक्तो धिग्मां कुमातरम् ॥ १७९
18 लब्धपक्षः स्वभाग्येन वचोभिरमृतोपमैः । पिकवत्प्रीणयन् लोकं परां श्रियमशिश्रियः ॥ १८० 18
पितुर्भ्रातुश्च चलनौ नमस्यन् विनयादयम् । विनीतो वक्षसा ताभ्यामाश्लिष्टः प्राप संमदम् ॥ १८१
वक्रेतरमतिश्चक्रे सच्चक्रे प्रथमस्ततः । सर्वत्राधिकृतानेतान् विनीतः स्वनिकेतने ॥ १८२
21 यथोचितां वितन्वानो ऽन्येषामप्येष माननाम् । सुवचोभिः क्रियाभिश्च सर्वत्र प्रथितो ऽभवत् ॥ १८३ 21
श्रीमज्जैनपदाम्भोजे भजतश्चञ्चरीकताम् । कदाचनास्य न स्वान्ते क्रूरत्वं लभते स्थितिम् ॥ १८४
प्रवेष्टुं मानसे यस्य शमसर्पारिराजिते । न क्षमाः प्राणभीत्येव कषायाः पन्नगा इव ॥ १८५
24 सर्वदा प्राज्यराज्यश्रीचिन्ताचान्तमना अपि । गार्हस्थ्ये वर्तमानो ऽपि सदाचारं ततान यः ॥ १८६ 24
कदापि श्रमणस्थाने वन्दनार्थं स यातवान् । मुनिमेकमतिग्लानं वीक्ष्य श्रद्धोद्धुरो ऽब्रवीत् ॥ १८७
औषधं मद्गृहे सम्यगस्ति रोगनिवर्तकम् । प्रासुकं चेति साधुभ्यामानाययत सत्वरम् ॥ १८८
27 इत्युक्त्वा स ययौ गेहे साधुभ्यां सह धीसखः । तस्थतुस्तौ बहिः साधू स तु वेश्मान्तराविशत् ॥ १८९ 27
अथ च ।
श्रेष्ठिकन्यामुना कापि वृतास्ति गुणशालिनी । दत्तो मौहूर्तिकैः सैव दिवसस्तद्विवाहने ॥ १९०
30 तद्विहस्ततया मन्त्री विसस्मार तदौषधम् । किंचित्तत्र मुनी स्थित्वा जग्मतुर्निजमाश्रयम् ॥ १९१ 30
पाणिग्रहणसामग्रीं समग्रामप्यकारयत् । लग्नक्षणस्य प्राप्तौ स सस्मार च तदौषधम् ॥ १९२
स विधायोत्तरं तत्र किंचिन्मित्रेण संगतः । पश्चात्तापकृदादायौषधं वसतिमागमत् ॥ १९३
33 रोगार्तो ऽपि मुनिर्ग्लानो विदधे नान्यदौषधम् । ततः कष्टमुपारूढो बभूवातीव निस्सहः ॥ १९४ 33
तं तथाविधमालोक्य विनीतः साश्रुलोचनः । आत्मानमात्मना निन्दन् पतितस्तस्य पादयोः ॥ १९५
त्रिधा क्षमयतस्तस्य विनीतस्य च तं मुनिम् । समलङ्कृतवीवाहोचितमण्डनशालिनः ॥ १९६
36 ध्यायतो भावनां तस्य भविनां भवनाशिनीम् । केवलज्ञानमुत्पेदे घातिकर्मक्षयात् क्षणात् ॥ १९७ 36
ज्ञानेन तेन विदितेन समुज्ज्वलेन संपश्यतस्त्रिजगतीजनतामनन्ताम् ।
चारित्रचिह्नमथ तस्य मुनीश्वरस्य क्षिप्रं समर्पितवती ननु जैनदेवी ॥ १९८
39 नारीं नितम्बजघनस्तनभूरिभारां हित्वा भवोदधिनिमज्जनहेतुमेताम् । 39
तत्रैव लग्नसमये प्रवरे वराङ्गीं व्यूहे तपस्विषु वरः स चरित्रलक्ष्मीम् ॥ १९९

---

2) B सुखे for दुःखे. 5) P धर्मास्तिकायाः । एतत्सर्वमपि etc. 11) P निर्माय निमेयि स्वं C निर्माय (यः) निर्माय स्वं, P मतः for ततः. 15) C सिद्धिरेवेदानीं. 16) B has an additional verse (after नियोजिता) like this–इति साश्रं [सास्रं] वदतास्मिन् संजातप्रश्न [= स्न] वाथ सा [ । ] चिरात् ज्ञातासि वत्सत्वमित्युक्त्वा दत्तवक्षसा ॥. 34) B साश्रलोचनः. 36) B भवनाशनीं.

एनां कथामवितथां विनयप्रधानां सम्यग् निधाय हृदि मन्त्रिमुनीश्वरस्य ।
यूयं यतध्वमधुना विनये निकामं यस्मादयं दिशति निर्वृतिशर्मलक्ष्मीम् ॥ २००

। इति विनये विनीतस्य कथा ।

§ १५ ) अत्रान्तरे चण्डसोमप्रमुखैः पञ्चभिर्मुनिभिर्विज्ञप्तम् । 'यद्भगवानाज्ञापयति तत्सर्वमपि प्रपत्स्यामहे । यत् पुनर्दुश्चरित्रं तच्छल्यमिव हृदये प्रतिभाति ।' ततो भगवता श्रीधर्मनन्दनेन समादिष्टम् । 'एतत् कदापि चेतसि न चिन्तनीयं यत्किलास्माभिः पापकर्म समाचरितम् । स केवलं पापकर्मा यः पश्चात्तापपरो न भवेत् ।' इति श्रुत्वा भूपतिर्मनसैव श्रीधर्मनन्दनाचार्यं प्रणिपत्योद्यानान्निर्गत्य विद्युदुत्क्षिप्तकरणेन प्राकारमुल्लङ्घ्य वासवेश्म प्रविवेश, निर्विण्णः शयने सुष्वाप च । साधवो ऽपि स्वाध्यायदत्तावधानाः कृतावश्यकाः क्षणं निद्रामुपलभ्य प्राभातिककालग्रहणप्रवणा बभूवुः । अत्रावसरे ऽरुणप्रभापाटलिते गगनतले क्रमेण विरोचने पूर्वाचलचूलावलम्बिनि प्राभातिकतूर्यारवाडम्बरं बन्दिजनमुखवर्णितं प्रभातावसरं च समाकर्ण्य निद्राघूर्णितताम्रनयनयुगलः पृथ्वीपालः शयनीयादुत्तस्थौ । ततः स कृतावश्यककर्मा भूमिवासवः प्रभातकृत्यं विधाय च सचिववासवसमेतश्चतुरङ्गबलकलितः शक्र इव चतुर्दन्तं कुञ्जरमारुह्योद्यानं समागम्य भगवन्तं श्रीधर्मनन्दनविभुं साधूंश्च प्रणनाम । ततो भूपतिना जल्पितम् । 'भगवन्, सर्वथैव पुत्रमित्रकलत्रादिममत्वं त्यक्तुं न क्षमः, परं गृहस्थावस्थस्यैव मम किंचित्संसारसागरतरण्डकं देहि ।' भगवता निवेदितम् । 'यद्येवं तावदेतानि पञ्चाणुव्रतानि त्रीणि गुणव्रतानि चत्वारि शिक्षाव्रतानीति सम्यक्त्वमूलं द्वादशविधं श्रावकधर्मं प्रतिपालय' इति । तेन नरेश्वरेण 'यदाज्ञापयति प्रभुः' इति वदता सम्यक्त्वमूलानि द्वादशव्रतान्यङ्गीकृतानि । ततः सचिववासवः समुवाच । 'भगवन्, किमपि भवतां पूर्ववृत्तान्तं वयं न जानीमः ।' भगवता जल्पितम् । 'अयमेव कथयिष्यति । अस्माकं सूत्रपौरुषीव्यतिक्रमो भवति । अद्य तावदस्माभिर्विहारः कार्य एव ।' एतदाकर्ण्य भूपतिर्वासवसचिवान्वितो भगवच्चरणारविन्दयुगलमभिनम्य निजधवलधाम समुपाजगाम । भगवान् सूत्रपौरुषीं निर्माय प्रधानेषु क्षेत्रेषु विहाराय प्रचचाल । ते ऽपि चण्डसोमप्रमुखाः स्तोकेनापि कालेनाधीतशास्त्रार्था द्विविधशिक्षाविचक्षणा जज्ञिरे । तेषां चैकदिवससमवसृतिप्रव्रजितानां महान् धर्मानुरागो मिथः समजनि । अन्यदा तेषां पञ्चानामपि परस्परं संलापः समभूत् । 'भो, दुर्लभो जिनप्रणीतो धर्मः कथं पुनरन्यभवे प्राप्यत इति, तावत्सर्वथा किमत्राचरणीयम्' । इति भणित्वा परस्परं तैः पञ्चभिरप्यग्रेतनभवोपरि प्रतिबोधसंकेतश्चक्रे । एवं च तेषां मुनीनां सिद्धान्ताभ्यासलालसानां कालो व्यतिक्रमति । किंतु चण्डसोमः स्वभावेन कोपनो मायादित्यो ऽपि मनाग् मायावी वर्तते । अपरे पुनः संयमिनः प्रतिभग्नदुर्जयकषायप्रसराः प्रव्रज्यामनुपालयन्तः सन्ति । कालेन च स लोभदेवो निजमायुः प्रपाल्य कृतसंलेखनादिविधिर्ज्ञानदर्शनचारित्रतपोविहिताराधनः पूर्वबद्धदेवायुर्विपद्य सद्यो ऽनवद्यलक्ष्मीः सौधर्मदेवलोके पद्मविमाने समयेनैकेन देवत्वमशिश्रियत् । स च पद्मप्रभनामा तत्र त्रिदशः स्वैरं चिक्रीड । एवं मानभटो ऽपि स्वायुषि क्षयमीयुषि संसारलतालवित्रीं सुखसंपदां धरित्रीं पञ्चपरमेष्ठिनमस्कृतिं स्मरंस्तेनैव क्रमेण तस्मिन्नेव विमाने ऽनेकयोजनविस्तृते पद्मसारनामेति देवः समुदपद्यत । एवं मायादित्यचण्डसोममोहदत्ताख्यो ऽपि कृतचतुर्विधाहारपरीहाराः पञ्चपरमेष्ठिनमस्कारपरायणा आराधनविधानाबद्धचेतसश्चतुःशरणशरणाः परिहृताष्टादशपापस्थाना यथासंयमविधिना प्राणितान्ते यथाक्रमेण पद्मवर–पद्मचन्द्र–पद्मकेसराभिधानास्तस्मिन्नेव विमाने सुमनसः समभवन् । तत एवं तेषां पद्मविमाने समुत्पन्नानां समविभवपरिवारबलप्रभावपौरुषायुषामन्योन्यस्नेहलालितमनसां मिथः कृतसंकेतानां कालो व्यतिक्रामति ।

§ १६ ) अत्रान्तरे सुरसेनापतिताडितघण्टानिनादे समुच्छलिते सहसैव तैर्वृन्दारकैः 'किमिति घण्टानादः ।' इति परिजनो ऽप्रच्छि । ततः प्रतीहारो व्यजिज्ञपत् । 'देव, जम्बूद्वीपे भरतक्षेत्रे मध्यमखण्डे श्रीमतो धर्मतीर्थकृतः समुत्पन्नविमलकेवलज्ञानस्य समवसृतौ त्रिदशवृन्दसहितेन सुरेश्वरेण गन्तव्यमस्ति ।' तदा तदाकर्ण्य तैः सुरैस्तत्रस्थैरेव भक्तिभरावनतोत्तमाङ्गैः श्रीधर्मनाथस्य भगवतः प्रणतिश्चक्रे ।

1 ) B सम्यग् विधाय. 3 ) P B om. इति. 10 ) P पाटलिगगनतले. 13 ) P B °ह्योद्यानमागम्य. 14 ) P कलत्रादिमित्रं. 15 ) C तरण्डं P तरडवं. 20 ) P B °च्चरणयुगल°. 21 ) P °धीतशास्त्रा. 24 ) C प्रापयिष्यते इति.

1 अथ ते सुराः पद्मसारप्रमुखास्त्रिदशाधिपेन सार्धं भावनाभावितान्तःकरणाश्चम्पापुर्यां श्रीधर्मजिनेश्वरस्य 1
समवसरणमवापुः। पद्मसारेण सुमनसा सुमनःपतिरभाणि। 'यदि यूयं ममाज्ञां ददत ततोऽद्याहमेक
3 एव गोस्वामिनः श्रीधर्मजिनेन्द्रस्य समवसृतिं रचयामि' इति। वज्रिणा 'तथा' इति प्रतिपेदे। तथा हि, 3

योजनोन्मानमेदिन्यां पद्मसारः शुभाशयः। प्रमार्जयन् रजो बाह्यं स्वस्यान्तस्तदपाहरत् ॥ २०१
ततः स एव गीर्वाणः सुगन्धोदकवृष्टिभिः। सिषिचे पुण्यबीजस्य वापायेव महीतलम् ॥ २०२
6 सुवर्णमणिमाणिक्यश्रेणिभिर्भक्तिभासुरः। हर्षतः परितः पद्मसारः पृथ्वीं बबन्ध सः ॥ २०३ 6
जानुदघ्नैरधोवृन्तैः पञ्चवर्णैर्मणीचकैः। भाविधर्माङ्घ्रिसंस्पर्शां पृथिवीमार्चयन् स च ॥ २०४
द्विधा सुमनसा तेन काष्ठासु चतसृष्वपि। अकारि सुमनोहारि तोरणानां चतुष्टयम् ॥ २०५
9 तस्याप्रतिमशोभस्य वीक्षणार्थमिवागताः। साक्षादिव बभुर्देव्यो विविधा शालभञ्जिकाः ॥ २०६ 9
रेजे ध्वजव्रजो यत्र चञ्चलस्तोरणोपरि। आकारयन् भव्यलोकमिव धर्मजिनान्तिके ॥ २०७
अधस्तले तोरणानां भूमिपीठेषु तेषु सः। प्रत्येकं रचयांचक्रे मङ्गलान्यष्ट निर्जरः ॥ २०८
12 चले वैमानिकसुरः पद्मसारः प्रमोदभाक्। वप्रं रात्नं पञ्चवर्णमण्याढ्यकपिशीर्षकैः ॥ २०९ 12
रेजे रत्नमयो वप्रः पताकाराजिराजितः। स्वं संक्षिप्य वपुर्भक्त्या रोहणाद्रिरिवागतः ॥ २१०
जातरूपमयं वप्रं द्वितीयं तद्बहिः सुरः। स्वज्योतिषेव विदधे भक्तिसंभारभाजनम् ॥ २११
15 कपिशीर्षततो रेजे तत्र रात्नी विनिर्मिता। राजीवबन्धुराजीव बहुद्वीपेभ्य आगता ॥ २१२ 15
तृतीयः पद्मसारेण प्राकारस्तद्बहिः कृतः। राजतः श्रीजिनं नन्तुं वैताढ्याद्रिरिवागमत् ॥ २१३
तत्रोच्चैर्जात्यरजतकपिशीर्षावलिर्दधौ। स्वर्गापगाम्भसि स्वर्णमयनीरजविभ्रमम् ॥ २१४
18 रेजे वप्रत्रयी पृथ्व्यास्त्रिपट्टवलयाकृतिः। प्राकाराग्रावली नानाविधिविच्छित्तिसंगता ॥ २१५ 18
तोरणास्तत्र भान्ति स्म नीलाश्मदलनिर्मिताः। प्रतिवप्रं चतुर्द्वारे चतुर्द्वारे शिवश्रियः ॥ २१६
शारदाभ्रमहाशुभ्रास्तोरणेषु ध्वजव्रजाः। रेजुः पुण्यश्रियः शास्ता हस्ता विस्तारिता इव ॥ २१७
21 दह्यमानागुरुक्षोदधूपधूमसमाकुलाः। धूपघट्यः प्रतिद्वारं राजन्ते तत्पुरस्सराः ॥ २१८ 21
रेजुर्वाप्यः प्रतिद्वारं स्वर्णाम्बुजमनोहराः। क्रीडनार्थमिव स्फूर्जद्बहिर्धर्मव्रतश्रियाम् ॥ २१९
प्राग्द्वारे मणिवप्रस्य स्वर्णवर्णविराजितौ। प्रतीहारौ स्फुरद्वक्षस्तारहारौ स निर्ममे ॥ २२०
24 यतिश्रावकयोर्धर्माविव मूर्तित्वमागतौ। याम्यद्वारे द्वारपती सिताङ्गौ स चकार च ॥ २२१ 24
चित्तोद्धृतेन सर्वेज्ञरागेणेवारुणद्युती। निर्मितावपरद्वारे द्वारपालौ सुपर्वणा ॥ २२२
उदग्द्वारेऽत्र दोषघ्ननीलिकास्थासकाविवा। कृतौ कृष्णाङ्गकौ तेन द्वारपौ दानवारिणा ॥ २२३
27 स निर्ममेऽप्रतिच्छन्दं देवच्छन्दं जिनेशितुः। विश्रामाय सुरः स्वर्णवप्रान्तर्मणिराशिभिः ॥ २२४ 27
अन्तर्माणिक्यवप्रस्य त्रिदशश्चैत्यपादपम्। चकार चत्वारिंशाग्रधनुष्पञ्चशतीमितम् ॥ २२५
पद्मसारः स तस्याधो मणिपीठोपरि व्यधात्। साङ्घ्रिपीठं रत्नमयं सिंहासनमनुत्तरम् ॥ २२६
30 नवहेमाम्बुजन्यस्तपदस्त्रिदशकोटियुक्। विभुः समवसरणं प्राच्यद्वारे विवेश सः ॥ २२७ 30
ततः प्रदक्षिणीकृत्य चैत्यद्रुं प्राङ्मुखः प्रभुः। नमस्तीर्थायेति वदन्निविष्टः सिंहविष्टरे ॥ २२८
अपरास्वपि काष्ठासु त्रिदशस्तिसृषु व्यधात्। रूपत्रयं प्रभोस्तुल्यं स तस्यैव प्रभावतः ॥ २२९
33 चतुर्गतिगतान् जन्तूनुद्धर्तुं निखिलानपि। चतुष्ककुम्मुखस्थायि हर्तुं मोहमहाबलम् ॥ २३० 33
चतुष्टयं कषायाणां निराकर्तुं विरोधिनाम्। कर्तुं चतुर्विधं संघमघसंघातघातिनम् ॥ २३१
दानशीलतपोभावभेदैर्धर्मं चतुर्विधम्। व्यक्तं निवेदितुं तच्च ध्यानमार्गचतुष्टयम् ॥ २३२
36 प्रपञ्चितचतुर्गात्रः पवित्रितजगत्त्रयः। व्याख्याक्षणे प्रभुः श्रीमान् धर्मनाथस्तदाशुभत् ॥ २३३ 36
चतुर्भिः कलापकम् ॥

जगतीत्रितयैश्वर्यसूचकं भुवनप्रभोः। छत्रत्रयं सुरश्चक्रे वक्रेतरमतिः स्वयम् ॥ २३४

39 § १७) एतस्यां समवसृतौ विभावसुदिशि क्रमात्। 39
प्रविश्य पूर्वद्वारेण दत्त्वा तिस्रः प्रदक्षिणाः ॥ २३५

---

9 > B शालिभञ्जिकाः. 12 > B कपिशीर्षकं. 16 > B राजतश्रीजिनं. 21 > B दह्यमानागरु. 24 > B याम्यद्वारि. 25 > B P चित्तोद्वृत्तेन, C °वपरद्वारि. 26 > On दोषघ्न B has a marginal gloss like this : दृष्ट्यादिदोषनिवारकौ नीलिकाहस्तकाविव ।. 28 > P पंचाशतीमितं. 29 > सांह्रिपीठं. 37 > P चतुर्भिः कु०. 38 > P जगती विनयैश्वर्य.

1 निविष्टाः साधवः साध्व्यो जिनं नत्वा तदन्तरे । प्रमोदमेदुरास्तस्थुरूर्ध्वा वैमानिकाः स्त्रियः ॥ २३६ 1
युग्मम् ॥
3 प्रविश्य याम्यद्वारेण नैर्ऋते विधिना क्रमात् । ज्योतिष्कभुवनाधीशव्यन्तराणां स्त्रियः स्थिताः ॥ २३७ 3
आगत्य पश्चिमद्वारा वायव्यां भुवनेश्वराः । ज्योतिष्का व्यन्तराश्चैवमादधुर्विधिना स्थितिम् ॥ २३८
प्रविश्याथोत्तरद्वारा प्रणम्यानुत्तरं जिनम् । वैमानिकनरा नार्य ईशान्यां क्रमतः स्थिताः ॥ २३९
6 न भीस्तत्र न मात्सर्यं न बाधा न च दुष्कथा । नासीन्नियन्त्रणा नाहंकृतिः स्वामिप्रभावतः ॥ २४० 6
तत्र द्वितीयवप्रान्तः कण्ठीरवगजादयः । वैरिणो ऽपि मिथः प्रेमलालसाः स्थितिमादधुः ॥ २४१
तस्थुस्तृतीयवप्रान्तर्वाहनानि क्षमाभृताम् । सुराणामसुराणां च विमानानि यथाक्रमम् ॥ २४२
9 क्षेत्रे योजनमात्रे ऽत्र प्राणिनः कोटिकोटिशः । संमान्ति यदनाबाधं प्रभावः प्राभवो हि सः ॥ २४३ 9
धर्मनाथं जगन्नाथमथानम्य जिनेश्वरम् । स्तुतिं कर्तुं समारेभे पद्मसारः सुधाशनः ॥ २४४
अवद्यमद्य सद्यो ऽपि क्षीणं मे क्षीणकल्मष । त्वदाननविलोकेन वायुनेव घनाघनः ॥ २४५
12 देव त्वदङ्घ्रिकल्पद्रुसेवाहेवाकिनो ऽत्र ये । भजन्ते ते न दारिद्र्यमुद्रामुद्रितमाश्रयम् ॥ २४६ 12
नीरागं तव यच्चित्तं तन्मिथ्या नाथ कथ्यते । मुक्तिनारीपरीरम्भलोलुभं कथमन्यथा ॥ २४७
गुणैस्तवातिनीरन्ध्रैर्धर्मनाथ मनो मम । तथा बद्धं यथा गन्तुं नोत्सहत्यन्यदैवते ॥ २४८
15 श्रीधर्मनाथभगवन् भविता स क्षणः कदा । भवितास्वो यदा त्वं चाहं चैकत्राव्यये पदे ॥ २४९ 15
तनोति न तथोत्कण्ठां मानसं मे शिवश्रिये । यथा तव पदाम्भोजवरिवस्याविधौ विभो ॥ २५०
त्वमनल्पमतिः स्वामिन् ध्रुवमल्पमतिस्त्वहम् । अतो नहि मया कर्तुं शक्यस्तव गुणस्तवः ॥ २५१
18 जिह्वामेकां श्रुती नेत्रे द्वे द्वे नाथ विधिर्व्यधात् । क्षमः कीर्तिं गुणान् रूपं वक्तुं श्रोतुं किमीक्षितुम् ॥२५२ 18
एतमेवार्थये ऽत्यर्थमर्थमर्थींव तीर्थप । वीतराग परं वीतरागं मम मनः कुरु ॥ २५३
ऋभुप्रभुप्रतीक्ष्यं तं स्तुत्वा तत्त्वावलोकदृक् । निषसाद यथास्थानं पद्मसारः प्रमोदतः ॥ २५४
21 अथो सुधारसमुचं समाचारप्रचारिकाम् । विधातुं देशनां धर्मचक्रवर्ती प्रचक्रमे ॥ २५५ 21
असार एव संसारः सर्वदा दुःखमन्दिरम् । धर्म एव प्रशस्यः स्यात् तत्र स्वर्गापवर्गदः ॥ २५६
संसारसागरे ऽपारे भ्रमद्भिः प्राणिभिश्चिरात् । नृजन्म लभ्यते पुण्यैर्वसुधान्तर्निधानवत् ॥ २५७
24 नृभवं दुर्लभं प्राप्य यः प्राणी तनुते तनु । न हितं प्रान्तकाले हि शोचत्यात्मानमेव सः ॥ २५८ 24
करालज्वलनज्वालावलीढे मन्दिरे यथा । स्थातुं न युज्यते पुंसस्तथा दुःखाकुले भवे ॥ २५९
मानुष्यं दुर्लभं प्राप्य चिन्तारत्नसहोदरम् । विवेकिभिर्विधातव्यः प्रमादो न कदाचन ॥ २६०
27 गृह्णाति काकिणीं को ऽपि मूढः कोटिं यथोज्झति । तथा पुमान् विषयजं शर्म धर्मं जिनोदितम् ॥ २६१ 27
सागरान्तरकल्लोलमालालोलाः श्रियो नृणाम् । कुशाग्रस्थस्तुषाराम्बुबिन्दुकम्प्रं हि जीवितम् ॥ २६२
रूपलक्ष्मीस्तडिद्दण्डसादृश्यं भजते ऽनिशम् । स्वाम्यं स्वप्नोपमं संध्यामेघलेखासखं सुखम् ॥ २६३
30 देशनाविरते श्रीमद्धर्मनाथजिनेश्वरे । कृताञ्जलिस्ततो वाचमुवाच गणभृत्तमः ॥ २६४ 30

'भगवन्, एतस्यां सुरासुरनरतिर्यक्कोटिनिभृतायां पर्षदि कः प्रथमं महोदयपदं गामी' इति । ततो भगवता निवेदितम् । 'भो देवानुप्रिय, यस्तव सविधे वृषलोचनः स्मृतपूर्वभवः संविग्नमानसो 33 निर्भयप्रचारो मद्दर्शनसंतुष्टः प्रमोदभरप्रविगलदश्रुलोचनयुगलस्ताण्डवितकर्णयामलः समागच्छन्नस्ति 33 सर्वेषामपीहस्थजन्तूनां पूर्वमेवैष पापविनिर्मुक्तः सिद्धिपदं गमिष्यति' इति । एवं भगवतो भणितानन्तरमेव समकालं सकलनरेन्द्रवृन्दत्रिदशेन्द्रलोचनानि कौतुकरभसविकाशवन्ति मूषकोपरि निपतितानि । 36 स चागत्य भक्तिभरनिर्भराङ्गो भगवतः श्रीधर्मनाथस्य पादपीठे लुलोठ । महीतलनमितोत्तमाङ्गः सर्वाङ्ग- 36 रोमोद्गमसंगम आखुः स्वभाषया भषितुं प्रवृत्तः । ततो भणितं त्रिदशपतिना । 'भगवन्, मम मनसि महत्कौतुकमिदं यदेष मूषकः सर्वाधमस्तुच्छजातिः काननान्तरसंचारी सर्वेषामेवास्माकं मध्ये प्रथमं 39 39 निर्वृतिश्रियमाश्रयिष्यति ।' ततः श्रीमद्भगवान् स्वयमवादीत् ।

§ १८) अस्ति विन्ध्यो नाम महीधरः । तस्योपत्यकायां विन्ध्यावासाभिधानो महान् संनिवेशः, स चातीव विषमः । तत्र महेन्द्रः पृथिवीपतिः । तस्य ताराभिधाना महादेवी । तत्कुक्षिसंभवः सुत- 42 स्ताराचन्द्रो ऽष्टवर्षदेशीयः । अत्रावसरे छिद्रान्वेषिणा बद्धवैरातिशयेन कोशलेन भूमिपतिनावस्कन्दं 42

---

8) P च वैमानानि. 20) P प्रतीक्षं तं. 31) P B om. पर्षदि. 37) B om. ततो. 39) P B निवृत्ति°. 41) Before महादेवी P adds लोचना and B adds सुलोचना (सु being added later).

दत्त्वा सकलो ऽपि संनिवेशो ऽभाजि। महेन्द्रो युध्यमानस्तेन वैरिणा विनाशितः। ततो हतं सैन्यमनायकमिति सकलमपि बलं पलायितुं प्रवृत्तम्। तत्र तारामहादेवी तं पुत्रं ताराचन्द्रमङ्गुल्यां विलग्य जनेन सह नष्टा। सापि नश्यन्ती क्रमेण शिवमिव दुर्गान्वितं, कामिनीकुचतटमिव विहारालंकृतं, सरोवरमिव कमलालयं, गान्धिकापणमिव सचन्द्रं, स्वर्गमण्डलमिव [ विबुधालङ्कृतम् ], वाटिकास्थानमिव वृषास्पदं सदारम्भं सशिवं च लाटदेशलक्ष्मीललाटललामश्रीभृगुकच्छमियाय।

आस्यान्यास्योपमामेव लभन्ते यत्र सुभ्रुवाम्। राकाशशाङ्कपद्मानि तेषां दास्यं तु बिभ्रति ॥ २६५
प्राकारो ऽभ्रंलिहो यत्र संक्रान्तः परिखाम्बुनि। पातालनगरीशालमलं जेतुमना इव ॥ २६६
रत्नान्याददिरे ऽनेन मद्गेहादिति मत्सरात्। अम्बुधिः परिखाव्याजाद् यत्र शालमवेष्टत ॥ २६७
नमेति लक्षणे लोकैर्यत्र पेठे ऽक्षरद्वयम्। याचके तु समायाते स्वभ्यस्तमपि विस्मृतम् ॥ २६८

§ १९ ) तत्र च सा किंकर्तव्यमूढचित्ता 'कथं वा भवितव्यम्' इति चिन्तयन्ती यूथभ्रष्टा हरिणीव चच्चरमहेश्वरमण्डपं प्रविवेश। तदैव तया गोचरचर्यां निर्गतं साध्वीयुगलमदर्शि। तद्दृष्ट्वा 'महानुभावे प्रधाने क्रियाकलापनिरते एते साध्व्यौ' इति चिन्तयन्त्या तया समुत्थाय वन्दिते। ताभ्यां धर्मलाभं दत्त्वा 'कुतस्त्वम्' इति पृष्टा। तया 'विन्ध्यपुरादागता' इति विज्ञप्तम्। ततस्तस्या रूपलावण्यलक्षणानि निरीक्ष्य तच्च तादृशगद्गदस्वरभाषितं च श्रुत्वा साध्व्योरनुकम्पा महती जाता। यतः,

"महतामापदं वीक्ष्य मोदन्ते नीचचेतसः। महाशया विषीदन्ति परं प्रत्युत सर्वदा ॥ २६९ ॥"

ताभ्यां भणितम्। 'यदि भद्रे, तव पुराभ्यन्तरे को ऽप्युपलक्षितो नास्ति तत आवाभ्यां सह समागच्छ।' ततो 'महाननुग्रहः' इति तया वदन्त्या ताभ्यां सहागत्य महत्या भक्त्या प्रवर्तिनी प्रणता। तां दृष्ट्वा चिन्तितं प्रवर्तिन्या। 'अहो, एतस्या अतिकमनीयाकृतिः पुनरीदृश्यवस्था, तन्मन्ये कापीयं राजवंश्या राजकलत्रं वा, असावत्यन्तसुन्दरः सल्लक्षणशाली पार्श्वे सुतश्च।' ततः प्रवर्तिनी तां तारां सुतसहितां सवात्सल्यमूचे। 'वत्से, समागच्छ मया सहेत्यादि।' तया प्रवर्तिन्या सा शय्यातरगृहे स्थापिता। शय्यातरेण च सा दुहितेव प्रतिपन्ना। स राजसूनुर्नित्यं विविधान्नवस्त्रपानादिभिरुपचर्यते। अन्यदा कियद्भिर्दिनैर्गतैस्तारा विगतश्रमा सुखोपविष्टा प्रवर्तिन्या भणिता। 'वत्से, सांप्रतं त्वया किं कर्तव्यम्' इति। तारया जल्पितम्। 'भगवति, यो मम प्रियतमः स समराङ्गणे विपन्नः। विन्ध्यावासपुरं कोशलराजेन भग्नम्। समग्रो ऽपि परिजनः सर्वासु दिक्षु काकनाशं ननाश। सांप्रतं कोशलनरेश्वरो मम पत्युर्वैरी प्रबलबलकलितो मम पुत्रस्तु बलरहितः, अतो मम नास्ति कापि स्वराज्यलक्ष्मीप्रत्याशा। अहमत्र पुनः प्राप्तकालं तत्करिष्ये येन भूयो ऽपि न ममेदृक्षा आपदः संपद्यन्ते। यद्भगवती मम समादेशं दास्यति तदेवावश्यं करिष्ये।' प्रवर्तिन्योक्तम्। 'वत्से, यद्येवं तव निश्चयस्ततस्ताराचन्द्रं सुतं प्रव्रज्यार्थमस्मदाचार्याणां समीपे समर्पय। त्वं पुनरस्माकमन्तिके दीक्षां गृहाण। निगृहाण च निजं दुष्कर्म। एवं कृते सर्वस्यापि जनस्य नमस्या भाविनी। संसारवासदुःखस्यापि पर्यन्तो भविष्यति' इति तदाकर्ण्य तयापि 'तथा' इति प्रतिपन्नम्। तया तारया निर्मायया ताराचन्द्रस्तनुजः श्रीअनन्तजिननाथतीर्थे विचरतो धर्मनन्दनाचार्यस्य व्रतायार्पितः। तेनापि यथाविधिना स प्रव्राजितः। ततः कियति काले व्यतीते यौवनमाश्रितो राजसूनुमुनिः कर्मवशतो ऽध्ययनालसो नित्यमेव कृपाणधनुर्गन्धर्वनृत्यतूर्यकृतचित्तप्रवृत्तिरेव समभवत्। ततः स स्वयमेवाचार्यैः पेशलवचोभिः सिद्धान्तानुयायिभिस्तथोपाध्यायेन साधुजनेनापरैः श्रावकैश्च शिक्षितो ऽपि शैक्षो विलक्षमना बभूव न पुनस्ततः प्रत्यावृत्तः। यतः,

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा। सुशिक्षितो ऽपि कापेयं कपिस्त्यजति नो यतः ॥ २७०

§ २० ) अत्रान्तरे धर्मनन्दनसूरयो बाह्यभूमिकामुपाजग्मुः। स च ताराचन्द्रो ऽन्तेवासी गुरुमार्गानुगामी वनस्थल्यां स्वैरं मूषकान् क्रीडां कुर्वतो विलोक्य व्यचिन्तयदिति।

'क्रीडन्ति स्वेच्छया कस्यापि हि कुर्वन्ति नो नतिम्।
न दुर्जनवचः शृण्वन्त्यहो धन्यतमा अमी ॥ २७१ ॥'

---

2 ) B विलगय्य. 4 ) B has a marginal gloss on सचन्द्रं etc. like this: सह चन्द्रेण कर्पूरेण वर्तते सचन्द्रम्। नगरपक्षे सह सुवर्णेन वर्तते। वृषो देवेन्द्रः पुण्यं वृषभश्च। सदारम्भाऽप्सरा यत्र पक्षे सदा कदलीसहितम्, प्रधाना आरम्भा यत्र। शिव ईश्वरः, शिवो वृक्षविशेषः शिवं कल्याणम्।; P B omit [ विबुधालंकृतम् ]; P B वाटिकास्थानकमिव; P सद्वृषाश्रयं B सदा वृषाश्रयं सदारंभं; B °ललामं श्री°. 13 ) P B विंध्यावासपुरा°. 17 ) B om. तां दृष्ट्वा. 19 ) P सुतसहितां शय्यातरगृहे स्थापिता, C om. प्रवर्तिनी etc. to तया and adds तारा ससुता between सा and शय्यतरगृहे; B however adds on the margin सवात्सल्य° etc. to सा. 28 ) P B inter. निजं दःकर्म and निगृहाण च. 30 ) P तया तथेति. 33 ) C inter. सिद्धान्तानुयायिभिः & पेशलवचोभिः. 35 ) P नोद्यतः.

1 अस्माकं पुनः परायत्तानां सदैव निबिडनिगडवर्जितो बन्धनविधिः। अपर्वतपादपं पतनम्। सजीवं 1
मरणम्। एकस्तावदिति वदति 'यदिदं विधेहि'। अन्यो जल्पति 'यदिदं समाचरेः'। परः 'चरणौ
3 क्षालय'। अन्यो 'वाराभूमिं प्रमार्जय'। इतरो 'विश्रामणां कुरु'। एको 'वन्दनकं ददस्व, प्रतिक्रमणं 3
विरचय'। इत्यादिविविधवचनैरनारतं प्राजनैरिव प्रेर्यमाणस्य मम नास्ति निमेषमात्रमपि नारकस्येव
सुखावकाशः। तदेते ऽसत्तः प्रधानाः' इति चिन्तयन् गुरुभिः सह वसतिमायातवान्। स च कियन्त-
6 मपि कालं श्रामण्यमनुपाल्य तद् दुश्चिन्तितशल्यं गुरूणां पुरतो ऽनालोच्याकालमृत्युना ज्योतिष्केषु 6
किंचिदूनपल्यायुः सुपर्वा बभूव। तत्र भोगान् भुक्त्वा च्युत्वास्या एव नगर्याः पूर्वोत्तरदिग्विभागे स
काननान्तरस्थल्यामुन्दरत्वं प्राप्य यौवनमितो ऽनेकमूषिकाभिः समं क्रीडन् कदाचिद्विवराद्बहिरुपेतः सुर-
9 भिगन्धोदककुसुमवृष्टिगन्धमाघ्राय तदनुमार्गानुसारेणात्र समवसृतौ समागत्य धर्मं श्रोतुं प्रावर्तत। अथा- 9
मुष्य मद्वचः शृण्वतो जातिस्मृतिरुदपद्यत। 'यदहं पूर्वभवे सशल्यं व्रतमापाल्य ज्योतिष्केषु देवत्वमवाप्य
कान्तारान्तरचारी मूषकः संजातः।' एतत्स्मृत्वा 'अहो, कीदृशः कर्मपरिणामः, धिग्विलसितं संसारस्य
12 यद्देवत्वमुपलभ्य तिर्यग्जातौ मूषकः समुत्पन्नः। अधुना तदासन्नं श्रीभगवतः पादमूलमुपागत्य प्रणिपत्य 12
च पृच्छामि किमहं मूषकभवादनन्तरं प्राप्स्यामि' इति चिन्तयन् मम समीपमुपससर्प। भक्तिभरनिभृ-
तस्वान्तः सुचेतसा स्तोतुमारेभे।

15 'तवाज्ञालोपिनो ये ऽत्र लोकत्रयशिरोमणे। जायन्ते जन्तवो दूरं दुर्गतौ ते भ्रमन्ति हि॥' २७२ 15

§ २१) ततो जानता गणभृता लोकबोधार्थं प्रभुः पृष्टः। 'भगवन्, किमनेन निर्ममे, यदनुभावेनेदृश
एष जातो ऽस्ति' इति। प्रभुः प्राह। 'प्राग्भवे ऽनेन व्रतिना सता गच्छवासनियन्त्रणानिर्विण्णचेतसा
18 बहिर्भूमिं गतेन स्वैरंविहारिणो मूषकान् दृष्ट्वेति चिन्तितं यथा 'अरण्यमूषका धन्यतमाः'। इति दुश्चिन्त- 18
नशल्ययुतव्रतपालनानुभावेन देवत्वमूषकत्वयोग्यमायुर्निबद्धम्।' अथ भूयो ऽपि पृष्टं भगवतः पार्श्वे
गणधरेण। 'नाथ, किं सम्यग्दृष्टिजीवो ऽपि तिर्यगायुर्बध्नाति न वा' इति। स्वामिनोक्तम्। 'सम्यग्दृ-
21 ष्टिजीवस्तिर्यगायुरनुभवति, न पुनर्बध्नाति। यतः, 21

भवद्वैमानिको ऽवश्यं जन्तुः सम्यक्त्ववासितः। यदि नोद्वान्तसम्यक्त्वो बद्धायुर्न पुराथवा॥ २७३
तावदेतेन देवत्वे सम्यक्त्वं वान्त्वायुस्तिर्यक्त्वे निबद्धम्' इति। ततस्त्रिदशेशेन जल्पितम्। 'भगवन्,
24 अयं संप्रति शीघ्रं कथं सिद्धिगामी' इति। निवेदितं च भगवता। 'इतश्चैष स्ववनस्थल्यां व्रजन् चिन्तयि- 24
ष्यति। 'अहो दुरन्तः संसारः, कुशाग्रबिन्दुवच्चञ्चलं जीवितव्यं, चपला विषयतार्क्ष्याः, न वरेण्यं निदा-
नादिशल्यम्, अधमा मूषकजातिः, दुष्प्रापः श्रीजिनप्रणीतः पन्थाः, ततो वरमत्र नमस्कारपरायणो म्रिये,
27 यथा विरतिप्रधानं जन्म लभेयम्'। इति चिन्तयन् तस्मिन्नेव स्थाने भक्तं प्रत्याख्यायैतदेव मद्वचो ऽतीव 27
दुष्टं भवस्वरूपं च निरूपयन्नमस्कारपरो भावी। तत्रैतस्य तिष्ठतो मूषिकास्तन्दुलकोद्रवादिकं तत्पुरो
मोक्ष्यन्ति। ततस्तन्निरीक्ष्य मूषकश्चिन्तयिष्यति।

30 'मेरोरधिकमाहारं पयोधेरधिकं पयः। अनारतं भवं भ्राम्यन्नेष जन्तुरुपाददे॥ २७४ 30
तत्तेन चेन्न तृप्तो ऽयं भक्षितैस्तदिमैः कणैः। का नाम प्राप्स्यते तृप्तिः स्थास्यती'ति विचिन्तयन्॥ २७५

§ २२) ततस्तदभिमुखमीषदपि मूषको न विलोकयिष्यते, तच्च तादृशं वीक्ष्य ता मूषिकाश्चिन्त-
33 यिष्यन्ति। 'कुतो हेतोरयमस्मत्पतिः कुपितस्तदेनं प्रसादयामः' इति चिन्तयन्त्य एतत्समीपमुपेष्यन्ति। 33
ततः काश्चिदुत्तमाङ्गं कण्डूयन्ति, अपरा अङ्गं परिस्पृशन्ति। एवमुपचर्यमाणस्ताभिरभित एष चिन्तयिता
'सदैव नरकनिगमा इमा रामाः संसारदुःखमूलम्।' ततस्ताभिरेतन्मनो न कथमपि समाधितः स्वर्णाद्रि-
36 शृङ्गवत्सशब्दवातोत्कलिकाभिः क्षोभयिष्यते, तत्कृतं सर्वैथैव वृथा भावि एतस्मिन् वज्रे नखविलेखनमिव। 36
ततस्तृतीयदिन एष क्षुधाक्षामकुक्षिर्विपद्य मिथिलानगर्यां मिथिलस्य राज्ञश्चित्राभिधाया महादेव्या उदर-
सरसि राजहंसलीलामलंकरिष्यति। तेन च गर्भस्थेन जनन्याः सर्वसत्त्वानामुपरि मैत्रीवासनावासितम-
39 न्तःकरणं भविता। स च भूपस्तस्य जातस्य 'मित्रकुमारः' इति नाम दास्यति। तस्य कौतूहलिनः कुमारस्य 39
ताम्रचूडकपिपशुसम्बरहरिणमूषकादिभिर्नियन्त्रितैरेव क्रीडां कुर्वतो ऽष्टवर्षाणि यास्यन्ति।

अन्यदा मेघमालाभिः पिहितव्योममण्डलः। विप्रलम्भभृतां कालः प्रावृट्कालः समागमत्॥ २७६
42 सरितः प्राप्य यत्रापः पातयन्ति तटद्रुमान्। पीडयन्ति न कं नीचाः श्रियं प्राप्य महीभृताम्॥ २७७ 42

3) B विश्रामणं कुरु. 14) C B स्वचेतसा. 15) C ते for हि. 21) C om. न पुनर्बध्नाति. 29) P B मूषकश्चितयति. 31) B तृप्तिं. 32) P B °भिमुखमीषन्मूषको विलोकयिष्यते. 37) B °भिधानाया.

1 यथा यथावनीपीठे मुञ्चन्ति स्म घना वनम् । ऐच्छत्तथा तथा कान्ता मन्मथव्यथिता वनम् ॥ २७८ 1
द्योतन्ते दिवि खद्योतास्तमस्विन्यां निरन्तरम् । संजातयुवतिजातविरहाग्निकणा इव ॥ २७९
3 अतीवोत्कम्पते यत्र योगिनामपि मानसम् । किं पुनर्दूरसंस्थानामध्वगानां निगद्यते ॥ २८० 3
सर्वेषामपि पर्जन्यः समभूदतिवल्लभः । प्रोषितप्रेयसीवर्गमनर्गलशुचं विना ॥ २८१
शुक्लापाङ्गाः प्रनृत्यन्ति गर्जन्ति च घनाघनाः । अन्तरिक्षे चतुर्दिक्षु क्षणिका लक्ष्यते क्षणम् ॥ २८२
6 प्रपा मयि समायाते कथमद्यापि मण्डिताः । वर्षते ऽतिघनेनाशु सर्वास्ताश्चक्रिरे वृथा ॥ २८३ 6

§ २३ ) ईदृशे समये स मित्रकुमारः पुरबाह्योद्देशं निर्गतस्तैः शकुनश्वापदगणैर्बन्धनबद्धैः क्रीडयिष्यति। तेन च प्रदेशेनावधिज्ञानी मुनिर्गमिष्यति । स च व्यावृत्तस्तत्कुमारक्रीडां निरीक्ष्योपयोगं दास्यति । 'अहो, 9 अस्य कीदृशी प्रकृतिस्तत् किमत्र कारणम्' इत्युपयुक्तावधिज्ञानेन करतलकलितकुवलयस्पष्टदृष्टान्तवत् 9 पूर्वभवे तस्य ताराचन्द्रस्य साधुत्वं ज्योतिष्कदेवत्वं मूषकत्वं राजसुतत्वं च द्रक्ष्यते । 'अयं बोधयोग्यः' इति चिन्तयन् स भणिष्यति ।

12 'श्रमणत्वं सुपर्वत्वमाखुत्वं स्मृतिमेति ते । स्वजनातुष्टः किं जीवान् कदर्थयसि भो वद' ॥ २८४ 12

तदाकर्ण्य कुमारश्चिन्तयिष्यति । अहो, किं पुनरेतेन साधुना भणितोऽस्मि । 'साधुर्ज्योतिष्कदेवो वृषलोचनः' इति । तावत् श्रुतपूर्वमिव मे । एवमूहापोहमात्रमुपागतस्य तस्य तथाविधकर्मणः प्रशान्त्या 15 जातिस्मृतिरुत्पत्स्यते । ततः संसारं दुःखसागरं परिज्ञाय तस्यैव मुनेः पार्श्वे प्रव्रज्य नानाविधाभिग्रह- 15 साग्रहः समाधिना विविधं तपो विधाय क्षपकश्रेण्यान्तकृत्केवली भविष्यति' इति । तेन भणामो यदेष सर्वेषामप्यस्माकं पूर्वं महोदयपदं गमिष्यति । अस्माकं पुनर्दशवर्षसहस्रशेषमद्याप्यायुः । एतद्वृष- 18 लोचनाख्यानकं निशम्य त्रिदशेन्द्रादीनां मनुजानां च मनसि महत्कौतुकमुत्पेदे । अथो भक्तिभरनिभृत- 18 चेतसा मघवता तं मूषकं स्वपाणिक्रोडमारोप्याभाणि ।

'अहो धन्यस्त्वमेवैको वन्द्यस्त्वमसि नाकिनाम् । सिद्धिगामी पुरास्माकं यस्त्वमुक्तः स्वयंभुवा ॥ २८५
21 सुराः पश्यत कीदृक्षः स्वभावः श्रीजिनाध्वनः । लभन्ते निर्वृतिं येन तिर्यञ्चो ऽपि भवान्तरे ॥' २८६ 21

एवं वासव इवान्यैरपि त्रिदशेश्वरैर्दनुजनाथैर्नृपशतैः करात्करतलं संचार्यमाणः क्षितिपतिकुमारवदा- लिङ्ग्यमानः स्नेहपरवशया दृशा 'अयमस्माकमप्यधिको यो ऽनन्तरजन्मनि निःश्रेयसभाजनं न वृथा श्रीजिन- 24 प्रणीतं वचः' इति स श्लाघितः । 24

§ २४ ) ततो विरचिताञ्जलिना पद्मप्रभदेवेन पृष्टम् । 'भगवन्, वयं भव्याः किमभव्याः' इति । भगवानभ्यधात् । 'भवन्तो भव्याः सुलभबोधयः ।' पद्मप्रभेण विज्ञप्तं पुनः । 'वयं पञ्चापि जनाः कति- 27 पयभवसिद्धिगाः ।' निगदितं श्रीमता धर्मतीर्थकृता । 'इतश्चतुर्थे जन्मनि यूयं पञ्चापि सर्वदुःखक्षय- 27 गामिनो भविष्यथ ।' पद्मप्रभः समुवाच । 'स्वामिन्, इतो मृतानामस्माकं कुत्रोत्पत्तिर्भाविनी ।' स्वामिना जगदे । 'इतश्च्युत्वा त्वं वणिक्पुत्रः, पद्मवरस्तु राजसुता, पद्मसारस्तु नृपतितनयः पद्मचन्द्रः, पुनर्विन्ध्य- 30 गिरौ नखरायुधः, पद्मकेसरः पुना राजपुत्रः ।' इति निवेद्य स्वयं भगवान् श्रीधर्मनाथस्तस्थौ । देवा अपि 30 समवसरणं संहृत्य स्वर्गमार्गमगमन् । भगवानपि पीयूषरोचिरिव भव्यजनकुमुदप्रमोदसंपादनाय विहर्तुं प्रवृत्तः । ततस्ते पञ्चापि संलापं कर्तुं प्रावर्तन्त । एकेनैकस्य संमुखं भणितम् । 'यत् स्वयं भगवता गदितं 33 तदाकर्णितम्, ततो ऽत्रात्मभिः किं करणीयं सम्यक्त्वलाभार्थम् ।' परेण मन्त्रयित्वा प्रोचे । 'यदिदं 33 विषमं कार्यमुपस्थितम् । एको वणिग्जन्मा । अन्यो राजतनुजा । अपरः पारीन्द्रः । अपरौ राजपुत्रा- विति । ततो न ज्ञायते कथं पुनरस्माकं बोधिलाभः । क्व पुनः संगमो भावी । तदहो पद्मकेसर, इति भग- 36 वतादिष्टं यत्तव पश्चाच्च्युतिर्भाविनी । त्वया त्ववधिना ज्ञात्वास्माकं यत्र तत्रोत्पन्नानां सम्यक्त्वं दातव्य- 36 मिति । न पुनः स्वर्गसुन्दरीवक्षोजस्पर्शसुखलालसेन विस्मृतसकलपूर्वजल्पितेन भवितव्यम् ।' तेनोक्तम् । 'अहं सम्यक्त्वं दास्यामि, परं मोहोपहतचेतसां भवतां मद्वचःप्रत्ययो न भविष्यति ततः क उपायः 39 कर्तव्यः ।' तैश्चतुर्भिरुक्तम् । 'भव्यं निवेदितम् । तत एतदधुनैव क्रियते, यदात्मीयात्मीयानि रत्नमयानि 39 प्राग्भवमनुष्यरूपाणि कृत्वैकस्मिन् स्थाने निक्षिप्यन्ते, तानि कालेन दर्शनीयानि यथा परस्परं दृष्ट्वा कदा-

---

8 ) B om. कुमारक्रीडां etc. to प्रकृतिस्तत्. 14 ) B °मात्रामागतस्य. 15 ) B °विधाभिग्रहः समाधिना. 20 ) B पुरोस्माकं. 22 ) B क्षितिपकुमार°. 26 ) C °बोधयः (श्च), B भगवन् for पुनः. 30 ) B has a marginal correction °नाथ समुत्तस्थौ. 40 ) P B क्षिप्यंते for निक्षिप्यन्ते.

1 चित्पूर्वजन्मस्मरणसाभिज्ञानेन धर्मप्रतिपत्तिरस्माकं भवेत् ।' इति भणद्भिस्तैर्भुवमागत्य तानि तत्र निक्षिप्तानि यत्र वने तस्य कण्ठीरवस्योत्पत्तिः । विवरद्वारे च महती शिला प्रदत्तेति । ततस्ते सर्वे ऽपि स्ववि-
3 मानलक्ष्मीमलंचक्रुः । तत्र ते दिव्यसुखमनुभवन्तस्तिष्ठन्ति ।

§ २५ ) ततः कुमारकुवलयचन्द्र, तेषु पद्मप्रभदेवो विगलच्छरीरकान्तिः परिम्लानवदनः सुदीनमनाः पवनाहतप्रदीप इव झटिति विध्यातः । ततो जम्बूद्वीपे द्वीपे भरतक्षेत्रे

6 प्रत्यर्थिपार्थिवप्रत्तकम्पा चम्पाभिधा पुरी । चम्पकैर्दृश्यते यत्र दैवतोद्यानसौरभम् ॥ २८७
धनदत्ताभिधस्तत्र पवित्रमतिशेखरः । श्रेष्ठी यस्तु श्रिया श्रीदलीलामालम्बते किल ॥ २८८

तस्य श्रीपतेरिव लक्ष्मीर्लक्ष्मीर्नाम्ना प्रियतमा । स पद्मप्रभजीवस्तत्कुक्षिसंभवः सागरदत्ताभिध-
9 सूनुर्जातः । पञ्चभिर्धात्रीभिः प्रतिपाल्यमानः स कान्त्या गुणैः कलाकलापेन च प्रवर्धमानः क्रमतो यौवनश्रियमाश्रितः । पित्रा समानसमाचारशीलस्य कस्यचिद्वाणिजस्य कन्यकां स श्रीसंज्ञां परिणायितः ।

सुखं वैषयिकं साकं श्रेष्ठिसूनोस्तयानिशम् । तस्यानुभवतः स्वैरं शरल्लक्ष्मीरवातरत् ॥ २८९
12 फलप्राग्भारमासाद्य सद्यः कलमशालयः । भजन्त्येव नतिं यत्र नयवन्त इव श्रियम् ॥ २९०
भेजुर्जलानि नैर्मल्यं हृदयानि सतामिव । अयुगच्छदसौगन्ध्यवासिता हरितो ऽभवन् ॥ २९१
यत्र तीव्रकरस्तीव्रैः करैश्च समतापयत् । कुभूपतिरिव स्वैरमखिलं भूमिमण्डलम् ॥ २९२
15 अभूज्जनः सुराज्ञीव यत्र सन्मार्गजाङ्घिकः । सरोवतंसाः क्रीडन्ति राजहंसाश्च सश्रियः ॥ २९३

एवंविधायां शरदि स सागरदत्तः स्निग्धमुग्धबन्धुजनान्वितः पुरीबाह्योद्देशमुपागतः । कौमुदीमहोत्सवं दृष्ट्वा कस्मिंश्चिच्चत्वरे नटपेटकान्तः केनापि पठ्यमानं कस्यापि कवेः काव्यमश्रृणोत् ।

18 'यो धीमान् कुलजः क्षमी विनयवान् वीरः कृतज्ञः कृती
रूपैश्वर्ययुतो दयालुरशठो दाता शुचिः सत्रपः ।
सद्भोगी दृढसौहृदो ऽतिसरलः सत्यव्रतो नीतिमान्
21 बन्धूनां निलयो नृजन्म सफलं तस्येह चामुत्र च ॥' २९४

§ २६ ) ततस्तेन सुभाषितरसपूरितचेतसा भणितम् । 'भो भो भरतपुत्राः इदं लिखत यत्सागरदत्तेनामुष्य सुभाषितस्य लक्षं देयम् ।' ततः कैश्चिन्नागरैरुपश्लोकितः । 'यदयं सागरदत्तो महारसिको
24 विदग्धो दाता प्रस्तावविदहो सत्त्वश्च' इति । अपरैश्च जल्पितम् । 'अमुष्य किं स्तूयते यः पूर्वोपार्जितं वित्तजातमर्थिभ्यो ददाति स कथं प्रशस्यः । यः पुनर्निजभुजसमार्जितमर्थं व्ययति स एव प्रशंसाभाजनम् ।' अहो, 'एतैर्ममोपहासः कृतः' इति चिन्तयतस्तस्य तद्वचश्चेतसि शल्यमिव लग्नम् । ततो ऽपत्रपापरो
27 वीक्षापन्न इव गृहमागत्य स शय्यायां निविष्टः । यतः,

विज्ञानामप्यविज्ञानां मुदे मिथ्यापि हि स्तुतिः । निन्दा सत्यापि विज्ञानामपि दुःखाय जायते ॥ २९५

ततः श्रिया चेष्टिताकारपरिज्ञानकुशलया चिन्तितम् । 'अद्य कथं मम पतिरुद्विग्न इव लक्ष्यते । यतः,

30 जानन्ति जल्पितादपि निःश्वसितादपि विलोकितादपि च ।
ते परमनांसि येषां मनस्सु वैदग्ध्यमधिवसति ॥ २९६

ततस्तया भणितम् । 'अद्य नाथ, कथं भवान् विलक्ष इव ।' तेन चाकारसंवरणं कुर्वताभ्यधायि ।
33 'प्रियतमे नहि नहि, किंतु शरत्पूर्णिमायां कौमुदीमहोत्सवं प्रेक्ष्यमाणस्य मम महान् परिश्रमः समजन्यत ईदृशः, न पुनरन्यो हेतुः' इत्युक्त्वा स स्थितः । ततो रजन्यां शय्यागृहे ऽलीकं प्रसुप्तः क्षणं किमपि दध्यौ च । ततः सागरदत्तस्तां श्रियं कान्तां प्रसुप्तां परिज्ञाय मन्दं मन्दमुत्थाय वसनखण्डं परिधाय
36 द्वितीयखण्डं च स्कन्धे क्षिप्त्वा खटिकाखण्डेन वासभुवनान्तरे स्वेनैव विरचितं श्लोकमेतं भारपट्टे लिलेख ।

'वर्षान्तरे न यद्यस्मि सप्तकोटीः समर्जये । विशामि ज्वलने ऽवश्यं ज्वालामालाकुले ततः ॥' २९७

इदं लिखित्वा वासवेश्मतो निःसृत्य नगरनीरनिर्गमद्वारेण दक्षिणाशां प्रति चचाल । स च क्रमतः
39 सर्वत्र जनपदस्वरूपं निरूपयन् दक्षिणाम्बुधितीरविराजिनीं जयश्रीनगरीमवाप । स तत्पुरीबाह्योद्देशे एकस्मिन् जीर्णोद्याने ऽशोकानोकहतले दूरमार्गश्रममव्यपगमाय निषण्णश्चिन्तयामासेति । 'किमतुच्छमत्स्यकच्छपसंकीर्णितत्तुङ्गतरङ्गसंगते सागरे यानपात्रमारुह्य परतीरं व्रजामि, किं वा चामुण्डायाः
42 पुरस्तीक्ष्णक्षुरिकाविदारितोरुयुगलसमुच्छलल्लोहितपङ्किलभूतलं मांसखण्डैर्बलिं ददामि, किं वा रात्रिंदिवं

12 ) P भजंतेवनतिं. 18 ) P shows blank space for नयवान्. 20 ) B सौहृदोज्ज्वलमनाः सत्यव्रतो. 24 ) B °विन्महासत्त्वश्चेति. 32 ) B तया for ततस्तया. 35 ) B inter. कांतां & श्रियं. 36 ) B द्वितीयं च. 41 ) B संकीर्णः तुंग.

1 अपहस्तिताशेषव्यापारो रोहणपर्वतभुवं खनामि, किं वा व्यपगतभयप्रचारः सत्पुरुषसंगतो धातुवादं
वितनोमि ।' इत्यनल्पविकल्पसंकल्पमालाकुलितस्वान्त एकस्मिन् स्थाने सागरदत्तः श्रीफलपादपस्य
3 प्रसृतं प्ररोहमेकं ददर्श । तं च विलोक्य संस्मृताभिनवशिक्षितखन्यवादेन तेन 'नमो धरणेन्द्राय नमो
धनाय नमो धनपालाय' इति मन्त्रं पठता भूमितलं खनित्वा निधिर्लोचनगोचरमानीतः । यावता स तं
निधिं गृहीतुं चिन्तयति स्म तावता व्योम्नि इति वाणी प्रससार । 'वत्स, यद्यपि त्वया सकलो ऽपि
6 निधिर्वीक्षितः परं स्तोकमञ्जलिमात्रं मूलद्रव्यकृते गृहाण' इत्येवं श्रुत्वा तेन श्रेष्ठिसूनुना एक एवाञ्जली
रूपकाणां जगृहे । निधिरपि तत्रैवादृश्यतामगमच्च । तद्धनं निबद्धं चानेन स्कन्धनिक्षिप्तद्वितीय
वाससः प्रान्ते ।

9 § २७ ) ततो वणिगुत्तमेन चिन्तितम् । 'अहो, चापल्यं दैवस्य ।

पूर्वं दत्तो निधिर्दैव कथं पश्चाद्धृतः कथम् । तव वृत्त्या परिज्ञातं सर्वथा ते गतिश्चला ॥ २९८

तथाप्येतावतापि वित्तेन द्रविणस्य सप्तकोटीरर्जयित्वात्मीयं प्रतिज्ञातमवितथं करिष्ये यदि दैवं स्वयं
12 माध्यस्थ्यवृत्तिमङ्गीकरिष्यते ।' इति चिन्तयन् परितुष्टमनास्तस्यामेव नगर्यां विपणिमार्गे कमपि वणिजं
परिणतवयसं मार्दवादिगुणोपेतं स्वभावतो ऽपि सुशीलमद्राक्षीत् । तं च निरीक्ष्य चिन्तितमनेन । 'अहो,
रमणीयतमाकृतिर्ज्यायान् वणिक्पुङ्गवो ऽयं दृश्यते, ततो ऽमुष्य पादपतनं न्याय्यम्' इति ध्यात्वा तं
15 नत्वा च सागरदत्तः पुरतो निविष्टः । तेन श्रेष्ठिना महता संभ्रमेण 'स्वागतं भद्राय' इति भाषितः सः ।
तदा च तस्मिन्नगरे कस्मिन्नपि महोत्सवे प्रवृत्ते तस्य श्रेष्ठिनो हट्टे प्रत्यासन्नग्रामीणजनो ऽतीवसमुत्सुक-
चेताः समस्तपण्यग्रहणार्थमभ्येति, तं च श्रेष्ठिनं जराजर्जरिततनुं पण्यानि दातुमक्षममवगम्य सागरदत्तः
18 प्रोवाच 'तात, त्वं विपणिमध्यतः क्रयाणकान्यानीय मम समर्पय यथैतानि तोलयित्वा युक्त्यास्मै जनाय
ददामि' इत्युक्त्वा दातुं प्रवृत्तः । तत एषः 'क्षिप्रं ददाति' इत्यवगत्य सर्वो ऽपि जनस्तदापणमायातवान् ।
तेन तत्क्षणमात्रेणापि पण्यान्यर्पयित्वा समग्रो ऽपि जनः प्रेषितः । क्रयाणकैर्विक्रीतैर्महत्यर्थलाभे श्रेष्ठिना
21 चिन्तितम् । 'यदयं को ऽपि महाकुलसंभवः पुण्यवान् दारको यद्ययं मम निलयमलङ्करोति तदतीव सुन्दरं
भवति' इति चिन्तयता जल्पितम् । 'भो वत्स, त्वं कुतः स्थानादागतो ऽसि ।' तेनोक्तम् । 'तात, चम्पा-
पुरीतः ।' श्रेष्ठिना जगदे । 'वत्स, त्वया मम गृहमलङ्करणीयम् ।' स सागरदत्तः श्रेष्ठिना समं निकेत-
24 मुपागतः । प्रीत्या स्वपुत्रवदौशीरकशिपुक्रियया संमानितः । कियद्दिनानन्तरं तेन प्रवयसा तद्रूपगुण-
ग्रामरञ्जितचेतसाभिनवोद्भिन्नयौवना निर्मलमुखमृगाङ्ककान्तिकलापकलिता विकस्वरकुवलयदलदीर्घ-
लोचना कुसुमबाणप्रणयिनीनिभा कनी सागरदत्ताय प्रदत्ता, परं तेन तत्परिणयनं न मानितम् ।
27 तेनोक्तम् । 'तात, किंचिद्वक्तव्यमस्ति । केनापि हेतुना स्ववेश्मतो निःसृतो ऽस्मि, यदि तत्कार्यं प्रमाण-
कोटिमध्यारूढं ततो यद् यूयं भणिष्यथ तदवश्यं करिष्ये । यदि तन्न निष्पन्नं ततो मम केवलं ज्वलन
एव शरणमतो ऽस्मिन्नर्थे सांप्रतं तात, प्रतिबन्धं मा कार्षीः ।' श्रेष्ठिना निगदितम् । 'एवं व्यवस्थिते मया
30 भवतः किं कर्तव्यम् ।' तेनोदितम् । 'यदि त्वं मम सत्य एव तातस्तदा मद्धनेन क्रयाणकं परतीरयोग्यं
गृहाण भाटकेन यानपात्रं च । मया परतीरं गन्तव्यम् ।' श्रेष्ठिना जल्पितम् । 'एवं भवतु' इति तद्दिनादेव
श्रेष्ठिना पुरोभूय प्रतिपादितम् । सागरो ऽगण्यपण्यं संगृह्य निमित्तविद्दत्ते मुहूर्ते समुद्रदेवतामभ्यर्च्य
33 तपश्चरणगुरुं गुरुं प्रणिपत्यार्हतामर्हणां कृत्वा तं वणिजमभिवाद्यापृच्छ्य च स्मृतपञ्चपरमेष्ठिनमस्कारः
प्रवहणमारूढः, पूरितः सितपटः, लब्धो ऽनुकूलः पवनः, ततो नदीशमुल्लङ्घ्य क्रमेण यानपात्रं यवन-
द्वीपमवाप । तत्र क्रयविक्रयेण समार्जितसप्तकोटिः सागरदत्तस्तुष्टमना व्यावृत्य स्वदेशं प्रति प्रचलितः ।

36 § २८ ) अथो तद्वोहित्थं सागरान्तः कर्मपरिणत्या संजाताकालकज्जलश्यामलसजलजलदान्धकार-
च्छादितव्योमतलादृश्यमाननक्षत्रतया निर्यामकैरुत्पथप्रेरितं कस्यापि गिरेर्दन्तके आस्फाल्य कामिनी-
निवेदितरहस्यमिव त्वरितं प्रपुस्फोट । तत्र च निखिले ऽपि जने विपन्ने केवलं सागरदत्तः प्राप्तफलकः
39 कथमपि तुङ्गतरङ्गमालाभिः प्रेर्यमाणः पञ्चभिरहोरात्रैश्चन्द्रद्वीपमवाप्य मूर्च्छानिमीलितलोचनस्तीर-
पादपाधोभागे क्षणमेकं पवनस्पर्शलब्धचेतनस्तृषातरलितचेतोवृत्तिः क्षुधार्तः सर्वत्र परिभ्रम्य क्वचन
प्रदेशे नालिकेरनारङ्गमातुलिङ्गपनसदाडिमीप्रमुखद्रुमफलैः कृतप्राणाधारश्चन्दनलवलीलवङ्गलतागृहं

1) P प्रचार: पुरुष. 3) On खन्यवाद B has a marginal gloss like this: भूमिगतनिधानखननविधिः. 7) P B रूपकानां. 10) B तत्व for तव. 12) B मध्यस्थवृत्ति°. 13) P तेन चिंतितं for चिन्तितमनेन. 21) C दारकोऽपि यद्ययं. 24) B has a marginal gloss: कुशीरं शयनासने कसिपुर्भोजनाच्छादो. 27) C तात यत्किञ्चिद्वक्तव्यमस्ति [यदहं]. 29) B has a marginal gloss प्रतिबंधं आग्रहं ।. 32) P गण्यं पण्यं. 37) B गिरेर्दंतके. 38) B त्वरितं पुस्फोट. 40) B °स्तृष्णातरलित°. 41) B has a marginal gloss on लवली thus: लताविशेषः.

1 वीक्ष्य संजातचित्तकौतुकस्तमुद्देशं यावदाजगाम तावत्सहसा कस्यापि स्वर इव श्रवणातिथित्वं भेजे। 1
तमाकर्ण्य चिन्तितमनेन। 'अत्र तावत्पूर्वं मनुष्यप्रचारो ऽपि न कथं बालाया इव शब्दः। अहो, अहमपि
3 कुत्र प्राप्तो ऽस्मि यत्र कथास्वपि श्रूयते यत् स्वप्ने ऽपि न दृश्यते तदैव दैवेन घट्यते' इति चिन्तयता 3
यावन्निरूपितं तावत्कदलीतरुनिकुरुम्बान्तरे रक्ताशोकतरुतले ऽसामान्यरूपातिशया गुणग्रामाभिरामा
काचित्प्रत्यक्षा वनदेवतेव वनिता दत्तकण्ठपाशा दृष्टा। ततस्तया प्रजल्पितम्। 'श्रूयतां वनदेव्यः, परस्मि-
6 न्नपि जन्मान्तरे ममेदृशं मा भूयात्' इति भणन्त्या तयात्मोद्बन्धे। अत्रान्तरे तेन करुणाशरणेन सहसा- 6
गत्य तस्याः पाशश्चिच्छिदे, पतिता सा धरायां वायुनाश्वासिता च। चन्दनकिशलयरसेन विलिप्तं
वक्षःस्थलम्। तया लब्धसंज्ञया सागरदत्तो ददृशे। तं वीक्ष्यससाध्वसहृदया स्ववासः संवरीतुमारेभे।
9 तेन भणिता। 9

'पुष्पबाणप्रिया किं त्वं वनलक्ष्मीः किमत्र वा। किमात्मारोपितो दुःखे निवेदय कृशोदरि॥' २९९
उवाच सा 'रतिर्नैव नास्मि लक्ष्मीर्वनस्य च। समाकर्णय मद्वृत्तं त्वमेकाग्रमनाः पुनः॥ ३००

12 § २९ ) अस्ति दक्षिणमकराकरतीरे जयतुङ्गा नाम नगरी। तत्रोत्तुङ्गश्रिया वैश्रमण इव वैश्रमणः 12
श्रेष्ठी। तस्याहं दुहितात्यन्तप्राणप्रिया। अन्यदादिवसे स्वभवनकुट्टिमतले शय्यायां प्रसुप्तानेकशकुनिश्वा-
पदकलकलरवेण विबुद्धा यावच्चिन्तयामि तावदनन्तपादपशतदलावलिनिरुद्धतरणिकिरणजालं कान्तार-
15 मेव पश्यामि। तच्च वीक्ष्य भयावेशकम्पिततनुलता विलपितुं प्रवृत्ता। 15

भविष्यामि कथं तात निराशा हा त्वयोज्झिता। इदानीं कानने भीमे शरणं भावि कुत्र मे॥ ३०१
अत्रान्तरे 'तव शरणमस्मि' इति जल्पन् दिव्यरूपधारी को ऽपि पुमान् लतानिकेतनतः समुत्तस्थौ।
18 तमालोक्य द्विगुणतरं समुपजातक्षोभा रोदितुमारेभे, स च मत्समीपमुपागत्य वक्तुं प्रावर्तत। 18

'मुञ्च माश्रूणि तन्वङ्गि न करोमि तवावमम्। त्वद्रूपाक्षिप्तचित्तेनापहृतासि मयाधुना॥ ३०२
बाला जगाद सा 'कस्त्वं केन ते कथितास्मि च।' तन्निशम्य ततो ऽवोचन्नरः 'शृणु शुभानने॥ ३०३

21 § ३० ) अस्ति वैताढ्यपर्वतः। तच्छिखरनिवासिना मया विद्याधरेण महाबलवता त्रिदशवनिता- 21
नामपि मानसे क्षोभकारिणा निखिलमपि क्षोणीतलं कलयतोपरितनकुट्टिमतले तलिने प्रसुप्ता तलिनोदरी
त्रिभुवनाधिकशालिनी इतिकृत्वा भवती मम मनसि प्रवेशं चक्रे।

24 प्रेमोल्लसति कस्यापि क्वापि दैववशात्तथा। विनेतुं शक्यते यन्न विलग्नं वज्रलेपवत्॥ ३०४ 24

ततो 'नापरो ऽत्रोपायो ऽस्ति' इति विचिन्त्याहं सुप्तां त्वामपहृत्य निजगुरुशङ्कितो निजनगरं न
गतः, किन्त्वत्र द्वीपे विजने समागतो ऽस्मि, अतो मया सह भोगान् भुङ्क्ष्व, दुःखं मा धेहि।' अतो मया
27 चिन्तितम्। 'तावदहं कन्या न कस्यापि दत्ता, अन्येनापि वणिजा परिणेतव्या, ततो वरमयं सुन्दराकृति- 27
र्विद्याधरः त्रिजगतीयुवतिजनवल्लभः स्नेहमोहितमना यदि मत्करग्रहं करोति तदा मया किं न लब्धम्'
इति चिन्तयन्त्या मयोक्तम्। 'अहं त्वयात्र कानने आनीता यत्तुभ्यं रोचते तत्समाचरेः।' ततः सहर्ष-
30 संभृतचेताः समजायत। अत्रान्तरे कर्षितकरालकरवालभैरवो विद्याधर एकः 'रे रे अनार्य, कुत्र व्रजसि' 30
इति जल्पन् प्रहर्तुमायातवान्। ततो मे दयितः समाकृष्टरिष्टी 'रे रे दुष्ट, मत्कलत्रापहारं कर्ता' इति
वदन् तेन समं योद्धुमारेभे। ततस्तौ युध्यमानौ निशितासिघातैः परस्परं लूनशीर्षौ क्षितौ निपतितौ
33 विलोक्य महद्दुःखाक्षिप्तचित्ता विलपितुं प्रवृत्ता। 33

'हा सौभाग्यनिधे नाथ रूपश्रीजितमन्मथ। मामेककां परित्यज्य वने कुत्र गतो भवान्॥ ३०५
गृहादानीय मुक्त्वात्र मामेकां काननान्तरे। जीवेश मा व्रज क्वाप्यथवा नय निकेतने॥' ३०६

36 § ३१ ) तत एवं विलप्य मरणकृताध्यवसायया मया 'यथा भूयो भवदुःखानां पदं न भवामि' 36
इति चिन्तयन्त्या लतावेश्मनि लतापाशं विरचय्य स्वं च शोचन्ती स्त्रीजन्म गर्हमाणा कुलदेवीं संस्मर्य
मातापितरौ प्रणम्य चात्मा बबन्धे। अतो न जाने किं वृत्तम्, केवलं भवान् वीज्यमानो दृष्टः। 'कुतस्त्वं
39 कुत्रत्यः, कथमत्र दुर्गमे द्वीपे।' ततः सागरदत्तः स्ववृत्तान्तं प्रतिज्ञारोहणाद्यं यानपात्रविघटनान्तं निवे- 39
दयामास। ततस्तयोक्तम्। 'एवंविधे विषमे कार्ये संप्रति त्वया किं करणीयम्।' सागरदत्तेनोक्तम्।
'सत्पुरुषाः प्राणान्ते ऽपि न प्रतिज्ञाभङ्गं विदधति।' तया जल्पितम्। 'दैवायत्ते प्रतिज्ञानिर्वाहे न किमपि
42 भद्र, तव दूषणम्, तत्किं त्वया संप्रति विधेयम्।' स भूयो ऽप्युवाच 'ममैवं समुद्रान्तर्भ्रमत एकादश 42

3 ) B तदेव for तदैव. 5 ) P B om. वनिता. 6 ) P भणत्या. 7 ) P वलिप्तं for विलिप्तं. 12 ) P B °करप्रतीरे, B नगरी उत्तुंगश्रिया. 13 ) B प्रसुप्ता। अनेक. 17 ) P om. इति, B दिव्यधारी, P B om. पुमान्. 22 ) P प्रसुप्ता। मलिनोदरी C प्रसुप्ताऽ-मलिनोदरी. 26 ) P B द्वीपे निर्विजने. 40 ) B om. त्वया.

1 मासाः संजाताः । संप्रत्येष द्वादशो मासः प्रवृत्तः । अनेनैकेन मासेन कथमहं सप्तकोटीः समुपार्जयामि । 1
अथो समुपार्जिता अपि सप्तकोटीः कथं गृहं नेष्यामि । तेनाहं सुन्दरि, भ्रष्टप्रतिज्ञो ऽभवम् । न मम भ्रष्ट-
3 प्रतिज्ञस्य जीवितुं युक्तम् । ततो ज्वलनं प्रविशामि ।' [ तयोचे । ] 'यद्येवं प्रतिज्ञाभङ्गे भवान् हुताशने 3
प्रविशति तत्राहमपि भर्तृवियुक्ता त्वमिव कृशानुं साधयिष्ये, अतो ऽन्वेष्यतां कुतो ऽपि पावकः ।' तेन
भणितम् । 'भद्रे, न युक्तमेतत्तव' । [ ततस्तयापि भणितम् । ] मया किमत्र वने कर्तव्यम्' इति । ततस्तेन
6 चित्यां विरचय्यारणिकाष्ठान्निर्माय ज्वलनः प्रज्वालितः । ततस्तेनोक्तम् । 'भो लोकपालाः श्रूयतां, मम 6
प्रतिज्ञा संवत्सरेणापि न पूर्णा, इति भ्रष्टप्रतिज्ञस्य मम ज्वलनः शरणमिति ज्वलनं विशामि' इति याव-
च्चित्यां गवेषयति तावच्चिता शतपत्रतां प्राप । ततो [ सागर- ] दत्तः कौतुकाक्षिप्तहृदयो व्यचिन्तयदिति ।
9 'किमन्यज्जननं किं वा स्वप्नः किं मनसो भ्रमः । किमिन्द्रजालं यच्चित्या जगाम शतपत्रताम् ॥' ३०७ 9
अत्रान्तरे पद्मरागघटितं व्योममण्डले । मुक्तावचूलप्रालम्बं विमानं समुपस्थितम् ॥ ३०८
चारुकाञ्चनकोटीरधरस्तत्र सुरः स्फुरन् । तेजसा भूयसा चञ्चदखण्डश्रुतिकुण्डलः ॥ ३०९
12 ईषदास्यहास्यविकस्वराधरतया दशनस्फुरत्किरणधोरणिसमुद्दीपितदिगङ्गनाननेन तेनोक्तम् । 'अहो 12
सागरदत्त, किं त्वया पामरजननिषेवितो विबुधनिन्दितः स्ववधः प्रारब्धः । यतः,
प्राणेश दुःखसंतप्ता वनिता साहसाञ्चिता । तनोति तद्वरं भद्र सांप्रतं सांप्रतं न ते ॥ ३१०
15 एतच्च कथं विस्मृतम्, यत्त्वं सौधर्मविमाने ऽस्माभिः सममुत्पन्नः । तत्र तावत्त्वया कर्केतनेन्द्रनील- 15
पद्मरागराशयः प्रमुक्ताः, अतः किमेताभिः सप्तधनकोटीभिः ।
तत्त्वं गृहाण सम्यक्त्वं निशाभुक्तिनिवर्तनम् । महाव्रतानि पञ्चैव ता एताः सप्त कोटयः ॥ ३११
18 § ३२ ) अथ द्रव्याभिलाषी भवांस्तदा त्रिगुणाः सप्तकोटीः स्वीकुरु । मम विमानमारोह यथा 18
त्वामह्नाय निलयं नयामि ।' एतदाकर्ण्य देवर्द्धिं वीक्षमाणस्य तस्य सम्यगूहापोहं कुर्वतः पूर्वजातिस्मृति-
रुत्पेदे । ज्ञातं च यथा 'अहं स पद्मप्रभश्च्युत्वात्र समुत्पन्नः । एष पुनः पद्मकेसराभिधानो ऽनिमेषः ।
21 तत्र मया पूर्वजन्मनि भणित आसीत्, यथा 'त्वयास्मि श्रीमतो जिनेश्वरस्य शासने संबोध्यः' तत्स्मरता- 21
नेनामुतो मृत्युतो रक्षितो ऽस्मि । अहो दृढप्रतिज्ञः, अहो परोपकारी, अहो स्नेहपरः, अहो मित्र-
वात्सल्यम् । यतः,
24 मानुष्ये जीवितं सारं ततो ऽपि प्रेम सुन्दरम् । उपकारः परं प्रेम्णि तत्रैवावसरो वरः ॥' ३१२ 24
इति चिन्तयतानेन सुरः प्रणतः । तेन भणितम् । 'सुष्ठु स्मृतस्त्वया पूर्वभवः ।' सागरदत्तेनोक्तम् ।
'अहो, त्वया परित्रातः संसारपतनात् । तावत्त्वया वरेण्यं कृतम् । समादिश किं कर्तव्यम्' इति । सुरेण
27 जल्पितम् । 'अद्यापि ते चारित्रावरणीयं कर्म समस्ति, तद्भोगान् भुक्त्वा सप्तदशभेदभिन्नः संयमो 27
विधेयः' इति । ततस्तेनास्मि विमाने समारोपितः । गृहीता च मया सा समं बाला । क्षणेनैव जयश्रीनगरीं
प्राप्तः । तत्र जीर्णश्रेष्ठिवेश्मनि समवतीर्णेन मया सा कन्या श्रेष्ठिसुता च परिणिन्ये । ततो विमानारूढ-
30 श्चम्पापुर्यामगमम् । वन्दितो महाभक्त्या गुरुजनः । ततो देवेनोक्तम् । 'भद्र, तव दशवर्षसहस्राण्यायुः, 30
ततस्त्रीणि गतानि, पञ्च सहस्राणि भोगान् भुङ्क्ष्वेति, सहस्रद्वयं श्रामण्यं पालनीयम्' इत्युक्त्वैकविंशति-
धनकोटीस्तद्गृहाङ्गणे ऽभिवृष्य गतः स सुरः । सो ऽथ चिरविरहखिन्नां पूर्वप्रियां संभाव्य ताभिरम्भोज-
33 दृग्भिः सह क्रीडां रचयन् प्रणयिजनं मानयन् क्रमेण निर्विण्णकामभोगो ऽवगतपरमार्थः स्मृतपूर्वभव- 33
देववाक्यः क्षीणभोगफलकर्मा वैराग्यमार्गमुपगतः । ततश्चैत्येष्वष्टाहिकां निर्माय कृतकृत्यः पुण्यवतां
स्थविराणामन्तिके ऽन्तेवासी जातः । भोः कुवलयचन्द्र, सो ऽहं सागरदत्तः । तत्र चाधीतसर्वशास्त्रस्य
36 गृहीतद्विविधशिक्षस्याङ्गीकृतैकाकित्वविहारप्रतिमस्य ममावधिज्ञानं प्रादुरभूत् । 'अधो यावद्रत्नप्रभायाः 36
सर्वप्रस्तरान् ऊर्ध्वं यावत्सौधर्मविमानचूलिकां तिर्यग् मानुषोत्तरशिखरम्' एतत्प्रमाणे [ अवधौ ] जाते
मया 'लोभदेवपद्मप्रभदेवौ' इति निजं प्राच्यं भवद्वयं ददृशे । एतद्विलोक्य चिन्तितं मया । 'अहो, ये
39 पुनस्तत्र चत्वारस्ते कथं संप्रति' इति चिन्तयन् यावदुपयुक्तो ऽस्मि तावत्तान् दृष्टवान् तथा यश्चण्डसोमः । 39

---

2 ) P अथोपार्जितसप्तकोटीः B अथोपार्जिता अपि C अथो समुपार्जिताऽपि. 3 ) P B om. [तयोचे]. 4 ) P भर्तृप्रयुक्ता. 5 ) P B om. [ततस्तयापि भणितम् ।]. 6 ) P च्चित्या B चित्तां, P °काष्ठान्यानिर्माय B °काष्ठान्यानीय्य, B प्रज्वालितः । तेनोक्तं, P om. ततस्तेनोक्तम्. 7 ) P संवत्सरेणापि न पूर्णादत्तः । कौतुकाक्षिप्त etc.: obviously P has missed some portion between पूर्णा and दत्तः. Originally B also read like P, but by an additional line it is made to read thus: संवत्सरेणापि न पूर्णा इति भ्रष्टप्रतिज्ञस्य मम ज्वलनः शरणमिति ज्वलनं विशामीति यावच्चित्यां गवेषयति तावच्चिता शतपत्रतां प्राप ततो दत्तः कौतुकाक्षिप्त etc. C reads thus संवत्सरेणापि न पूर्णा तेन सम्प्रति स्वप्रतिज्ञापूर्त्यै प्राणान् त्यजन्नस्मि' इति यावत्प्राणान्मुञ्चति [ तावत्सा चिता पङ्कजायमाना जाता । तां दृष्ट्वा सागर ] दत्तः कौतुकाक्षिप्त etc. 15 ) B एतत्कथं. 16 ) B om. अतः, P कोटिभिः. 18 ) P B विमानमारुह. 20 ) P B °धानोनिमिषः. 21 ) P ततः सरताः. 22 ) B दृढप्रतिज्ञा. 36 ) B सर्वशास्त्रगृहीत. 37 ) C adds [ अवधौ ] before जाते.

1 स स्वर्गे पद्मचन्द्रस्ततश्च्युत्वा विन्ध्याटव्यां कण्ठीरवः । पुनर्मानभटो ऽपि विपद्य पद्मसारः स्वर्गी, ततो 1
ऽयोध्यापुर्यां भूपतेर्दृढवर्मणः सूनुः कुवलयचन्द्र इति । तथा मायादित्यश्च्युत्वा त्रिदिवे पद्मवराभिख्यो
3 ऽनिमेषो भूत्वा दक्षिणस्यां दिशि विजयाभिधायां पुर्यां भूधनश्रीमहा(विजय)सेनस्य दुहिता कुवलयमाला। 3
एतत्परिज्ञाय मया चिन्तितम् । 'तदा तपस्विभवे मम संमुखमेतैर्भणितमासीत्' यथा 'यत्र तत्रोत्पन्ना-
नामस्माकं भवता सम्यक्त्वं दातव्यम्' इति सा यावन्मम प्रार्थना स्मृतिपथमागता तावदेष पद्मकेसर-
6 स्त्रिदशः समागत्य मां प्रति स्तुतिमाततान । 6

'समुत्पन्नावधिज्ञान ज्ञातजन्तुभवान्तर । जय त्वं श्रमणाधीश धर्माचार्यस्त्वमेव मे ॥' ३१३

§ ३३ ) तदाकर्ण्य तं निरीक्ष्य च मया जल्पितम् । 'भद्र, कथय किं क्रियताम् ।' ततो जल्पितं
9 नाकिना । 'भगवन्, पूर्वं मया प्रतिपन्नमिति, यथा सम्यक्त्वदानेन पद्मसारपद्मवरपद्मचन्द्रजीवा अनु- 9
ग्राह्याः । एते शुद्धौ मिथ्यादृष्टिकुललब्धजन्मानौ, एकः सिंहश्च । तदेते ऽतिदुर्लभे श्रीजिनेन्द्रनिगमे
प्रतिबोधनीयाः । ततः समागच्छ यथा गच्छावस्तस्यामयोध्यापुर्यां कुमारं कुवलयचन्द्रं प्रतिबोधयावः ।'
12 मयादिष्टम् । 'न त्वयोपायः सुन्दरः समुपदिष्टः । 12

यतः सुखनिमग्नानां रतिर्धर्मे न जायते । नीरुजामौषधे न स्यादादरस्य लवो ऽपि हि ॥ ३१४

तत्तस्य कुमारस्य राज्यदिग्धावितस्य पितृमातृभ्रातृभगिनीस्वजनवयस्यादिभ्यो ऽनतिदूरीकृतस्य च
15 कुतो बोधावसरः । यदुक्तम् । 15

"जननीजनकभ्रातृवियोगेनातिदुःखिताः । यावन्न देहिनस्तावद्धर्मकर्म न तन्वते ॥" ३१५

कुमारानयनाय त्वं भद्र गच्छाधुना त्वहम् । चण्डसोमो हरिर्यत्र तत्र गच्छामि कानने ॥ ३१६

18 § ३४ ) तत्रैकान्ते कुमारः पितृबान्धववियोगकलितः सुखं सम्यक्त्वं ग्रहीष्यते' तदुक्त्वाहमिहा- 18
गतः । पद्मकेसरः संप्राप्तो ऽयोध्यायाम् । तत्र च तत्क्षणनिर्गतस्त्वमश्वारूढो वाहकेलिगतो दृष्टः पद्म-
केसरेण । स तुरङ्गं प्रविष्टः । त्वां गृहीत्वा तुरग उत्पतितः । त्वया च तुरगः प्रहतः । पद्मकेसरेण च
21 मायया मृतो दर्शितो न पुनर्मृतश्च, केवलं तवाशाभङ्गः कृतः । ततः कुमार, सम्यक्त्वलाभार्थमनेना- 21
श्वेनाक्षिप्य त्वमानायितः । एतानि तानि रत्नरूपाणि विलोकयेति । ततः कुवलयचन्द्रः स्वं प्राच्यरूपं
तथा कुवलयमालायाश्चापरेषामपि पूर्वजन्मस्मृतिनिमित्तानि तान्यपश्यत् । उत्पन्नं च तद्दर्शनेन कुमा-
24 रस्य सिंहस्य च जातिस्मरणम् । मुनिना समादिष्टम् । 'कुमार, ततस्त्वं विचारय । 'असारः संसारः, 24
तीक्ष्णा नरकव्यथा, दुर्लभः श्रीजिनप्रणीतो धर्मः, दुष्प्रतिपाल्यः संयमभारः, बन्धनसदृशः सदन-
निवासः, निबिडनिगडप्राया दाराः, महाभयमज्ञानम्, न सुलभा धर्माचार्याः, महाभाग्यलभ्यं मनुष्य-
27 जन्म' इत्येवं च विज्ञाय 'सम्यक्त्वं गृहाण, द्वादशव्रतान्यङ्गीकुरु, परिहर पापस्थानानि ।' इदमात्मना 27
पूर्वजन्मवृत्तमथाश्वापहृतिं च निशम्य भक्तिभरप्रणतोत्तमाङ्गः कुवलयचन्द्रो वक्तुं प्रवृत्तः । 'अहो, अनु-
गृहीतो भगवता सम्यक्त्वदानप्रसादेनेति तावन्मम ददस्व जिनराजदीक्षानुग्रहम् ।' मुनिना प्रोक्तम् ।
30 'त्वमुत्सुकमना मा भव, तवाद्यापि भोगफलं कर्म समस्ति, अतः प्रव्रज्या न ग्राह्या । सांप्रतं पुनर्द्वादशविधं 30
श्रावकधर्मं प्रतिपालय ।' एतदाकर्ण्य कुमारेणोक्तम् । 'भगवन् श्रूयताम्, अतः परं श्रीजिनान् साधूंश्च
विना नान्यं नमामि, श्राद्धधर्मं च पालयिष्ये ।' भगवता भणितं 'भवतु' इति । ततो मुनिना पुनरप्युक्तम् ।
33 'भो मृगराज, त्वया पूर्वजन्मवृत्तं श्रुतम् । वयमपि तद्वचः संस्मर्य समागताः । तावदङ्गीकुरु सम्यक्त्वम् । 33
गृहाण देशविरतिम् । मुञ्च निस्त्रिंशत्वम् । परिहर प्राणिवधम् । त्यज सर्वथा क्रोधम् । अनेन दुरात्मना
क्रोधेनावस्थामिमामुपनीतो ऽसि ।' इदं वचो निशम्य मृगाधिपः सर्वाङ्गरोमाञ्चितश्चलद्दीर्घलाङ्गूलः समुत्थाय
36 मुनिं प्रणम्य प्रत्याख्यानं ययाचे । भगवता ज्ञानेनादिष्टम् । 'कुमार, एष केसरीदं जल्पति, यथा ममानशनं 36
देहि, यदस्माकमपुण्यवतां नास्ति प्रासुकाहारः । सदैव वयं मांसाशिनः, अतो मम न श्रेष्ठं जीवितम् ।'
ततो मुनिना तस्य प्रपन्नप्रतिबोधस्य निरागारमशनमदायि । स च तदङ्गीकृत्य त्रसस्थावरजन्तुजातविरहिते
39 स्थण्डिले संसारासारतां चिन्तयन् पञ्चनमस्कारपरायणः परित्यजन् स्वजातिदुःशीलत्वमुपाविशत् ।' 39

---

2 ) B मायादित्यो इति च्युत्वा, B °भिख्योनिमिषो. 3 ) P B दिशि जयाभिधायां, P B श्रीमहासेनस्य. 11 ) B °मयोध्यायां पुर्यां. 14 ) B राज्योदयश्रिया लालितस्य ( this is a correction on the original reading something like the one adopted in the text ), B °भ्यो दूरीकृतस्य. 17 ) B तत्रागच्छामि. 18 ) B तदुक्त्वाहमिहागतः पद्मकेसरः स्त्वामानेतुं गतः तत्र. 19 ) P om. संप्राप्तोऽयोध्यायाम्, shown by blank space; P B वाहकेलिगतो दर्शितो न पुनर्मृतश्च केवलं तवाशयाशाभंगः. 26 ) B निबड B for निबिड. 27 ) B इदमात्मनः. 36 ) B यथा मम मांसाहार एव ततोस्माकमपुण्यवतां.

कुमारेणोक्तम् । 'भगवन्, सा कुवलयमाला कथं बोध्या ।' भगवतादिष्टम् । 'सापि तत्र विजयपुर्यां चारणश्रमणकथानकेन स्मृतपूर्वजन्मवृत्तान्ता गाथाचतुर्थपादं राजद्वारे सर्वजनदृष्टं करिष्यति । तत्र गत्वा गाथापूरणतस्त्वमेव तां परिणेष्यसि । सा पुनस्तव महादेवी भविष्यति । ततस्तत्कुक्षिभूरेष पद्मकेसरस्त्रिदशः प्रथमः पुत्रो भावीति । तत्त्वमपाचीमभिगम्य कुवलयमालां प्रबोधय' इति निवेद्य सद्यः श्रमणेश्वरः ससार । सुपर्वापि 'अहं संबोध्यस्त्वया' इत्युक्त्वा गगने समुत्पपात । कुमारः 'भगवतादिष्टं कर्तव्यम्' इति चिन्तयन् दक्षिणाभिमुखं चलितः पश्चात्स्यं विलोक्य चिन्तयामासेति । 'यदयं साधर्मिको ऽथवा पूर्वसंगतः स्निग्धबन्धुरेकगुरुदीक्षितश्चानशनी च, अतो मयायमुपचर्यः । यद्यस्य कायपरित्राणं न करिष्ये तदायं केनापि व्याधेन शरैर्निहतो रौद्रध्यानवशमानसः श्वभ्रतिर्यग्दुःखभाजनं भावी' इति विचार्य भव्यरीत्या तेन प्रतिजागरितो भणितश्चेति ।

'जनौ जनौ मृगेन्द्र त्वमबोधिर्बहुधा मृतः । तथा म्रियस्वेति यथा भूयः स्यान्न मृतिस्तव ॥' ३१७

§ ३५ ) एवं धर्मकथां श्रुत्वा तृतीयदिने हर्यक्षः क्षुधाक्षामकुक्षिर्नमस्कारपरायणः समाधिना मृत्वा सौधर्मे द्विसागरोपमायुःस्थितिः सुमनाः समुदपद्यत । ततः केसरिशरीरसंस्कारमाधाय कुमारः कुवलयचन्द्रो दक्षिणाभिमुखमचालीत् । ततश्च

गिरिनिर्झरझात्कारैर्वाचालितदिगन्तरम् । त्रिपत्रं सप्तपत्राढ्यं नवबाणद्रुबन्धुरम् ॥ ३१८
शाखिसूनस्फुरद्गन्धलसद्भ्रमरविभ्रमम् । स्थाने स्थाने श्रूयमाणकेकिझंकारनिःस्वनम् ॥ ३१९
दारुणश्वापदव्रातसंकुलं केतनं वनम् । कुमारः क्रमयन् प्राप विन्ध्यपर्वतकाननम् ॥ ३२०

त्रिभिर्विशेषकम् ॥

तदा तत्र नखंपचवालुकानिवहे ज्वलद्बहलदावानलनिर्गच्छद्धूमध्यामलितककुम्मण्डले सर्वतः शुष्यमाणशाखिनि वात्यावियद्विवर्तितरजःसंचये च प्रचण्डमार्तण्डकिरणदण्डसंशोषितक्षितितले भीष्मग्रीष्मभरे उदग्रतृषासंशुष्यद्गलतालुकः कुमारः सलिलावलोकनाय कंचिद्भूभागं बभ्राम ।

ततस्तदन्तर्वसुधायोषिद्भाले विशेषकः । नृत्यत्त्रिदशसुन्दर्या भुवि स्रस्तं तु कुण्डलम् ॥ ३२१
मुक्तावदातसद्वारि हारिवारिजराजितम् । वातावधूतकिञ्जल्कलिप्तकाष्ठाङ्गनामुखम् ॥ ३२२
क्रीडत्स्वर्गाङ्गनापीनवक्षोजक्षोभितोर्मिकम् । पालिद्रुमालिसंलीनकिंनरीगीतसंगतम् ॥ ३२३
आवर्तमिव गङ्गायाः क्षीराम्भोधेरिवानुजम् । सुधाकुण्डमिवोद्भूतं कासारं स व्यलोकत ॥ ३२४

चतुर्भिः कलापकम् ॥

तमालोक्योच्छ्वसितमिव हृदयेन, प्रत्यागतमिव बुद्ध्या सर्वथा प्राप्तमनोरथ इव कुमारः समभूत् । तत्तीरस्थितेन कुमारेण चिन्तितम् । 'आयुर्वेदशास्त्रमध्ये मया श्रुतमासीत्, यत्किल दुस्सहक्षुत्तृषापरिश्रमभागिनापि देहिना तत्क्षणं पयो न पेयमिति । यस्मादेते सप्तापि धातवः प्रकुप्यन्ति, वातपित्तश्लेष्मादयो दोषा उत्पद्यन्ते, अतो मम श्रान्तस्य सद्यः शरीरप्रक्षालनपानादिकं नैवोचितम्' इति विचिन्त्य तत्तीरतरोरेकस्य तले क्षणमेकं विश्रम्य ततः कुमारः सरःसलिलावगाहनं पयःपानं च विदधे । ततः पुष्पफलस्पृहयालुः सर्वतः परिभ्रमन् कस्मिन्नपि प्रदेशे लतानिकेतने ऽप्रतिमां यक्षप्रतिमां यावन्निरूपयति तावत्तत्र यक्षशिरोदेशे सकलत्रैलोक्यबन्धोर्भगवतो ऽर्हतो मूर्तिर्मुक्तामयी तल्लोचनगोचरमागता । कुमारस्तामालोक्य हर्षवशविकसल्लोचनः स्तुतिमाततान ।

जय त्रिभुवनाधीश जय निर्माय निर्मम । जय कारुण्यपाथोधे जय श्रेयःश्रियोनिधे ॥ ३२५

§ ३६ ) ततः कुमारस्तां प्रतिमां जलेन प्रक्षाल्याहिमरुचिमरीचिवीचिपरिचयपेशलैः कमलैरभ्यर्च्य भक्तिभृतस्वान्तः पर्यष्टौदिति ।

संसाराम्बुधिपापनीरलहरीमध्ये भृशं मज्जत-
स्त्राता त्वं भुवनैकभूषणमणे त्वं नायकस्त्वं गुरुः ।
किंचान्यज्जनकस्त्वमेव जननी दीनत्वभाजो मम
त्वं बन्धुस्त्वमिह त्वमेव शरणं त्वं जीवितं त्वं गतिः ॥ ३२६

अत्रान्तरे निर्मितातुलजलक्षोभा सरोवरोदरतः कापि कामिनी दिव्यरूपधारिणी निःससार । तां च दृष्ट्वा चिन्तितं कुमारेण ।

14 > P त्रिपत्रिसप्त°. 15 > C काक for केकि. 18 > B ककुब्मंडले. 21 > B शेषकं for विशेषकः and B has a marginal gloss: तस्य वनस्य मध्ये । भूस्त्रीभालतिलकं । 27 > P B दुःसहतृषाक्षुधापरिश्रमभाजिनापि. 29 > P पामारिकं for पानादिकं. 30 > P पयः पानं च बंधाय blank space स्पृहयालुः, B च विधाय भोजनविषये स्पृहयालुः.

1 'समुद्रनन्दिनी किं वा किं वा विद्याधरी वरा। किं वा सिद्धाङ्गना किं वा देव्यसौ व्यन्तरी किमु ॥ ३२७
तां चानु करकमलकृतजलभृतकनककलशा दिव्यसरोजादिपूजोपकरणपूर्णपटलिकाविहस्तहस्ता कुब्जिका
3 च निर्गता। ते च विलोक्य कुमारश्चिन्तयामास। 'ननु दिव्ये इमे, न ज्ञायते केन हेतुनात्रागते।' ततो
यद्यत्र प्रदेशे स्थास्यामि तदेतयोर्मनसि महान् क्षोभो भविष्यति, अतो ऽस्यैव यक्षस्य पृष्ठिभागे तिष्ठामि
क्षणमेकम् 'यथैते किं निमित्तमागते, किमत्र कुर्वाते' इति परिज्ञानाय तद्यक्षपृष्ठावतिष्ठत्। ततः सा
6 मृद्वङ्गी भगवत्प्रतिमां सरोजैरर्चितां विलोक्य जल्पितवती। 'हे कुब्जिके, यदियमन्येनापि भगवतः
श्रीमदादिनाथस्य प्रतिमा केनाप्यर्चिता, परमिति न ज्ञायते यद्देवेन मानुषेण वा।' कुब्जिकयोक्तम्। 'अत्र
वने शबरैरभ्यर्चिता भविष्यति।' तयोक्तम्। 'नहि नहि विलोकय पदपद्धतिम्, यदस्यां वालुकाप्रति-
9 बिम्बितायां पद्मशङ्खाङ्कुशादीनि लक्षणानि लक्ष्यन्ते, ततो मन्ये को ऽप्युत्तमः पुमान्' इति वदन्ती
सुदती पूर्वपूजाकमलान्युत्सार्य भगवन्मूर्तिं कनककलशगन्धोदकेन संस्नाप्य विकचैरम्भोजैरभ्यर्च्य
स्तुतिमातन्य ततो यक्षं संपूज्य गीतं गातुं प्रवृत्ता। तस्या गेयं लय-ताल-तान-श्रुति-स्वर-मूर्छना-
12 ग्रामसुन्दरममेयगुणमाकर्ण्य कुतुकमनाः कुमारः 'अहो गीतम्, अहो गीतम्' इति वदन्नात्मानं प्रकटीचक्रे।
सा च मृगलोचना रूपगुणकलाकलापकलिताय कुमारायाभ्युत्थानं विदधे। कुमारेणापि 'साधर्मिक-
वत्सलत्वम्' इति चिन्तयता प्रथममेव साभिवन्दिता। तया साध्वसत्रपाभरोत्कम्पकम्पमानस्तनभरया
15 सविनयं भणितम्। 'देव कस्त्वम्, विद्याधरश्चक्रवर्ती सुरो वा, कुतः समागतः, क्व यास्यसि' इति। अथ
भणितं कुमारेण। 'मनुष्यो ऽहं कार्यार्थी दक्षिणापथं प्रत्ययोध्यातश्चलितः। एष मम परमार्थः।

एतस्मिन् [हि] महारण्ये का त्वं यक्षः क एष वै। एतस्य हेतुना केन शीर्षे मूर्तिर्जिनेशितुः ॥ ३२८
18 एतच्चित्रं महच्चित्ते मम संप्रति वर्तते। कुरङ्गनयने तावदेतदाशु निवेदय ॥' ३२९

§ ३७) 'हे कुमार, श्रूयताम्।

समस्तीह भुवि ख्याता पुरी स्वर्गपुरीनिभा। माकन्दी भूरिमाकन्दा सदादीनजनस्थितिः ॥ ३३०
21 अरिष्टशब्दो निम्बे स्यात् कलिर्यत्र बिभीतके। पलंकषो गुग्गुलौ च जने नैव कदाचन ॥ ३३१

तत्रास्ति यज्ञदत्ताभिधः सूत्रकण्ठः श्रोत्रियः। स च कृष्णाङ्गः कृशशरीरः खरस्पर्शः प्रदृश्यद्धमनिजालः
सदा दारिद्र्यमुद्राविद्रुतः। तस्य सावित्री प्राणप्रिया। तत्कुक्षिभवान्यपत्यानि त्रयोदश। तेषु चरमः
24 सोमनामा तनूजः। तस्मिन् जातमात्र एव संवत्सराणामधमा विंशिका प्रविष्टा। तदनुभावेन द्वादश-
वत्सरीमवृष्टिरजायत।

यत्रौषध्यो न जायन्ते न फलन्ति महीरुहः। निष्पद्यते न वा सस्यं तृण्या नैव प्ररोहति ॥ ३३२
27 अतो देवार्चनं नैव नैवातिथिषु सत्क्रिया। वितरन्ति न वा दानं नार्चयन्ति जना गुरून् ॥ ३३३

एवंविधे महादुर्भिक्षे यज्ञदत्तकुटुम्बं समस्तमपि क्षयमियाय। केवलं स बटुः सोमः कनिष्ठपुत्रः
कथमपि कर्मवशतः क्षुधाभारोपरतसमग्रबन्धुवर्गः कदाचिद्राजमार्गे विपणिश्रेणिपतितैर्धान्यकणैः
30 कदाचिद्भोजनक्षणदत्तबलिपिण्डेन महता कष्टेन महद्दुष्कालकान्तारं व्यतीयाय। तदनन्तरं ग्रहगत्या
प्रजानां भाग्यवशतः प्रभूतं तोयं निपतितं, सर्वत्र प्रमुदितानि जनमनांसि, सर्वत्रैवोत्सवः प्रवृत्तः।
तस्मिन्नीदृशे सुभिक्षे प्रवृत्ते सोमबटोः षोडशवर्षदेशीयस्य दरिद्र इति पदे पदे जनेन हस्यमानस्य
33 चेतसीदृशी चिन्ता संजाता।

'के ऽपि मर्त्यसहस्राणामुदरंभरयो नराः। प्राकृताद्दुष्कृतादात्मंभरयो ऽपि न मादृशाः ॥ ३३४
तत्कृतं सुकृतं किंचिन्नैव पूर्वभवे मया। येन मे न भवत्येव दुःस्थावस्था कदाचन ॥ ३३५
36 सर्वदापि सुखेच्छा स्याल्लोकस्यामुष्य मानसे। न करोति परं किंचित् श्रेयो येन सुखी भवेत् ॥ ३३६

§ ३८) तत्सर्वथैव धर्मार्थकामपुरुषार्थत्रयशून्यस्यास्मादृशजनस्य जीवितत्यजनमेव श्रेयस्तरम्,
अथवा न युक्तमेतत्, यत आत्मनो वध उचितो न।

39 ये त्यक्ता द्रव्यमानाभ्यां भवेयुर्भविनो भुवि। श्रेयांस्तेषां वने वासो ऽथवान्यविषयान्तरे ॥ ३३७

---

3) B °यामास। अथ मया किं कर्तव्यमिति यद् अत्र प्रदेशे P has blank space for ननु दिव्ये etc. to ततो. 4) B पृष्ठिविभागे. 5) P अति for इति. 13) B °कलितस्य कुमारस्याभ्युत्थानं. 15) P has a gap shown by blank space for सविनयं etc. to एतस्मिन् [हि], B °भरयाभाणि भो कुमार भवान् कुतः कुत्र किमर्थं याति। कुमारोऽप्यश्वापहारमारभ्य कुवलयमालाबोधं यावन्निवेद्यतां जगौ भद्रे महारण्ये. 17) B वा for वै. 21) B has a marginal gloss: ऽरिष्टशब्दो लिंबे वाचकः। न लोकेऽरिष्टशब्दप्रयोगः। कलिः कलहः। बिभीतकवृक्षश्च। पलंकषो गुग्गुलुः। पलं मांसं कषति विनाशयति पलंकषः।. 22) B भिदः कठः श्रोत्रियः, B प्रदृश्यमानधमनिजालः (मान added on the margin). 26) C तृणान्येव प्ररोहति but suggests an emendation thus: 'रोहन्ति तृणान्यपि'.

ततो विदेशगमनमेव समीचीनम्' इति ध्यायन् सोमबटुर्माकन्दीपुरीतो निर्गत्य दक्षिणां दिशमाश्रित्य चलितः। क्रमेणानवरतप्रयाणेन कृतभिक्षावृत्तिर्विन्ध्यगिरेर्महाटवीमाटिवान्। तत्र तदातिमहानिदाघे तृषाक्षुधार्तः प्रभ्रष्टमार्गः सिंहव्याघ्रदर्शनवेपमानमानसः कस्मिंश्चित्सरसि पयः पीत्वा वनफलान्यभक्षयत्। तत्र तेन परिभ्रमता चन्दनैलालवङ्गलतागृहे भगवतः प्रथमतीर्थनाथस्य प्रतिमां निरीक्ष्य चिन्तितम्। 'अहो, पुरापि माकन्दीपुर्यां मयेदृशी मूर्तिर्दृष्टा' इति विमृश्य तीर्थकृतः सपर्यां विरचय्य पुरो बटुर्जजल्प। 'भगवन्, तव नामगोत्रगुणकलादिकं न जाने, किंतु भक्त्या त्वद्दर्शनेन भवच्चरणार्चनेन च यत्किंचिद्भवति तद्भवतु' इति प्रार्थ्य रम्यो ऽयं वनाभोगः, प्रधानः सरोवरोद्देशः, कमनीयं लतागृहम्, फलिताः पादपाः, सौम्य एष देवः, मया च तद्दुस्सहदारिद्र्यापमानकलङ्कितात्मना विदेशमपि गत्वा परप्रेष्येणैव भाव्यम्। का ऽन्या गतिरस्मादृशामकृतपूर्वतपश्चरणानाम्। यतः,

दूरं गतो ऽपि नो मर्त्यस्त्यज्यते पूर्वकर्मभिः। रोहणाद्रौ व्रजेद्यद्वा दारिद्र्यं तत्तथैव च॥ ३३८

सर्वथापि नास्ति पूर्वविहितस्य नाशः। ततो वरमिहैव जले स्नानं कुर्वन्नेतान्येव जलकमलानि गृहीत्वा कमप्यमुं देवताविशेषमर्चयन् सुखेन वनतपस्वीव किं न तिष्ठामि' इति ध्यात्वा तत्रैव सोमस्तस्थिवान्।

§ ३९ ) एवं कालान्तरेण कृतभूरिफलाहारस्य तस्य विसूचिकया भगवन्मूर्तिं हृदि चिन्तयतः समाधिना मृतिर्बभूव। ततो रत्नप्रभायाः प्रथमे योजनशते व्यन्तराणामष्टौ निकाया ये ऽल्पर्द्धयः सन्ति, तेषां यक्ष १ राक्षस २ भूत ३ पिशाच ४ किंनर ५ किंपुरुष ६ महोरग ७ गन्धर्वाणां ८ मध्ये प्रथमनिकाये महैश्वर्ययुतो यक्षराजो रत्नशेखराख्यः स समुत्पेदे। तत्रस्थेन तेन चिन्तितम्। 'कस्य सुकृतस्य वशतः प्रभूतवैभवभाजनमभवम्' इत्यनुध्याय प्रयुक्तावधिज्ञानेन यक्षराजेन तस्मिन्नेव लतागृहे जगत्पतेः पुरः स्वं शरीरं निरीक्ष्य श्रीयुगादिजिनप्रतिमामभ्यर्च्य प्रोचे। 'यदहं सर्वपुरुषार्थबहिष्कृतो ऽपि सर्वत्र लोके हस्यमानो ऽप्येवंविधैश्वर्यभाजनं यक्षराजः समभवं स केवलं तव प्रसाद एव। अतो युक्ता मम शीर्षे जिनेश्वरस्थापना। एकं तावदयं सुरासुरनरेश्वराणामप्यभ्यर्च्यः, द्वितीयं यदुपकारकारि मे, तृतीयं यत्सिद्धिसुखनिदानं च' इति परिवारपुरस्सरमुक्त्वा तेन यक्षेण तत्र वने स्वस्य मूर्तिं महतीं मुक्तामयीं निर्माय तस्या मुकुटोपरि श्रीमदादिनाथस्य प्रतिमा विदधे। तदाप्रभृति तत्र यक्षलोकेन रत्नशेखर इत्यभिधानमवगणय्य तस्य जिनशेखर इत्याख्या पप्रथे। तेनाहं चेति भणिता। 'यत्कनकप्रभे, त्वया प्रतिदिनं भगवान् दिव्यमणीचकैरभ्यर्चनीयः। मया पुनरष्टम्यां चतुर्दश्यां च परिबर्हेण समं सपर्यानिमित्तं भगवतः समागन्तव्यम्।' इत्युदित्वा यक्षः स्वस्थानमगात्। ततो भद्र, यत्त्वया पृष्टं क एष यक्षः, किं चामुष्य मुकुटे जिनप्रतिमा, त्वमपि कासि, सैष यक्षराजः सेयं जिनप्रतिमा तस्य चाहं कर्मकरी। इह प्रतिदिनं मया समागन्तव्यमेव।' इति भणिते भणितं कुमारेण। 'अहो, महदाश्चर्यं, महत्प्रभावो भगवान्, भक्तिभरनिभृतो यक्षराजः, विनीता भवती, रम्यः प्रदेशः, सर्वथा पर्याप्तं मम दृशां श्रुतीनां च फलम्।' ततस्तया भूयो ऽपि जगदे। 'भो भद्र, सफलं देवदर्शनम्, अतः किमपि प्रार्थय, यथा तव हृदयेप्सितं ददामि' इति। कुमारेणोक्तम्। 'न किमपि मम प्रार्थनीयमस्ति।' तया जगदे। कस्यापि किमपीप्सितं स्यादतो याचस्व किमपि।' कुमारेण जल्पितम्। 'भद्रे, एष भगवान् जिनभक्तिकरो यक्षराजो भवती चेति सर्वमप्येतदवलोकितं यतः परमपि किं प्रार्थनीयम्' इत्युदित्वा कुमारः समुत्तस्थौ। ततस्तयोक्तम्। 'भो भद्र, भवता दूरे गन्तव्यं यदरण्यमार्गो विषमो ऽनेकप्रत्यूहव्यूहनिदानम्' इति भणित्वा तया स्वकरादुत्तार्य वर्यवीर्यनिलयमौषधीवलयमेकमर्पयामासे। कुमारस्तदङ्गीकृत्यापाचीं प्रति चचाल।

§ ४० ) ततः क्रमेण कुमारेण प्रचण्डपवनहतकल्लोलमालाप्रेर्यमाणतीरपक्षिगणा करिकराघातसमुच्छलत्कल्लोला कुपितमत्तवनमहिषशृङ्गोच्छलज्जलच्छटासिच्यमानतीरतरुनिकरा मीनपृष्ठोल्लसदतुच्छफेनपटलालंकृता प्रमत्तदुर्दान्तमज्जन्मातङ्गमण्डलीगण्डस्थलगलितमदजलबिन्दुसंदोहसुरभितजला नर्मदा समुत्तीर्णा। तत्तीरे कुमारः परिभ्रमन् तमालतरुराजीविराजितं प्राङ्गणकुसुमितकेसरशिखरिणं प्रत्यासन्नविकसत्पुष्पजातिमकरन्दमधु [ लुब्ध ] मुग्धमधुपध्वनिमनोहरमुटजं प्रविश्य रुद्राक्षमालावलयं

---

3 ) B कस्मिंश्च सरसि. 5 ) B adds तस्य before तीर्थकृतः. 6 ) B om. न before जाने. 8 ) मया तावद्दुःसह. 9 ) B परप्रेष्येण ( P प्रेक्षेण ) भाव्यं. 10 ) C दारिद्रं. 14 ) C °मष्टनिकाया. 16 ) B om. तेन. 18 ) B om. श्री, P B यदस्मि for यदहं. 24 ) B परिवारेण समं. 26 ) P किं वाऽमुष्य. 31 ) P किमीप्सितं, B यदतो for स्यादतो, B om. किमपि. 39 ) The passage तत्तीरे कुमारः etc.....गरीयः पयोधरा is adopted from B in which too it is written in a different style

1 कमण्डलुं चालोक्य 'महामुनिरत्र को ऽपि निवसति' इति चिन्तयंस्तदग्रे पांसुले भूमिप्रदेशे पदप्रतिकृतिं 1
ददर्श। तां च दृष्ट्वा चिन्तितं तेन 'नूनमयं कस्याश्चिन्महेलायाश्चरणप्रतिबिम्बो, न पुनरन्यस्य'। ततो
3 गच्छता तेन वल्कलपिहितगरीयःपयोधरा जरत्तापसीपृष्ठगामिनी त्रैलोक्यातिशायिरूपा नवयौवना 3
कामिनी दृष्टा। तयोः पुरस्सर एको राजकीरश्च। तस्यानुपदीनः शुकसारिकानिकरश्च। एतद्विलोक्य
कुमारेण चिन्तितम्। 'अहो, अस्या महानुपशमः, यदरण्यनिवासिनः पक्षिणो ऽपि पार्श्वमस्या नोज्झन्ति'
6 इति चिन्तापरस्तया तरुण्या कुमारो ऽभ्युत्तिष्ठत्। ततस्तं वीक्ष्य निर्मानुषवनजन्मतया भयेन चञ्चलदृशं 6
तां पलायमानां चारुवदनां निरीक्ष्य राजकीरो बभाषे। 'स्वामिन्येणिके, किं पलायनं भवती कृतवती।'
तयोक्तम्। 'अयं पुनः क एतस्मिन् ममोटजे वनश्वापदः।' तेनोक्तम्। 'एणिके, मा भयभ्रान्तं मनः कुरु,
9 यदयं पथिकः पथश्रान्तः समागतः। ततः समागत्यामुष्य पुरुषोत्तमस्य स्वागतं पृच्छ' इति निगदिते 9
नृपशुकेन सा सव्रीडं कम्पमानवक्षोरुहा पथिकस्य स्वागतमुक्तवती। तथा 'कुतस्त्वागमः, कुत्र वा प्रच-
लितः, किं कार्यम्' इति शिक्षितं प्रोचे। स प्राह। 'अयोध्यातः समागतो ऽस्मि, कार्यार्थी दक्षिणां दिश-
12 माश्रितः।' शुकः प्रोवाच। 'स्वागतं महानुभावस्य, क्षणमेकमत्र पल्लवस्रस्तरे समुपविश' इति निशम्य 12
कुमारः समुपाविशत्। एणिका विविधतरुपक्कसुस्वादुसुरभीणि फलानि कुमारस्य पुरो मुक्त्वा निषसाद।
कुमारो ऽप्यचिन्तयदिति। 'न ज्ञायते काप्येषा केनापि कारणेन वैराग्येण वा कुत्र वागतेह तपस्यति,
15 तत्पृच्छामि' इति ध्यात्वा प्राह। 'भद्रे, कथय का त्वं, कथं वात्र वने स्थिता, किं वैराग्यकारणं तपसे' 15
इति भणिता तेन सा न्यग्मुखी तस्थौ। कुमारस्तु तस्याः प्रतिवचनमुपेक्षमाणः क्षणं विलक्षास्यः सम-
भूदिति। तद्दृष्ट्वा राजकीरेण जल्पितम्। 'भो भो महानुभाव, मनागेषा लज्जते। भवतः प्रार्थना मा वृथा
18 भवतु' इत्यहं कथयिष्ये। 18

§ ४१) 'अत्रैव नर्मदाया नद्या दक्षिणकूले देवाटवी नाम महाटवी। तदन्तर्महान् पत्रलः सच्छायो
वटपादपः। तस्मिन् सदैव कीरकुलं निवसति। तत्र चैको मणिमयाख्यः सर्वशुकवृन्दराजो राजकीरो
21 ऽस्ति। तस्य राजकीरिकासंभवः क्रमेण स्फुरदिन्द्रनीलमणिसंनिभपक्षावलीविराजमानो मनोहरकान्तिः 21
शुकः समजायत। स चान्यदा भीष्मग्रीष्मखरकिरणकिरणघोरणीतापिततनुस्तृषाशुष्यद्गलतालुकस्तमाल-
तरुतले क्षणमेकमुपाविशत्। तत्रस्थस्य तस्य व्याध एकः समागमत्। स च राजकीरसुतं तं भयेन पलाय-
24 मानं बलात्कारेण गृहीत्वा पल्लीपतेः प्राभृते ऽर्पयामास। तेन राजकीर इति पञ्जरे न्यक्षेपि। तत्र स्थित- 24
स्तेन स वृद्धिमानीतः, महापुरुष, सोऽहं शुकः। अन्यदा श्रियः कच्छे श्रीभृगुकच्छे भृगुभूपतेः पल्ली-
पतिनाहमुपदीकृतः। तेन नरेन्द्रेण संतुष्टचेतसा मदनमञ्जर्यै सुतायै क्रीडार्थमर्पितो ऽस्मि। तयाल्पदि-
27 नैरप्यहं स्थावरजङ्गमविषचिकित्सागजताम्रचूडतुरङ्गपुरुषस्त्रीलक्षणप्रभृतिसमस्तशास्त्रपारदृश्वा कृतः 27
जिनप्रणीतवचननिश्चितमतिश्च। तत्रान्येद्युरतिदारुणे निदाघे कस्यचिन्मुनेरनित्यतादिभावनाभाजिनः
केवलज्ञानमुल्ललास। तदा तत्रत्यलोकेन केवलमहिमायै देवानां गतागतं वीक्ष्य भृगुभूपस्य पुरो न्यवेदि।
30 'देव, यत्तव पिता घातिकर्मचतुष्टयक्षये केवलशाली बभूव' इत्यवगम्य भृगुभूपः स परिच्छदः केवलिने 30
जनकाय नमस्करणार्थमायातः। मदनमञ्जर्याहमपि तत्रानीतः।

§ ४२) अत्रान्तरे नीलपीतवाससौ विस्फूर्जन्मणिकनकभासुरालङ्कारसारौ द्वौ विद्याधरौ केवलिनं

---

on a pasted slip of paper, possibly a correction on the basis of some older codex. The corresponding passage in P runs thus: तत्तीरे कुमारः परिभ्रमन् तमालतरुमधुपध्वनिमनोहरमुटजं प्रविश्य रुद्राक्षमालावलयं कमंडलुं चालोक्य राजीवराजितं प्रांगणकुसुमितकेसरशिषरिगं प्रत्यासन्नविकसतपुष्पजातिमकरंदमधुलुब्धमुग्धचिंतितं तेन। नूनमयं कस्याश्चिन्महेलायाश्चरणप्रतिबिंबो न पुनरन्यस्य। महामुनिरत्र कोपि निवसतीति चिंतयंस्तदग्रे पांशुलभूमिप्रदेशे प्रतिकृतिं ददर्श तां च दृष्ट्वा यू पिहितगरीयः पयोधरा. This obviously represents disturbed version of the text adopted above. C reads thus: तत्तीरे परिभ्रमन् कुमारो [बहलस्निग्धतरुवरनिकरसंकुले एकस्मिन् प्रदेशे एकं भव्यमुटजं दृष्ट्वाऽत्र 'कोपि महर्षेराश्रमो भविष्यति' इति मन्यमानस्तद्दिशाभिमुखं यावच्चलितस्तावत्तरुणतमालपादपपङ्क्तिपरम्परापरिकलितं समन्ततः कुसुमितबहुजातिजातिकुसुमकरन्दलुब्धभ्रमरनिकररणरणशब्दसङ्गीतमनोहरं राजीवराजितमुटजाङ्गणं ददर्श। तत्र च रुद्राक्षमालावलयं कमण्डलुं चावलोक्य चिन्तितमनेन राजतनयेन-'नूनमत्र कश्चिन्महर्षिः प्रतिवसति' इति। ततस्तदग्रे पांसुले भूमिप्रदेशे प्रतिबिम्बितां सुलक्षणलक्षितां पदपद्धतिं विलोक्य चिन्तितमनेन-'नूनमयं कस्यश्चिद्विलासिन्याश्चरणप्रतिबिम्बो न पुनः पुरुषस्य' इति। ततस्तदनु यावदग्रे गम्यते] तावत्तेनोत्तरीयपिहितगरीयःपयोधरा. As portion of this is put in square brackets, the ms.-basis is not clear.

3) P नवयौवनकामिनी. 6) B कुमारोभ्यत्तिष्ठन् ददर्श (ददर्श added on the margin) ततस्तं. 11) P om. किं कार्यम् etc. to दिशमाश्रितः 13) C adds [उपदीकृत्य] before पुरो, P om. मुक्त्वा, B has a marginal gloss: ढौकि for मुक्त्वा. 16) B °वचनमपेक्षमाणः. 25) B श्रीभृगुकत्से. 28) C adds (महिम्ने) before देवानां. 30) B घातिचतुष्टयकर्मक्षये.

प्रणिपत्य प्रोचतुः 'भगवन्, निवेद्य सा का ।' इत्याकर्ण्य भृगुभूपेन जनैश्च विज्ञप्तम् । 'भो विद्याधरौ, सा पुनः का ।' ततस्ताभ्यामुक्तम् । 'कदाचिद्वैताढ्यपर्वतात् सम्मेतशैलशिखरोपरि तीर्थकृतः प्रणिपत्य श्रीशत्रुञ्जयपर्वतमहातीर्थं प्रति गच्छद्भ्यामावाभ्यां विन्ध्यगिरिविनिर्गतनर्मदादक्षिणे तटे मृगयूथमार्गानुगामिनीमेकां कामिनीमालोक्य चिन्तितम् । 'अहो, महदाश्चर्यं मृगयूथेन सह कामिनी भ्रमति ।' तत्र कौतुकेनावामवतीर्णौ, आवाभ्यामाभाषिता च सा । 'हे बालिके, भीमे ऽरण्ये निर्मानुषे कथमेकाकिनी भवती, कुतो वा समागता ।' सा किंचिन्न जल्पति, प्रत्युताधिकतरमपससार । तत आवयोः पश्यतोरेव तन्मृगयूथं सा चारुलोचना च दर्शनादर्शनत्वमियाय । आवाभ्यां तदाश्चर्यमालोक्य को ऽप्यतिशयशाली मुनिः प्रष्टव्यः' इति ध्यायद्भ्यां भवानेवात्र दृष्टः । ततः पृष्टम् । 'मुनीश्वर, का पुनः सा ।' ततः स स्वयं केवलज्ञानशाली जल्पितुमारेभे ।

'अस्त्यवन्तीपुरी रम्या सदा नाकविराजिता । पुरी गरीयसी लक्ष्म्या सदाना कविराजिता ॥ ३३९
बभूव भूपतिस्तत्र प्रजापालनलालसः । श्रीमान् वत्साभिधः कान्त्या प्रजापालनलोपमः ॥ ३४०
यस्य प्रतापवशतो ऽरिनरेश्वराणां दन्तीन्द्रगण्डविगलन्मदवारिशोषः ।
कामं तदीयवनितानयनाम्बुपूरपोषः समं समभवच्च तदत्र चित्रम् ॥ ३४१
अभूत्तनूभवस्तस्यानूनसंवित्तिवैभवः । पुरंदरसमस्थामा नाम्ना श्रीवर्धनाभिधः ॥ ३४२

तथा श्रीमतीति तत्सुता च । तां विजयपुरस्वामिनो विजयनराधिपस्य तनुजः सिंहः पर्यणैषीत् । स च यौवनप्राप्तः 'सर्वदैवानयाध्वनीनो ऽसद्व्ययी' इति परिज्ञाय राज्ञा निर्विषयीचक्रे । ततः सिंहः स्वां प्रियां गृहीत्वैकस्मिन् पर्यन्तग्रामे ऽतिष्ठत् ।

§ ४३ ) इतश्च कालान्तरेण स श्रीवर्धनराजपुत्रो धर्मरुचिमुनेरन्तिके ऽन्तेवासी भूत्वा कियतापि कालेनाधिगतश्रुतः स्वीकृतैकाकिविहारिप्रतिमस्तत्र विहारमकरोद्यत्र स भावुको भगिनी च । अन्यदा स भगवान् मासक्षपणपारणायां क्षामतनुरतनुतपोनिधिस्तस्या एव स्वसुर्वेश्मनि भिक्षार्थं प्रविवेश । तया दूरत एव भ्रातरमुपलक्ष्य चिन्तितम् । 'यदयं केनापि पाषण्डिना विप्रतार्य प्रव्राजितः । ततस्तया स्नेहभरनिर्भरहृदयया चिरभ्रातृदर्शनोत्कण्ठया मुनिरालिलिङ्गे । ततस्तत्पतिना तदात्वे बाह्यागतेन तच्चेष्टितमालोक्य कोपपरवशमनसा मुनिर्निहतः । तया तत्पत्न्या 'भ्राता मम हतो ऽनेन पापिना' इति ध्यात्वा पतिरपि काष्ठखण्डेन विनाशितः । तेन म्रियमाणेन तेनैव काष्ठखण्डेन प्रियापि भिन्नशीर्षा व्यधायि । स च सिंहः स्वभावत एव क्रोधनो महामुनिघातसंजाताघसंघातेन रत्नप्रभायां रौरवे नरकावासे सागरोपमस्थितिर्नैरयिकः समुत्पेदे । सापि तस्य मुनेः स्वसा भ्रातृस्नेहमूर्च्छिता तत्क्षणोत्पन्नक्रोधा निहतपतिजातप्रभूतपापा तत्रैव नरकप्रस्तरे समजनिष्ट । स पुनर्यतिर्निर्दयं कृपाणप्रहारव्यथितो ऽपि समाधिना विपद्य सद्यः सागरोपमस्थितिः सौधर्मे त्रिदशः समभवत् । ततश्च्युत्वात्र भृगुकच्छे नृपतिर्जातः सो ऽहं दृष्टश्च भवद्भ्यामुत्पन्नकेवलः । स च सिंहो नरकादुद्धृत्य नन्दिपुरे पुरे ब्राह्मणत्वमुपलभ्य वैराग्यादेकदण्डीभूयाश्रमानुरूपं तपः प्रपाल्यायुषः क्षये ज्योतिष्केषु देवत्वं प्राप । तेन च को ऽपि केवली पृष्टः स्वपूर्वभवम् । तेन च तस्य ज्योतिष्कदेवस्य प्राग्भव उक्तः । तं श्रुत्वा समुत्पन्नातुच्छमत्सरग्रस्तमतिरिति व्यचिन्तयदिति । 'अहं तया निजप्रियतमया मारितः । सा च दुराचारा कुत्र' इति चिन्तयता तेन सा ततो नरकादुद्धृत्य पद्मपुरे पद्मस्य भूपतेः कन्यका जातमात्रा दृष्टा । तदालोकनतस्तदात्वपरिस्फुरदमर्षकम्पमानाधरेण तेन तत्रागत्य विन्ध्यगिरिवनान्तराले सा बालिका जातमात्रा समुज्झिता । सा च कर्मवशतः कोमलकिसलयव्याप्तप्रदेशे पतिता पवनेनाश्वासिता च । तदानीं च भवितव्यतया तत्रैव गर्भभरवेदनार्ता वनमृगी समागता प्रसूता च । प्रसववेदनाविरामे तया मृग्या निरूपितं चिन्तितं च । 'किं ममाधुना युगलकमभवत् । तत आर्जवतया स्वापत्यमिति तस्या मुखे स्तन्यं स्रवन्ती तामवर्धयत् ।' ततश्च सा बाला मृगयूथेन रममाणा निर्मानुषे ऽरण्ये क्रमेण यौवनमाससाद । तत्र च तस्यास्तिष्ठन्त्या वननिकुञ्जानि गृहाणि, पक्षिणो बान्धवाः, वानरशिशवो मित्राणि, अशनं वनफलानि, सलिलं निर्झरजलं, शयनं विशालशिलातलानि, विनयः सारङ्गकुलस्य पृष्ठिशीर्षं कण्डूयनमिति । ततः सा मृगयूथसंगता मानुषं निरीक्ष्य मृगीव प्रोत्फुल्ललोचना पलायते । यद्भवद्भ्यां पृष्टं यथा

3) P has blank space between विन्ध्यगिरि and नर्मदा°. 5) P B om. आवाभ्यामाभाषिता च सा. 10) P नाकविराजिनी B has a marginal gloss thus: सह दानेन वर्त्तते सदाना । तथा कविभिः पंडितैः राजिता । पुनः किंविशिष्टा । सदा सर्वदा स्वर्गवत् शोभिता । ऽथवा सदानअकविराजिता दुःखविराजिता किंतु सदासुखिता इत्यर्थः. 17) P B गृहीत्वा कस्मिन्. 24) B adds सा before प्रियापि, P om. भिन्न. 25) B नरकवासे. 36) B गर्भभार°. 40) B विनयं सारङ्ग.

'का पुनरेषा वने परिभ्रमति' सेयं मम पूर्वभवीयस्वसुर्जीवः। यदेतया कदाचिन्मानुषो ऽपि न वीक्षित इति युवां दृष्ट्वा पलायिता।' ताभ्यां विद्याधराभ्यां विज्ञप्तम्। 'किं सा भव्या, किमभव्या' इति। भगवतादिष्टम्। 'भव्या'। ताभ्यामुक्तम्। 'कथं तस्याः सम्यक्त्वप्राप्तिः'। भगवतोक्तम्। 'अस्मिन्नेव भवे ऽस्याः सम्यक्त्वलाभः'। ताभ्यामुक्तम्। 'कस्तस्या धर्माचार्यो भावी'। भगवता भणितं मामुद्दिश्य। 'एष राजकीरः'। ततो ऽहं भगवद्भणितेन मदनमञ्जर्याः 'पितामहवाक्यमलङ्घनीयम्' इति चिन्तयन्त्या तस्याः प्रबोधकृते विसर्जितो ऽम्बरतलमुत्पत्यात्र वनान्तः समागतः। मया च परिभ्रमता सेयं बालिका दृष्टा। ततः कियद्भिरपि दिनैर्भक्ष्याभक्ष्ये कार्याकार्ये तथा जिनप्रणीते धर्मे समग्रे ऽपि मनुष्यव्यवहारे च विचक्षणा कृता। कथितश्चास्यै केवलिप्रणीतः पूर्वभवः। यथा 'भवती पद्मभूपस्य दुहिता वैरिणात्र समानीता न वने जाता, तदरण्यं परित्यज्य मया समं वसन्तीं भुवं समागच्छ। तत्र भोगान् भुङ्क्ष्व परलोककृत्यमाचरेः।' एतया भणितम्। 'यदिदं वनं ममावनमिति। येन दुर्लक्ष्यो लोकाचारः। विषमाश्चपलाः पञ्चापि विषयताक्ष्याः। बहवः खलाः। अतो ऽत्रैव मन्मनसि समाधिर्न पुनरन्यत्र लोकाचारे।' तदनन्तरं सा तत्रैव वने पतितप्रासुककुसुमकन्दफलमूलपत्राशना दुश्चरं चिरं तपश्चरन्ती स्थितवती। ततो यत्त्वया पृष्टम् 'का त्वं, कुत आगता, किं वनवासे वैराग्यहेतुः' इत्यादिकमियं पृष्टा तत्तव भोः कुमार, मयोदितम्।' ततः कुमारेण सविनयमुत्थाय 'राजकीर, त्वां साधर्मिकमभिवादये' इत्युक्तम्। एणिकया जल्पितम्। 'फलितं ममाद्य वनवासेन, दृष्टो यद्भवान् सम्यक्त्वधारकः श्रावकः' इति। अतिक्रान्तो मध्याह्नसमयः, तत्त्वरितमुत्तिष्ठ यथा स्नानार्थं गच्छावः। ततः सा तस्याश्रमस्य प्रत्यासन्नजलाशयोद्धृतगलितजलैः कृताङ्गप्रक्षालना प्रावृतधौतकोमलधवलवल्कला कस्मिंश्चिद्गिरिकन्दराभोगे पूर्वं जलेन संस्नाप्य भगवतः प्रथमतीर्थपतेः प्रतिमां जलस्थलजकुसुमैरभ्यर्च्य च प्रणतिं चकार। कुमारेण च स्नात्वा कृतपूजाविधानेन स्तुतिः कर्तुं समारेभे।

'गुणैरमेय नाभेय भवच्छेदविधायक। अतो भव भवभ्रान्तिभीतिसंहृतये मम ॥ ३४३
श्रीवृषाङ्क जगन्नाथ देवदेव मनोभवः। मम प्रहर्ता संहर्ता तस्य त्वं तत्त्ववृत्तितः' ॥ ३४४

§ ४४) अथो कुमार एणिकया शुकेन च साकं तत्रैवोटजे समागत्य सुस्वादुसुरभिसुपक्वानि फलान्यघसत्। तत्रस्थस्य कुमारस्य विविधशास्त्रकलाकलापदेशभाषाख्यायिकाख्यानकभाषणप्रमोदितैणिकाराजकीरस्य एकदा श्यामलकायच्छायं शिखिपिच्छविनिर्मितकर्णावतंसं नानाविधतरुराजीप्रसूनापूर्णधम्मिल्लं शबरमिथुनमेकं समाजगाम। तच्चाग्रतो भूत्वा राजपुत्रस्य बालिकाया राजकीरस्य च प्रणामं निर्माय दूरशिलातले ऽध्युवास। एणिकया तस्य निरपायकायकिंवदन्ती पृष्टा। तेन च प्रणतोत्तमाङ्गतयैव सर्वमपि प्रत्युक्तं न पुनर्वचनेन। शबरेण च मुक्तं धनुर्धरण्याम्। कुमारेण तद्रूपशोभाविरुद्धशबराचारकौतुकाक्षिप्तचेतसा चिन्तितम्। 'अहो, धिग् रूपं न कार्यं लक्षणैः, अप्रमाणानि शास्त्राणि, असाराः सर्वे गुणाः, अकारणं वेषाचारौ, सर्वमपि प्रतीपम्। अन्यथा कथमेतद्रूपं लक्षणव्यञ्जनविभूषितम्। कुत्र वा इदम्। प्राकृतपुरुषसंवादि शबरवेषत्वम्' इति चिन्तयता कुमारेण भणितम्। 'एणिके, किं पुनरेतत्।' तयोक्तम्। 'कुमार, सर्वदैवात्र वने परिभ्रमदिदं पश्यामि, परमार्थवृत्त्या न जाने।' कुमारेण भणितम्। 'एणिके, इदं न शबरयुगलम्, किंतु कृतशबरवेषमेतन्मिथुनं न सामान्यम्।' एणिकया भणितम्। 'कथं लक्ष्यते'। कुमारेण जल्पितम्। 'सामुद्रिकलक्षणैः'। तयोक्तम् 'किं सामुद्रिकशास्त्रं कुमारस्य परिचितम्। एतत्प्राप्तशबरवेषं युगलं तावत्तिष्ठतु, प्रथमं पुरुषलक्षणं निवेदय।' कुमारेण जल्पितम्। 'किं विस्तरतः कथयामि, किं वा संक्षेपतः।' तया भणितम्। 'क्वापि विस्तरतः क्वापि संक्षेपतश्च।' कुमारेणोक्तम्। 'विस्तरतो लक्षप्रमाणं संक्षेपतः परिक्षीयमाणं यावत्सहस्रं शतं श्लोकानां च।' ततस्त्वं पूर्वं किंचिद्विस्तरतः शृणु। यथा।

'पद्मवज्राङ्कुशच्छत्रशङ्खमत्स्यादयस्तले। पाणिपादेषु दृश्यन्ते यस्यासौ श्रीपतिः पुमान् ॥ ३४५
उन्नताः पृथुलास्ताम्राः स्निग्धा दर्पणसंनिभाः। नखा भवन्ति धन्यानां धनहेतुसुखप्रदाः ॥ ३४६
सितैः श्रमणता ज्ञेया रूप्यपुष्पितिकैः पुनः। जायते किल दुःशीलो नखैर्लोके ऽत्र मानवः ॥ ३४७
शुद्धाः समाः शिखरिणो दन्ताः स्निग्धा घनाः शुभाः। विपरीताः पुनर्ज्ञेया नराणां दुःखहेतवः ॥ ३४८

2) P om. विद्याधराभ्यां. 8) B trans. च after कृता (written on the margin). 9) B भुक्त्वा for भुङ्क्ष्व. 10) B °कृत्यमाचर, विषमा [विषया]श्चपलाः पञ्चापि विषय (इन्द्रिय) ताक्ष्याः. 20) P मनः B नमः for मम. 21) P मनोभव B मनोभवं. 24) P B om. एकदा, P B श्यामलच्छाकायं. 25) P B मिथुनकमेकमाजगाम. 27) B धनुर्द्धरिण्यां, B शबरवेषकौतुका°. 30) B om. किं पुनरेतत् etc.......भणितम् एणिके. 31) P कुमारेणोक्तं for कुमारेण भणितम्. 39) P B धनहेतुः 40) P रूक्ष° B रूष्य° for रूप्य on which B has a marginal gloss thus: कपर्दिकाकारपुष्पकसहितैः।, C has a marginal note: रूप्यशब्दस्य सुवर्णवाचकत्वादत्र पीतवर्णत्वं ग्राह्यम्।.

द्वात्रिंशद्दशनो राजा भोगी स्यादेकहीनतः । त्रिंशता मध्यमो ज्ञेयस्ततो ऽधस्तान्न सुन्दरः ॥ ३४९
स्तोकदन्ता अतिदन्ता ये नरा गर्भदन्तजाः । मूषकैः समदन्ताश्च ते च पापाः प्रकीर्तिताः ॥ ३५०
अङ्गुष्ठयवैराढ्याः सुतवन्तो ऽङ्गुष्ठमूलजैश्च यवैः । ऊर्ध्वाकारा रेखा पाणितले भवति धनहेतुः ॥ ३५१
वामावर्तो भवेद्यस्य वामायां दिशि मस्तके । निर्लक्षणः क्षुधाक्षामो भिक्षामटति रुक्षिकाम् ॥ ३५२
दक्षिणो दक्षिणे भागे यस्यावर्तस्तु मस्तके । तस्य नित्यं प्रजायेत कमला करवर्तिनी ॥ ३५३
यदि स्याद्दक्षिणे वामो दक्षिणो वामपार्श्वके । पश्चात्काले भवेत्तस्य भोगो नास्त्यत्र संशयः ॥ ३५४
संक्षेपतस्तु श्लोकेनैकेनाकर्णितव्यम् ।

गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः । स्वराद्धन्यतरं सत्त्वं सर्वं सत्त्वे प्रतिष्ठितम् ॥ ३५५

§ ४५ ) इति श्रुत्वा तया भणितम् । रम्यमेतत्, परं किं त्वयामुष्य शबरस्य सुलक्षणं ज्ञातम् ।' तेनोक्तम् । 'एणिके, यानि मयोक्तानि तानि सर्वाण्यप्यस्य पुरुषस्य तनौ शुभानि लक्षणानि दृश्यन्ते । तज्जाने को ऽप्येष महासत्त्वः केनापि हेतुनायं कृतशबरवेषः प्रच्छादितस्वाभाविकरूपो विन्ध्यगिरिवनान्तः स्थितः ।' एतदाकर्ण्य शबरेण चिन्तितम् । 'अहो, पुरुषलक्षणपरिज्ञानदक्षिणः पुमानयम् । तावन्न युक्तमत्र स्थातुं किन्त्वपसरणमेव श्रेष्ठम्, यावदस्मानेष न जानाति' [ इति ] । ततो ऽभ्युत्थाय शबरः शबरी च स्वस्थानं जग्मतुः । एणिकया भणितम् । 'कुमार, तव महती दक्षता यदेष प्राप्तशबरवेषो ऽप्युपलक्षितः ।' तेनोक्तम् । 'प्रथममेव परिज्ञातः । पुनर्विशेषतो ज्ञातुमिच्छामि स्फुटं प्रकटय ।' भणितमेणिकया । 'कुमार, विद्याधरावेतौ ।' तेनोक्तम् 'तर्हि कथमेतद्वेषधारिणौ ।' तयोक्तम् । 'एतयोर्विद्याधरयोर्भवानपि परिज्ञाता । भगवतः प्रथमतीर्थनाथस्य सेवाहेवाकिनोर्नमिविनम्योर्धरणेन्द्रेण बह्वयो विद्या दत्ताः । कियत्यो विद्याः कयापि रीत्या साध्यन्ते । सर्वासामपि पृथक् पृथक् साधनोपायः ।

काश्चित्पानीयमध्ये ऽमूः काश्चित् पर्वतमस्तके ।
काश्चित् श्मशानमेदिन्यां विद्याः साध्या जितेन्द्रियैः ॥ ३५६

ततः कुमार, एतावनेन वन्येन वेषेण शाबरीं विद्यां साधयन्तौ तिष्ठतः । तथैष विद्याधरः सपत्नीको वनान्तः स्वेच्छया परिभ्रमन्नस्ति ।' कुमारेणोक्तम् । 'कथं त्वं पुनर्जानासि, यथैष विद्याधरः ।' तया भणितम् । 'न जानामि' [ किंतु ] मयैकदा कीरमुखतः श्रुतमेतत् । एकस्मिन् दिने स्वीकृतदुरितौषधपौषधाहं भगवतो नाभिभवस्य पूजार्थं फलपत्रकुसुमानां ग्रहणाय वनान्तरं न गता, कीरः पुनर्गतः । स च मध्याह्नसमये व्यतिक्रान्ते समायातः सन् मया पृष्टः 'अद्य कथमेतावतीं वेलामतिक्रम्य भवान् समायातः' । तेन निगदितम् । 'अद्य त्वं वञ्चितासि, यल्लोचनानामाश्चर्यभूतं न किमपि दृष्टिपथमवतीर्णं ते, यतो द्रष्टव्यफलानि हि लोचनानि ।' ततो मयोक्तम् । 'राजकीर, त्वं कथय किं तदाश्चर्यम् ।'

§ ४६ ) ततस्तेन ममाग्रे निगदितम् । 'यथाद्याहं वनान्तर्गतः । तत्र च सहसा शङ्खतूर्यभेरीमृदङ्गभवो महान्निनदः श्रुतः । ततो मया सहर्षोद्भ्रान्तचेतसा कर्णः प्रदत्तः । कतरस्यां दिशि ध्वनिविशेषः । ततस्तदनुसारेण यावद्गच्छामि तावद्भगवतो नाभिसूनोः प्रतिमायाः पुरो दिव्यं नरनारीजनं प्रणाममादधानं, तथाहार्यं वाचिकमाङ्गिकं सात्त्विकं चेति चतुर्विधमभिनयं वितन्वन्तं विलोक्य मया चिन्तितम् । 'एते न तावद्देवा अवश्यम्, यतो मयैकदा भगवतः केवलिनः केवलमहिमायै समेतानां देवानां चरणा भूमितले न लगन्ति, लोचनान्यनिमिषाणि चैतद्दृष्टमासीत् । एतेषां पुनश्चरणा महीपृष्ठे लग्ना लक्ष्यन्ते, सनिमिषाणि नयनानि च । तेन जाने नैते त्रिदशाः, अतिसश्रीकतया न मानुषा अपि, किंतु गगनाङ्गणचारिणो विद्याधरा इमे । 'तावत्पृच्छामि किमेतैः प्रारब्धम्' इति चिन्तयंश्चूतपादपाधः क्षणं निषण्णः । अत्रान्तरे यथास्थानमासीना विद्याधरनरा विद्याधर्यश्च । ततस्तेषामन्तःस्थितेनैकेन विद्याधरतरुणेनानेकरत्ननिर्मितो विमलदिव्यजलपूर्णकलशो जगृहे, तादृश एव द्वितीयो विद्याधरीणां मध्ये ऽत्यन्तरूपशोभया विद्याधर्यैकया च । ताभ्यां प्रमुदितचित्ताभ्यां भगवतः श्रीयुगादिभर्तुः स्नात्रं विधाय सुमनोभिः पञ्चवर्णैर्जलस्थलभवैरर्चा रचयांचक्रे । ततस्तौ स्तुत्वा भगवन्तं धरणेन्द्रस्य नागभूपतेराराधनाविधौ कायोत्सर्गमेकं द्वितीयं तदग्रमहिष्यास्तृतीयं शाबरविद्यया विरचय्य शरीराद्विभूषणान्युत्तार्य

4 ) B रूक्षिकां. 6 ) P स्याद्दक्षिणो वामपार्श्वके, B originally स्याद्दक्षिणे वामो दक्षिणो वामपार्श्वके, but it is improved thus ( with some marginal addition : स्याद्दक्षिणे वा मस्तके वा वामपार्श्वके ।. 8 ) B inter. सर्वं & सत्त्वे. 19 ) P अंब for अमूः, P C om. काश्चित् पर्वतमस्तके. 21 ) P B om. वन्येन. 23 ) P B om. [ किंतु ], P B °पौषधा भगवतो. 24 ) B adds गता before फलपत्र°, B om. न गता, B om. स च. 26 ) P B om. ते. 32 ) B केवलिमहिमायै. 35 ) P om. इमे. 36 ) B °नरवरा for °नरा. 40 ) B शाबरविद्याया.

1 च शबरवेषमङ्गीचक्रतुः । तयोर्महाधिराजेन शबरेण महाशाबरी विद्या न्यवेदि । ताभ्यां मौनव्रतं प्रतिपद्य सद्यः श्रीभगवान्नाभिभवो गुरुवर्गः साधर्मिकलोकश्च ववन्दे । विद्याधराणां मध्ये कृताञ्जलिनैकेन विद्या-
3 धरेणोक्तम् । 'भो लोकपाला विद्याधराश्च श्रूयताम् । पूर्वं शबरशीलो विद्याधरशेखरः सर्वसिद्धशाबर-विद्याकोशः सप्रभावश्चिरं राज्यं परिपाल्य समुत्पन्नवैराग्यरञ्जितः प्रतिपन्नश्रीजिनधर्मः सर्वसंगं परि-त्यज्यात्रैव गिरिकुहरे स्थितः । तस्य पुत्रेण शबरसेनापतिना पितृभक्त्यात्रैव स्फाटिकमयी भगवत्प्रतिमा
6 निवेशिता, तदाप्रभृत्येतद्विद्यासिद्धक्षेत्रम् । ततो ऽमुष्य प्राप्तशबरवेषस्य भगवन्नाभिभवप्रभावतो धरणे-न्द्रस्याभिधानेन चैषा निष्प्रत्यूहं सिद्धिमेतु । ततः सर्वे ऽपि विद्याधरा 'अस्य शीघ्रं विद्या सिध्यतु' इति प्रोच्य तमालदलश्यामलं गगनतलमुत्पेतुः । ततस्तौ द्वावप्यङ्गीकृतशबरवेषौ तत्रैव तिष्ठतः । ततः कुमार
9 एतेन कीरकथनेन जाने कृतशबरवेषौ विद्याधराविमौ ।' इत्याकर्ण्य कुमारेणोक्तम् । 'एणिके, तन्ममैकं वचः कर्णकटुकं श्रूयताम् ' तयोक्तम् । 'ममादेशं देहि ।' कुमारेण जल्पितम् । 'अत्रागतस्य मम कालक्षेपः समजनि, स्वस्ति भवतु भवत्यै, मया पुनरवश्यं दक्षिणापथे गन्तव्यम् ।' एणिकया भणितम् । 'कुमार,
12 सत्यमेतद्यत्कदापि प्राघूर्णकैर्ग्रामा न वसन्ति । पुनर्निजवृत्तान्तनिवेदनप्रसादेन मम मनःप्रमोदो विधीय-ताम् । ततः कुमारेण मूलादारभ्य वनप्रदेशं यावच्चरितं निजं निगदितम् । एणिकयोक्तम् । 'कुमार, त्वद्वियोगेन जनकजनन्यौ विविधाबाधाभाजनं भविष्यतः, अतो यदि भवते रोचते तदा तव कायकौशल-
15 कथनार्थं कीरं प्रेषयामि ।' 'एतद्भवतु' इति प्रोच्य समुत्थाय कुमारश्चचाल । ततस्तत्संगतिविरहजात-मन्युभरसंभूतबाष्पजललवप्रतिरुद्धनयनालोकप्रचारा एणिका कीरेण समं कियतीं भुवमनुगम्य कुमार-मापृच्छ्य व्यावर्तत । कुमारो ऽपि क्रमेण क्रामन् विन्ध्याटवीं सह्यगिरिं निकषा कस्यचित्सरसस्तीरे
18 सार्थमेकमावासितं समीक्ष्य पुरुषमेकं पप्रच्छ । 'भद्र, निवेदय कुतः सार्थः समागतः, कुत्र वा गमी ।' तेनोक्तम् । 'विन्ध्यपुरादायातः, काञ्चीपुरीं गमिष्यति ।' कुमारेण भणितम् । 'विजयापुरी कियद्दूरे, इति जानासि त्वम् ।' तेनोक्तम् । 'देव, दूरे विजयापुरी परं दक्षिणमकराकरतीरस्था भवतीति श्रूयते ।'
21 कुमारेण चिन्तितम् । 'सार्थेनैतेन समं मम गमनं कमनीयम् ।' ततः कुमारः सार्थपतिं वैश्रवणदत्ता-भिधमुपगम्य बभाषे । 'हे सार्थपते, त्वया सह समेष्यामि ।' तेनोक्तम् । 'भवत्विति महाननुग्रहः कृतः ।' ततः सार्थपतिना प्रयाणकं चक्रे ।

24 § ४७ ) अत्रान्तरे सहस्रकरः पश्चिमाचलचूलामाललम्बे । सर्वत्र तमःप्रसरः प्रससार । ततः कस्मिंश्चित्प्रदेशे स सार्थ आवासं रचयांचक्रे । ततो भवितव्यतया संनद्धैर्भिल्लैः समाकृष्टनिष्कृपकृपाणैरा-रोपितचापदण्डैः 'गृहाण गृहाण' इति वदद्भिः सार्थः सकलो ऽपि लुण्टितः । तदसमञ्जसमालोक्य लोकः
27 पलायनं चकार । इतश्च सार्थपतिदुहिता धनवती प्रनष्टे परिजने व्यापादिते पादातिकजने पलायिते सार्थपतौ किरातैर्गृह्यमाणा भयभ्रान्तलोचना निःश्वासधोरणीं मुञ्चमाना वेपमानपीनपयोधराशरणा 'शरणं शरणम्' इति प्रार्थयमाना कुमारकुवलयचन्द्रमुपससर्प ।

30 ततस्तयोचे 'शौर्येण दृश्यसे सिंहसंनिभः । रक्ष भिल्लजनत्रस्तामस्ताशङ्क त्वमद्य माम् ॥' ३५७
तेनोदितं 'भयभ्रान्तलोचने चारुलोचने । मा तनु स्वतनुत्यागादपि त्रातास्मि ते ऽधुना ॥' ३५८

इति प्रोच्य,

33 कुतो ऽपि भिल्लादाच्छिद्य सशरं स शरासनम् । शरैर्वर्षितुमारेभे धाराभिरिव वारिदः ॥ ३५९
जर्जरं तत्प्रहारौघैर्बलं नष्टं दिशोदिशि । वीक्ष्य पल्लीपतिर्योद्धुमुद्धतः समुपस्थितः ॥ ३६०
निशातशरधोरण्या तदा ताभ्यां परस्परम् । अकालवृष्टिर्विहिता कालरात्रिरिवापरा ॥ ३६१

36 § ४८ ) ततः कुमारेण रोषारुणेक्षणेन स्तम्भनमन्त्रः प्रयुक्तः । भिल्लेशेनापि कुमारे स एव मन्त्रः प्रयुक्तः, परं तेन कुमारस्य न किमपि जातम् । ततो भिल्लपतिना चिन्तितम् । 'अहो, को ऽप्येष महा-सत्त्वः सर्वकलासु कुशलो मया हन्तुं न शक्यते, किंतु प्रत्युतामुष्य हस्ततो मया मृत्युः प्राप्यः, तदलं
39 संप्रहारेण, सर्वसंगपरित्याग एव मम श्रेयान् संप्रति' इति चिन्तयन् भिल्लस्वामी रणधरण्या हस्तशतम-पसृत्य करालं करवालमुत्सृज्य प्रलम्बमानभुजपरिघः परित्यक्तदुष्प्रणिधानः स्वीकृतसाकारनियमः पञ्च-नमस्कारं समुच्चरन् समशत्रुमित्रः कायोत्सर्गमङ्गीचकार । तादृशवृत्तं वीक्ष्य पञ्चनमस्कारवचः श्रुत्वा

---

1 ) B महाशाबरविद्या. 8 ) B कृतशाबरवेषैा. 12 ) B प्राघूर्णिकैं°. 13 ) P om. वन, B om. निजं. 16 ) B कियंतीं. 21 ) C om. मम. 22 ) B om. हे. 31 ) B धुनु for तनु. 32 ) B om. इति प्रोच्य. 41 ) B पंचनमस्कारमुच्चरन्.

सहसा संभ्रान्तः कुवलयचन्द्रः 'साधर्मिको ऽयम्' इति तत्समीपमुपागत्य प्रोवाच । 'किं त्वया सहसा साहसमनीदृशं प्रारब्धम्, मुञ्च कायोत्सर्गम् । ममापि पूर्वकृतपापस्यापराधं सहस्व ।' ततः पल्लीपतिना चिन्तितम् । 'यदसावपि साधर्मिकस्ततो मम मिथ्यादुष्कृतं दातुमुचितम् ।' इति चिन्तयन् कायोत्सर्गं प्रोज्झ्य कुमाराय वन्दनकं विदधे, कुमारेणापि तस्य च । एवं तौ परस्परं दर्शितधर्मरागौ प्रीतिस्यूतचेतसौ प्रसरद्बाष्पबिन्दुदृष्टी बभूवतुः । कुमारेणोक्तम् । 'यद्येतत्कथमेतत्, अथैतत्किमपरेण ।' एतदाकर्ण्य भिल्लपतिरूचे । सर्वमपि जाने परं दुष्टैः कर्मवैरिभिर्लोभपरवशः कृतः, परं त्वत्संगत्या संप्रति तपोनियमध्यानयोगैरात्मानं साधयिष्ये ।' कुमारेणोक्तम् । 'न सामान्यं तव चरित्रम् । ततः कथय कोऽसि ।' स पल्लीपतिर्जगाद । 'नास्मि भिल्लाधिपः, एतत्तत्र विस्तरेण कथयिष्ये । सांप्रतं पुनः सार्थं भिल्लजनैर्लुण्ठ्यमानं निवारयामि ।' ततः पल्लीपतिना सार्थः सर्वो ऽपि भिल्लेभ्यो रक्षितः । भिल्लाः सर्वे पल्लीपतिभयतो दूरं नेशुः । यद्यस्य संबन्धि वस्तुगतमासीत् तत्तस्य पल्लीपतिरर्पयामास । भिल्लैः सार्थपतिर्नश्यन् धृत्वा सेनापतये ऽर्पितः । तेनोक्तं च । 'सार्थपते, मा भयं भज, निजं पण्यं गृहाण' इति वदन् सेनापतिरुत्थाय कुमारेण समं सह्यशिखरिशिखरसंश्रयां महापल्लीमाटिवान् ।

§ ४९ ) कुमारेण च पल्लीं नगरीसमानश्रियं तथा तन्मध्यस्थप्रासादं विशदं विलोक्य पृष्टम् । 'यदमुष्य संनिवेशस्य किमभिधानम् ।' तेनोक्तम् । 'एतस्याः पल्ल्याश्चिन्तामणिरित्याख्या ।' एवमन्यान्यप्रश्नपरः कुमारस्तेन समं राजमन्दिरमाससाद । ततो द्वावपि मणिमयेषु भद्रासनेषु संनिविष्टौ । ततश्च स्नानपीठमलंकृत्य विकसन्मालतीगन्धसनाथं लक्षपाकं तैलमुत्तमाङ्गे प्रक्षिप्य संवाहकैः कमलकोमलकरतलैः सुखेन संवाहितौ । ततस्तौ कोष्णैर्जलैरङ्गं प्रक्षाल्य शुचिभूय चन्द्रांशुनिचयव्यूते इव श्वेतवाससी परिधाय ततस्तदन्तर्वर्तिनि देवतायतने कनकमयकपाटसंपुटमुद्घाट्य शिवश्रियो द्वारमिव भगवतां जिनानां कनकरत्ननिर्मिताः प्रतिमाः समभ्यर्च्य जिनस्तुतिचतुर्विंशिकां परामृश्य प्रणिपत्य च भोजनमण्डपमुपाजग्मतुः । ततश्च यथासुखं भोजनं निर्माय स्वैरं परस्परं यावद्वार्तां कुर्वन्तौ तिष्ठतस्तावदकस्मात् प्रावृतसितधौतनिवसनो लोहदण्डव्यापृतकर एकः पुरुषः समागत्य सेनापतेः पुरोभूय इदं पपाठ ।

'जानास्यपारसंसारमसारं सागरोपमम् । वचश्च वेत्सि श्रीजैनं शिवशर्मैकदेशकम् ॥ ३६२
एतदध्यवसायात्तु विरतिं न करिष्यसि । अतस्त्वां लोहदण्डेन ताडयिष्यामि निष्कृपम् ॥' ३६३

इति वदता तेन सेनापतिरुत्तमाङ्गे मनाक् ताडितः । ततो महागारुडमन्त्राभिमन्त्रितसिद्धार्थप्रहतो भुजंगम इवाधोमुखः स्थितः सेनापतिरित्यचिन्तयत् । 'अहो, कौतुकं यदनेन निर्दयमनसा सुपुरुषस्येदृशस्य पश्यतो ऽहं प्रहतः कर्कशं भणितश्च । अथवा मम प्रमादिन एतेन रम्यमेव विरचितम् ।

जरामृत्युमहारोगदुःखतप्ता भ्रमन्ति हि । संसारघोरकान्तारप्रान्तरान्तस्तनूभृतः ॥ ३६४
तदन्तः को ऽपि यो भव्यः कर्मग्रन्थिं विभिद्य सः । सम्यक्त्वरत्नं दुष्प्रापममूल्यं स्वीकरोति च ॥ ३६५
तदेव फलकं प्राप्य भवाम्भोधौ प्रमाद्यति । यः शरीरी स सद्यः स्वं तनुते ऽतनुदुःखभूः ॥' ३६६

इति चिन्ताचान्तमनसं सेनापतिं बाष्पजललवप्लुतनयनयुगलं प्रमुक्तदीर्घनिःश्वासं दीनास्यं निरीक्ष्य कुमारः प्रोवाच । 'भद्र, कथय क एष वृत्तान्तः ।' ततो दीर्घं निःश्वस्य सेनापतिर्जजल्प । 'कुमार, श्रूयताम् ।

§ ५० ) लोकंपृणगुणग्रामाभिरामास्ति गतावमा । धरारामाललामश्रीः पुरी रत्नपुरी वरा ॥ ३६७
स्वःपुरीवोग्रधन्वाढ्या व्योमश्रीवत्समङ्गला । अलकावत्सधनदा या लङ्केव सदा वरा ॥ ३६८
वनावनीव सन्नेत्रा कलिता ललिताशना । सपुन्नागा सनारङ्गा श्रीफलैः सुमनोरमा ॥ ३६९
तत्र रत्नमुकुटाह्वः प्रह्वविश्वमहीपतिः । समस्ति पृथिवीपालः पालिताखिलभूतलः ॥ ३७०

तदङ्गजौ दर्पफलिको भुजफलिकश्च । एवं च तस्य राज्यं पालयत एकस्मिन्नमावास्यादिने प्रदोषे वासवेश्म प्रविष्टस्य किमपि चिन्तयतः प्रदीपे पतङ्ग एकः समागतः । राज्ञा प्रकृत्यनुकम्पितहृदा चिन्तितम् 'अयं वराको मर्तुकामस्तस्मादमुष्य परित्राणं करोमि' । इति चिन्तयता तेन करेण गृहीत्वा वारत्रयं कपाटविवरेण बहिः प्रक्षिप्तः । स पुनरपि दीपान्तिकमायातः । राज्ञा चिन्तितम् । 'उपायरक्षितो जन्तुः

---

5 ) B तदाकर्ण्य for एतदाकर्ण्य. 7 ) P C साम्यं तव. 8 ) P भिल्लाभिधः. 9 ) B सर्वेपि for सर्वे. 11 ) B om. च. 16 ) B °समानं for सनाथं. 21 ) C °निवसिनो. 22 ) P जानाम्यपारं B जानास्यपारं. 33 ) B has some marginal glosses on these verses: इंद्रास्त्रेन आढ्या, पक्षे उग्राणि धनूंषि येषां ते उग्रधन्वानो धनुर्धरास्तैराढ्या ॥ धनदा दानेश्वरास्तैः सहिताः ॥ दावं संतापं रांति यच्छंति दावरा राक्षसास्तैः सहिता पुरी सदावरा प्रधाना ॥ नेत्रैर्वृक्षविशेषैराकलिता संबद्धा, पुरी पक्षे सतां नेत्रा स्वामिना सहिता ॥ ललिता मनोहरा असना प्रियं[गु]वृक्षा यत्र, पुरी पक्षे ललितानि आसनानि यस्यां ॥ नारंगवृक्षसहिता पुरी सह नारंगैर्जन्निभिर्वर्त्तते स नारंगा ॥ बिल्वफलैः ।.

1 सुचिरं कालं जीवति'। इति ध्यात्वा प्रागुद्घाटिते समुद्गके राज्ञा पतङ्गं प्रक्षिप्य पिधानं च दत्त्वा स उपधाने 1
मुमुचे। अथ भूपतिर्निद्रासुखमवाप्य प्रगे समुद्गकं यावन्निरूपयति तावत्तत्र गृहोलिकामद्राक्षीत्। तेन
3 समुद्गकं च पतङ्गशून्यं निरीक्ष्य चिन्तितम्। 'यदसौ निश्चितं कुड्यमत्स्येन भक्षितः। नास्ति कुत्रापि मोक्षो 3
विहितस्य कर्मणः।

पूर्वजन्मार्जितं कर्म यावन्मात्रं शरीरिणा। शुभं वाप्यशुभं वापि तावन्मात्रमवाप्यते ॥ ३७१

6 इति महीपतेः सहसा वैराग्यमार्गजाङ्घिकस्य जातिस्मृत्या पूर्वभवः प्रकटीबभूव। 6

यथा पालितचारित्रः स्वर्गलोकं गतः पुरा। सुखं भुक्त्वा ततश्च्युत्वात्रैव भूपो भवं भुवि ॥ ३७२

§ ५१ ) अथ तस्य तत्रावसरे संनिहितया कयाचिद्देवतया रजोहरणवदनवस्त्रिकापात्रादिनवविधो-
9 पधिसमर्पणं चक्रे। ततः स राजर्षिर्यावत्कचांल्लुञ्चितुं प्रवृत्तस्तावद्विभाता विभावरी। पेठुर्मङ्गलपाठकाः। 9

'पूर्वमेष मुनेर्धर्मे जागरां प्रत्यपद्यत। ततो दिनमुखे चित्रं वयं सूर्यपरायणात् ॥ ३७३
उदयाचलचूलायामारुरोह दिवाकरः। पद्मालयेषु पद्मान्यवापन् भुवि विनिद्रताम् ॥ ३७४
12 प्रससार च सर्वत्र पत्रिकोलाहलो ऽतुलः। ववौ वायू रतोद्भूतश्रमबिन्दुततिं हरन् ॥ ३७५ 12
अन्धकारं करोति स्म क्लीबवत्प्रपलायनम्। अन्धकाररिपुक्रूरकराघातभयादिव ॥ ३७६
इन्दीवरं परित्यज्य षडंह्रिर्भजते ऽम्बुजम्। कुसेवक इवाश्रीकं सश्रीकं स्वामिनं नवम् ॥ ३७७
15 स्वरैर्निवेदयन्तीव पक्षिणो जगतो ऽप्यहो। श्रियः प्रयान्ति चायान्ति चित्रभानुनिदर्शनम् ॥ ३७८ 15
नभोलक्ष्मीरुदयिने सूर्याय ददते मुदा। तारापुष्पच्छलादर्घ्यं पाद्यं चेन्दुकराम्भसा ॥ ३७९
एवंविधे प्रभाते ऽत्र भूप मोहं परित्यज। केवलं परलोकस्य हितमर्थं समाचर ॥ ३८०

18 तच्च तादृशं स्तुतिव्रातं पठितं श्रुत्वा भगवान् महर्षिः कपाटसंपुटमुद्घाट्य वासवेश्मतो गिरिवरकन्दरा- 18
त्कण्ठीरव इव निर्गतः। कृतकेशलुञ्चनः पात्ररजोहृतिमुखवस्त्रिकोपशोभितकरतलः पूर्वमेव शय्यापालि-
काभिर्ददृशे। पूच्चक्रे चेति। 'भो भोः परिजनाः, एतैत त्वरितमस्माकं स्वामी कामपि विडम्बनां प्राप्तः
21 प्रयाति।' तदेवमाकर्ण्य ससंभ्रमवशास्खलन्नूपुररसनारवमुखरस्त्वरितमेवान्तःपुरपुरन्ध्रीजनो वाराङ्गना- 21
लोकः परिजनश्च तदा तत्रागतः प्रोवाचेति। 'नाथ, कथमस्मान्निरपराधांस्त्यक्त्वात्मानं विडम्ब्य प्रच-
लितः। अनाथास्त्वां विना वयम्।' एवमन्तःपुर्यादिजनस्य च विलपतोऽप्यदत्तसंलापो भगवान्
24 गन्तुमारेभे। 24

श्रुत्वा विलपनं तस्य प्रोचिवान् मन्त्रिपुङ्गवः। 'किमेतद्देव ते वृत्तं मुनिवेषसधर्मणः ॥' ३८१

§ ५२ ) एवं सचिवान्तःपुरीपरिजनेन पृष्ठलग्नेन समं भगवान् राजर्षिः पुरीबाह्योद्यानं संप्राप। तत्र
27 च त्रसस्थावरजन्तुविरहिते स्थाने प्रबोधाय प्रत्येकबुद्धः समुपाविशत्। ततो मन्त्रिवर्गो ऽन्तःपुरीजनश्च 27
निविष्टः। तौ च द्वावपि दर्पफलिकभुजफलिकावत्रस्तौ पितुः समीपमुपविष्टौ।

ततो बोधविधानाय भगवान् मुनिसत्तमः। पापाहिजाङ्गुलिविद्यां प्रारेभे धर्मदेशनाम् ॥ ३८२
30 भयावहभवापाराकूपारान्तः परिभ्रमन्। चिरान्नृद्वीपमाप्नोति बहित्रभ्रष्टवद्भवी ॥ ३८३ 30
सद्ध्वनि सदाध्वन्यभावं भजत देहिनः। विध्यन्ति चरणं येन न तीक्ष्णा दुःखकण्टकाः ॥ ३८४
एकैकस्मिन् सप्त लक्षा भूजलानलवायुषु। प्रत्येकानन्तभेदे च वने दश चतुर्दश ॥ ३८५
33 [ द्वे द्वे लक्षे समाख्याते प्रत्येकं विकलेन्द्रिये। देवतासु चतुर्लक्षी नारकेषु तथैव च ॥ ३८६ 33
तिर्यक्पञ्चेन्द्रियेष्वेवं मनुष्येषु चतुर्दश। ] लक्षाश्चतुरशीतिः स्युर्जीवानामिति योनयः ॥ ३८७
एतदुत्पत्तितो जीवा बहुशो दुःखभाजिनः। भवन्ति यावत् सम्यक्त्वं नाप्नुवन्ति शिवप्रदम् ॥ ३८८
36 प्रत्येकबुद्धो भगवान् देशनां क्लेशनाशिनीम्। अमायः स विनिर्माय विचचार धरातले ॥ ३८९ 36

§ ५३ ) तस्य राज्ञ [ आवा ] मुभौ पुत्रौ। अहं ज्येष्ठो दर्पफलिकनामा, अपरो भुजफलिकः। ततः
प्रभृत्यावां सम्यक्त्वमात्रश्रावकौ जातौ। तत्र मन्त्रिभिरयोध्यायामसत्पितृव्यस्य दृढवर्मणो भूपतेर्दूतप्रेषण-
39 पूर्वं तद्विज्ञापितम्। तेनेत्यादिष्टम्। 'यथा प्रथमसूनुर्दर्पफलिको राज्ये निवेश्य इति' तथैव राजलोकेन 39

5 ) शरीरिणां. 8 ) P has some blank space between वस्त्रिका & धोप°, B पात्रविधोपधि°, C वस्त्रिका [पात्रादिनव वि] धोप°. 10 ) B सूर्यपरायणाः. 11 ) P C पद्मालयानि. P has blank space between पद्मान्य and भुविनिद्रतां, C पद्मान्य-[नुवसुवु] विनिद्रताम्. 14 ) P om. सश्रीकं. 15 ) B °निदर्शनम्. 18 ) P स्तुतिव्रतपठितं, संपुटं समुद्घाट्य. 20 ) P ° विडंबनं. 21 ) P °खमुखरितमंतःपुरपुरंध्री°. 22 ) B परिजनस्य, P B तदागतः for तदा तत्रागतः. 27 ) P inter. स्थाने & प्रबोधाय. 28 ) B द्वावपि भुजफलिकदर्पफलिकौ तत्र पितुः. 33 ) P B om. द्वे द्वे etc. to चतुर्दश put in square brackets. 37 ) B adds, after the line ending with धरातले, a line like this: ततः सर्वोपि लोकोसौ स्वस्वस्थानकमाययौ, P B om. तस्य राज्ञ [आवा] मुभौ पुत्रौ। अहं. 38 ) P B write generally दृढधर्म, but now and then B reads दृढवर्म as well, P °दूतः पूर्वं.

प्रतिपन्नम्, परमेको मन्त्री तथैकश्चिकित्सक एका भुजफलिकजननी तद्वचो नामन्यन्त। ततस्त्रिभिरेकमत्यानपेक्ष्य परलोकमवगणय्य विमानं मम किमपि तदौषधमदायि, येन तदैव मम ग्रहिलत्वमुत्पेदे। अहं च कदाचिद्दिग्वासाः कदाचित्प्रावृताङ्गः कदाचिद्धूलीधवलितदेहः कदाचिद्गृहीतकरकर्परखण्डः सर्वत्र परिभ्रममाणो ऽत्र विन्ध्यगिरिशिखरिकुहरान्तराले क्षुधातृषाक्रान्तः पर्वतनदीषु सल्लकीहरीतकीतमालामलकदलफलप्राग्भारकषायितं तोयं वारत्रयं पीत्वा सर्वत्र दोषविप्रमुक्तः क्रमेण सावधानो ऽभवमिति। ततः स्वस्थचेतसा मया क्षुधार्तेन पुष्पफलेभ्यः स्पृहयालुनानेकभिल्लजनान्तस्थः प्रवररूपः पुरुष एको ददृशे। तेनाहमिमां पल्लीमानीतः। ततो वारवनिताजनेनावां स्नानं कारितौ। अथो देवतायतने मया तेन समं भगवान् जिनः प्रणतः। तथा भोजनमण्डपे यथारुचि आवाभ्यां भोजनं विदधे। ततः सुखासीनेन तेन जल्पितम्। 'भो भद्र, निवेदय केन हेतुनामुष्यामटव्यां निर्मानुषायां भवत्समागमः, कुतो जिनवचनप्राप्तिः' इति। मयोक्तम्। 'रत्नपुर्यां रत्नमुकुटनरेन्द्रस्य सूनुर्दर्पफलिकनामाहम्। स च मम पिता प्रत्येकबुद्धो ऽभवदिति। ततः स्वीकृतजिनधर्मो ऽहमपि कर्मवशत एतस्यां पल्ल्यामागतः।' तेनोक्तम्। 'यदि भवान् सोमवंशसंभवो रत्नमुकुटनरेन्द्रपुत्रस्ततः सुन्दरमजायत, यत आवयोरेक एव वंशः। ततस्त्वं राज्यं स्वीकुरु।' ततस्तेन पल्लीपतिना सर्वपल्लीपतिप्रत्यक्षं सिंहासने ऽहं निवेशितः। सर्वे ऽपि पल्लीपतयो भणिताः। 'यद्भवतामयमेव नरेश्वरः। अहं पुनर्यन्मनो ऽभिमतं तत्करिष्यामि' इति भणित्वा पल्लीपतिर्निर्गतः। तस्यानुगमनं विधाय सेवकाः पल्लीपतयो निवर्तिताः। अहं पुनः स्तोकमपि भूमिभागमग्रतो ऽगमम्। व्याघुटमानस्य मे तेन शिक्षा प्रदत्ता। 'यद् वत्स, जीववधो न विधेयः। भव्यरीत्या प्रजाः पालनीयाः। प्राणान्ते ऽप्यकृत्यं नाचरणीयम्। श्रीजिनधर्मे कदाचन न प्रमादः कार्यः' इत्युदित्वा पल्लीपतिः कुत्रापि गत इति न ज्ञायते। अहमिति मन्ये कस्यचिद्गुरोरन्तिके प्रव्रज्यामभ्युपपन्नः। तद्दिनादारभ्यात्र कुमार, न को ऽप्यसद्राज्ये ऽनीतिविधाता।

§ ५४ ) अहमपि पुनः कियता कालेन कर्मवशतो महामोहग्रस्तचित्तो विस्मृततत्सर्वशिक्षः सर्वान्यायपरः समभवमिति जर्जरितकलशप्रक्षिप्तपयोवज्जिनवचनरहस्यं सर्वमपि मम गलितम्। शिक्षाशेषापि दुर्जनप्रीतिरिव विलयं गता। अतो मयैष पुरुषो निर्देशितः, यल्लोभेनाहमीदृशीमवस्थामानीतस्त्वया लोहदण्डेनाहं स्मरणार्थं ताडनीयः। ततो ऽयमपि प्रतिदिनं मां लोहदण्डेन ताडयति।' ततः कुमारेणोक्तम्। 'अमुं वृत्तान्तमाकर्ण्य कस्य चेतो न चित्रीयते। महासत्त्वो रत्नमुकुटः प्रत्येकबुद्धो ऽजनि। दुर्लभो जिनप्रणीतः पन्थाः। दुर्जयो लोभपिशाचः। तद् भो महाशय, किं खेदमुद्वहसि, यन्मया तच्छिक्षा विस्मृता [इति] अनुशयवतस्तव साद्यापि तथैवास्ते, तस्मात्स्यजावद्यं किं तेन।' एवं कुमारेणोक्ते तेन जगदे। 'एवमेतन्न संदेहः, परं भवान् विज्ञानरूपकलाकलापविनयदाक्ष्यदाक्षिण्यमुख्यैर्गुणैर्ज्ञायते यथा महाकुलप्रसूतो महासाहसिकः। पुनरिदं न जाने यत्कुमारस्य कीदृक्कुलम्, किमभिधानं, तन्निवेदय।' कुमारेणोक्तम्। 'अयोध्यानायकस्य दृढवर्मणस्तव पितृव्यस्य पुत्रः को ऽप्यस्ति किं वा न। तेन दीर्घं निःश्वस्योक्तम्। 'कदाचिन्मया पथिकस्यैकस्य पार्श्वे श्रुतं, यथा दृढवर्मणो महीपतेर्लक्ष्मीप्रसादतः पुत्रप्राप्तिरभूत्। पुनर्न जाने पश्चात् किं तत्र वृत्तम्।' कुमारेण भणितम्। अहं स एव दृढवर्मनरेन्द्रस्य कमलाप्रसादलब्धः कुवलयचन्द्राभिधस्तनूजः।' एवं निशम्य तेनोक्तम्। अये, मम भ्राता भवान्' इति। ततो गलन्नयनयुगलजलबिन्दुर्दर्पफलिकः पप्रच्छ। 'कथय कथं कुमार, एवंविधे तपात्यये जलदजलधाराभिपूरितधरातले सर्वजनाल्हादविधायिनि राजहंसप्रवासदायिनि वियुक्तयौवनमनोवनावनीवनवह्नौ सकलकमलवनशमनशमने मुदितमत्तमयूरसमुच्चरितकेकारवे कलिकाल इव संचरद्भिरसनमण्डले कुभूपताविव प्रनष्टसन्मार्गे जंबालजालजटिलमार्गलग्नकण्टककोटिदुःसंचरे पयःपूरवाहेण पतितगर्ताशतसंकुले प्रचण्डपवनोच्छालिताभ्रंलिहलहरिदुरुत्तरगिरिसरिन्निकरे स्वं स्थानं विमुच्य क चलितो ऽसि।' कुमारेण सर्वमपि निवेदितम्। 'यत्पुनः संप्रति मया विजयापुर्यां कुवलयमाला प्रबोध्या' इति।

§ ५५ ) एवं दिनत्रयं तत्र प्रीत्या स्थित्वा कुमारेणोक्तम्। 'यदि तवादेशो भवति तदाहं व्रजामि' इति। नृपेण भणितम्। 'त्वयावश्यमेव गन्तव्यं यद्येवं ततो ऽहं त्वत्कार्यकौशलहेतवे विजयापुरीं यावत्स्वसैन्यकलितः समायामि, यतो भवानेकाकी मार्गपरिज्ञानानिपुणः।' कुमारेणोक्तम्। 'यतो ऽनुबद्धवैरा भवन्तः, स्तोकं बलम्, अतो भवतामागन्तुं नोचितम्' इत्याकर्ण्य तर्हि 'भवतु भवते स्वस्ति' इत्युदित्वा

2 ) C [विमाननां] for विमानं. 5 ) B क्रमेण समभवमति. 8 ) B यथारुच्या. 10 ) B om. इति. 16 ) P om. मे, B adds मम for it on the margin. 18 ) B °दारभ्य कुमार. 26 ) P B om. [इति]. 34 ) B राजहंसप्रदायिनि. 37 ) P om. क. 38 ) P B बोध्या for प्रबोध्या, B om. इति (this portion added on the margin).

1 पल्लीनृपतिः कुमारस्य दक्षिणापथं प्रचलतो ऽनुगन्तुं प्रवृत्तः। ततः कुमारं तरुणतरवनलतागुल्मान्तरि-
तमवगम्य भूमिपः सदनमागत्य माननीयान् संमान्यापृच्छ्य प्रकृतिजनं राज्यव्यवस्थां च कृत्वा दीनेभ्यो
3 दानं वितीर्यात्यन्तदुस्सहतद्विरहदहनदन्दह्यमानतनुना वारविलासिनीजनेन दीनवदनं विलोक्यमानो
व्रताय निःससार। कुमारो ऽपि क्रमेणानेकगिरिसरिन्महाटवीमुलङ्घयन्ननेकग्रामाकरपुरेषु कौतुकानि
प्रेक्षमाणो मकराकरतटस्थितां विजयापुरीमवाप।

6 सुजातयः कुलीनाश्च स्निग्धमुग्धालिसेविताः। सदारामा बहिश्चान्तर्यत्र सन्ति विराजिताः॥ ३९०
[......................................।] वापीतटमणिमयागारविद्योतिताम्भसि॥ ३९१
स्त्रीणां स्तनाधरेषु स्यात्करपीडनखण्डने। स्नेहहानिः प्रदीपेषु यदन्तर्न पुनर्जने॥ ३९२
9 उत्तुङ्गाः कुम्भिनः स्फूर्जद्भद्रजातिसमाश्रिताः। मर्त्याश्च यत्र विद्यन्ते भद्रजातिमनोहराः॥ ३९३
नरा विरेजिरे यत्र द्विधा विक्रमशालिनः। द्विधा सुवर्णसश्रीका कलाकेलिप्रिया द्विधा॥ ३९४
यत्र जन्यमजन्यं च जनानां न कदाचन। अतस्तु मार्गणः को ऽपि न वारे न च मन्दिरे॥ ३९५

12 § ५६) ततः कुमारस्तदुत्तरदिग्विभागे चरणचङ्क्रमणाक्षमः क्षणं विश्रम्य व्यचिन्तयदिति। 'एषा
सा विजयापुरी या साधुना निवेदिता, परं पुनः केनोपायेनात्र कुवलयमाला द्रष्टव्या' इति विचिन्त्य
कुमारः समुत्थाय नानाविधवर्णरत्नविन्यासोच्चचारुकाञ्चनघटितप्राकारवलयोपशोभमानविद्रुममयगो-
15 पुरकपाटसंपुटां पुरीं स यावत्कियद्भूभागं व्रजति स तावत्पयोहारिणीनामनेकशो वार्ताः शुश्रावेति।
कयाचिदुक्तम्। 'एषा कुवलयमाला कुमारिकैव क्षयं यास्यति न च को ऽपि परिणेष्यति।' अन्यया
भणितम्। 'विधिना विवाहरात्रिस्तस्या न विहिता, यतो नाम रूपयौवनविलाससौभाग्यगर्विता कुलरूप-
18 विभवलावण्यसंपूर्णानपि नरनाथपुत्रान्नेच्छति।' तथानेकदेशसमायातव्यवसायिनां विचित्रा भाषाः
शृण्वन् विपणिश्रेणिमार्गे वणिजां विविधानुल्लापानाकर्णयन् नागरवनिताधवलविमललोचनमालाभिरभ्य-
र्च्यमानः शिखण्डिपतत्रनिर्मितातपवारणशतसंकुलद्वारप्रदेशम् अनेकसेवकलोकानवरतयातायातपार्णिध-
21 मनिगमं रङ्गत्तुङ्गतुरङ्गनिष्ठुरखुरक्षुण्णक्षोणितलं बन्दिवृन्दपठ्यमाननृपगुणग्रामस्तुतिशतमुखरितदिगन्तरं
वैरिवारनिवारणवारणसंचरणकपोलपालिविगलद्दानजलजम्बालजटिलं विजयसेननरेश्वरस्य राजाङ्गणमा-
जगाम। तत्र च राजलोकं सर्वमपि चिन्तापरं करतलन्यस्तमुखकमलं विलोक्य कुमारेण को ऽपि राजपुरुष-
24 श्चिन्ताकारणं पृष्टः। तेनोक्तम्। 'भो महासत्त्व, नैषा दुःखचिन्ता, किन्त्वत्र भूपतिपुत्र्या कुवलयमालया
पुरुषद्वेषिण्या राजद्वारे पत्रे लिखित्वा गाथायाः पाद एको ऽवलम्बितो ऽस्ति। यः को ऽप्येनां
गाथां संपूर्णां करोति स मां परिणयति न कश्चिदन्यः। ततस्तां सर्वो ऽपि नृपतिलोकः स्वस्वमत्यनुसारेण
27 चिन्तयन्नास्ति।' कुमारेणोक्तम्। 'कीदृशः स पादः।' तेनोक्तम् 'एष ईदृशः'। यथा "पंच वि पउमे
विमाणम्मि।" कुमारेण भणितम्। 'यदि तावदेनां गाथां को ऽपि पूरयति ततस्तस्याः पूरितायाः
किमभिज्ञानम्।' तेनोक्तम्। 'सा चैव कुवलयमाला तदभिज्ञानाभिज्ञा। यतः पूर्वमेवैतया पादत्रयं गाथायाः
30 पत्रके लिखित्वा गोलके निक्षिप्य तदुपरि राजमुद्रां दत्त्वा कोशवेश्मनि निचिक्षिपे।' कुमारेण
चिन्तितम्। अहो, प्रकटीभूता मायादित्यस्य माया।'

§ ५७) अत्रान्तरे राजद्वारे जनस्य जलधिजलगम्भीरः कलकलो ऽभवत्। तत्र सर्वमपि लोकं
33 प्रलयकालवत्क्षुब्धहृदयं वीक्ष्य कुमारेण चिन्तितम्। 'क एषो ऽकाण्डोत्पातः' तत्सत्यमभूद्यत् 'शान्ति
कुर्वतां वेतालोत्थानम्' इति यावत्कुमारो निरूपयति तावज्जयवारणवारणः प्रोन्मूलितालानस्तम्भश्छेदि-
तनिबिडनिगडः प्रोद्यन्मददुर्दमः संमुखमायातः।

36 शिलोच्चय इव प्रोच्चैः सतः प्रालेयशैलवत्। कम्पाङ्कमपि वेगेन यो जिगाय मतङ्गजः॥ ३९६

4) B °टवीर्गमुलंघ°. 6) P leaves blank space विराजिताः and नयागार°, B विराजिताः। वापीतटमणि (णौ ?) मयागारविद्योतितांभसि, C leaves blank space between विराजिताः and नयागार (standing for मयागार of the text). On these verses B has some marginal glosses: यस्यां नगर्यां सत्प्रधाना आरामा बहिर्भागे तथांऽतर्मध्ये सदा रामाः स्त्रियः संति। सुमालतीसहिता पक्षे सुगोत्रा॥ ऽलिभिः भ्रमरैः सखीभिः सेविताः॥ शकुनैः विशेषेण राजिताः शोभिताः। मंदो भद्रो मृगो मिश्रश्चतस्रो गजजातयः॥ प्रधानपराक्रमेण शालिनः। विशिष्टः क्रमो विक्रमः सदाचारस्तेन शालिनः॥ कांचनवत्सश्रीकाः यशसा च॥ कलानां गीतनृत्यादीनां या केलिर्विलासः तया वल्लभाः अथवा स्मरवन्मनोहराः॥ विरोधभंग इत्थं। जन्यं संग्रामः। ऽजन्यमुत्पात [:]यत्र नास्तीत्यर्थः। तत्कारणात् मार्गणो बाणो याचको वा न कस्यापि द्वारे न कस्यापि मंदिरे कः परामर्षः संग्रामाभावात् बाणो न। ईतेरभावात् याचको न॥. 20) P शतसंकुलद्वारं, B °नवरतयापा°. 22) P °द्दानजंबाल°. 29) B om. तेनोक्तम्. 34) B om. इति.

तं तादृशं कुपितं साक्षात्कृतान्तमिवायान्तं राजा कुवलयमालया समं विलोकितुं शिरोगृहमारुरोह। कुमारस्य च पुरो गजं सविध एव वीक्ष्य नृपतिना समादेशितम्। 'भो भद्र, सत्वरमपसर यतस्त्वं बालः।' इति नृपवचो निशम्य रोषारुणलोचनः कुमारः सहसा भूयसा तेजसा ज्वलन् जयकुञ्जरं वशीकृत्य दशनयोः पदद्वयं दत्त्वा कुम्भस्थलमलंचकार। तत्रस्थेन तेन पठितम्।

'कोसंबिधम्मनंदणमूले दिक्खा तवं च काऊण। कयसंकेया जाया पंच वि पउमे विमाणम्मि॥'

तदाकर्ण्य पूरितेयममुना 'समस्या' इति वदन्त्या कुवलयमालया मकरन्दगन्धलुब्धागतालिमालारवमुखरितासितकुसुमवरमाला कुमारस्य योग्या प्रेषिता। तेन च कण्ठकन्दले समारोपिता। रोमाञ्चकवचितेन नृपेणोक्तम्। 'वत्से कुवलयमाले, साधु साधु वृतम्।' तावत्तत्र पूरितायां समस्यायां राजलोकेन जयजयारावश्चक्रे। अहो, मनुजो ऽपि को ऽप्येष दिव्यप्रभावः। ततश्च,

तदुपरि परितः सुरैरदृश्यैः सुरपथतो मुमुचे प्रसूनवृष्टिः।
असमगुणगणप्रमोदपूर्णैर्भवति हि भाग्यभृतां किमूनमत्र॥ ३९७

§ ५८ ) अथ पूर्वोदितो दृढवर्मराजप्रतिपन्नसूनुर्मालवराजपुत्रो महेन्द्रकुमारः सहसागत्य जयकुञ्जरकरिणो ऽन्तिके प्रोवाचेति। 'श्रीदृढवर्मनरेन्द्रनन्दन शशिवंशमुक्ताफल कलाकुलगृह दानशौण्ड प्रणतजनवत्सल कुमार कुवलयचन्द्र, जय जय' इति। ततः कुमारः समुपलक्ष्य महेन्द्रकुमारं ज्येष्ठं सहोदरमिव मन्यमानः प्रीतिप्रमुदितमना जयकुञ्जरगजवरस्कन्धमारोप्य पितुर्देव्याश्च कुशलं पप्रच्छ। भवानपि कुशलशाली। अथ नृपस्तत्रागतः प्रोचे 'अहो, कियन्ति चित्राणि।

एकं तावदसौ सुरूपसुभगः कुम्भी द्वितीयं वशीचक्रे दिव्यसुमप्रकामपतनं व्योम्नस्तृतीयं तथा।
तुर्यं यत्पदपूरणं स्वदुहितुः प्रीतिः पुनः पञ्चमं षष्ठं श्रीदृढवर्मजो निखिलमप्येतच्चमत्कारि मे॥ ३९८

यत्प्राप्यं तत्प्राप्तमेव वत्सया कुवलयमालया अस्य पुरुषसिंहस्य प्राप्त्या। पुत्रि, त्वया कृत्रिममेव पुरुषद्वेषित्वं प्रकटीचक्रे। 'इयं परिणेष्यति' इति जैनवचनमपि तथ्यमासीत्। वत्स, त्वं कुञ्जरं समर्पय गजराजारोहकाणाम्। त्वं च सौधमध्यमागच्छ।' इत्याकर्ण्य कुमारो महेन्द्रकुमारेण कुमारेण समं मध्ये गत्वा सिंहासनस्थं नृपं नत्वा यथोचितासने निषसाद। ततः पितुरादेशेन कुवलयमाला कुमारं सस्नेहया दृशा पश्यन्ती शुद्धान्तमध्ये गतवती। राज्ञादिष्टम्। 'वत्स, कथ्यतां कथं भवानेकाकी कार्पटिकवेषधारी दूरदेशान्तरमायातः।' कुमारेण प्रोचे। 'देव एव जानाति। परमदैव कर्मवशतः परिभ्रमन्नत्र समायातः।' राज्ञोक्तम्। 'महेन्द्रकुमार, सैष दृढवर्मतनुजो यस्यात्रागमनं त्वयास्माकं पार्श्वे पृष्टम्।' ततः सविनयं महेन्द्रेण विज्ञप्तम्। 'देव, सत्यमेवैतत्।' कुवलयचन्द्रेण बभाषे। 'भवतः कुतः समागमः।' महेन्द्रेणोक्तम्। 'देव, श्रूयताम्। तदा भवान् वाहकेलिप्रवृत्तः समुद्रकल्लोलवाजिनापजह्रे।

पश्यतो राजलोकस्य समुत्पत्य नभस्तलम्। तुरङ्गमः क्षणेनैवादृश्यमार्गमुपागतः॥ ३९९

§ ५९ ) ततो नृपतिना सेवकलोकेन सार्कं त्वत्पृष्ठतो ऽतिदूरं गतेनापि कापि भवतः प्रवृत्तिर्न श्रुता। तत्रस्थपुरप्रदेशे तुरङ्गः पवनावर्तः पतितो मृतश्च।

राजापि त्वद्वियोगेन पवनावर्तमृत्युतः। अत्यन्तं दुःखितः क्षिप्रं मूर्छितः पतितः क्षितौ॥ ४००
अस्माभिः कदलीपत्रवातैराश्वासितो नृपः। विपाकं कर्मणो जानन्नपि व्यलपदज्ञवत्॥ ४०१
'कुमार विक्रमाधार स्फाराकार गुणाकर। अनाथं मां परित्यज्य गतस्त्वं केन कर्मणा॥' ४०२

एवं बहुधा विलपन् मन्त्रिजनेन नृपतिर्बोधित इति। यथा 'पूर्वं सगरचक्रवर्तिनः षष्टिसहस्रसिताः पुत्रा ज्वलनप्रभजातकोपविसर्पद्विषज्वलनज्वालावलीभिः क्षणमात्रेणापि भस्मसात्कृताः परं तेनापि चेतसि शोकस्य नावकाशो ऽदायि। तन्नाथ, कुमारः केनापि देवेनापहृतो ऽस्ति, तस्यावश्यं प्रवृत्तिरेष्यति। ततो देव, कातरत्वमुत्सृज्य सर्वथा धीरमार्गमवलम्बस्व' इति। ततो व्यावृत्य तत्प्रतिबोधितः क्षितिपतिः प्रासादमासदत्।

प्रवासो यद्दिनादेव कुमार भवतो ऽभवत्। तदैव यौगपद्येन सौख्यस्यापि वपुष्मताम्॥ ४०३
त्वद्वियोगे महादुःखाज्जनन्यापि निरन्तरम्। गलन्नेत्रजलैर्भूमिर्निर्ममे पङ्किलाखिला॥ ४०४
त्वद्दुस्सहवियोगाग्निज्वलज्ज्वालाभयादिव। प्रपलायितुमिच्छन्ति प्राणा देवानुजीविनाम्॥ ४०५

---

1 ) °मिवायातं. 2 ) C om. च. 7 ) P om. कण्ठ. 20 ) B परिणेष्यते, B inter. कुञ्जरं & समर्पय, B गजराजमारोहकारणं सौध°. 21 ) P B om. कुमारेण, B °मध्यं. 28 ) C नभःस्थलं. 30 ) B ततः स्वपुरप्रदेशे. 40 ) P त्वद्वियोगे महादुखादरोदीन्नगरीजनः– some lines are skipped over through haplographieal mistake, the copyist's eye being led astray by a similar word.

अनुभूतं न केनापि दुःखं देव त्वया सह । अकृतज्ञानिव ज्ञात्वा प्रतस्थे श्रीः शरीरिणाम् ॥ ४०६
तथा कथंचित्त्वद्दुःखाद्रोदीन्नगरीजनः । अपि स्तनन्धया येन स्तन्यपाने निराद्राः ॥ ४०७
यं विना क्षणमात्रं न स्थीयते बालकैरपि । आहारस्तत्यजे तैः स त्वद्वियोगातिदुःखितैः ॥ ४०८
सारिकाशुकशिष्यारिपक्षिभिर्भुक्तिरुज्झिता । त्वद्दुस्सहवियोगार्तैरपरेषां तु का कथा ॥ ४०९
सजीवमपि निर्जीवं सचैतन्यमपि स्फुटम् । चैतन्यरहितं चक्रे त्वद्वियोगः पुरीजनम् ॥ ४१०
स प्रदेशो न को ऽप्यस्ति यत्र त्वं न गवेषितः । पुरुषैः पौरुषाधीनैर्न लेभे किंवदन्त्यपि ॥ ४११
राजापि त्वद्वियोगेन जातः कान्त्या भृशं कृशः । भीष्मग्रीष्मनियोगेन साकार इव वारिणा ॥ ४१२

§ ६० ) ततः कुमार, एवंविधे काले कियत्यपि व्यतीते प्रतीहार्या विज्ञप्तम् । 'यद्देव, कीर एको भवद्दर्शनाभिलाषी ।' राज्ञोक्तम् । 'कथं कीरो ऽपि तत्प्रवृत्त्यभिज्ञः ।' ततो राजादेशेन प्रतीहार्या समं शुकः क्ष्मापतिपदान्तिके समागत्य विज्ञापयामास । 'देव अवधारय, कुमारः कुवलयचन्द्रः कुशलशाली ।' ततो नृपतिः कीरं निजतनूजमिव क्रोडमारोप्य जगाद । 'वत्स, कुमारनिर्विशेषदर्शनो भवान् । कुत्र त्वया दृष्टः, कियत्कालान्तरं कुमारस्य दृष्टस्य समजनिष्ट ।' ततः कीरेण तेन स्पष्टाक्षरं संदेशहारकेणेव 'हयापहारादारभ्य कुवलयमालालंकृतविजयापुरीगमनान्तस्तव वृत्तान्तो भूपस्य पुरो न्यवेदि ।'

इत्याकर्ण्य महीपतिः परिलसद्रोमाञ्चवर्माञ्चितः
प्रोल्लासिप्रमदाब्धिमध्यपतितं स्वं मन्यमानस्ततः ।
प्रोचे हास्तिकराजकाश्वनिवहैः प्रीतस्तथा नो यथा
कीरोद्गीर्णतनूजकायकुशलश्रुत्या तया संप्रति ॥ ४१३

ततो लब्धस्वादुसहकारादिफलाहारप्रसादः शुको गतो निजमेव निवासवनं राज्ञा समादिष्टः, मां प्रति च प्रोचे । 'महेन्द्र, विजयापुरीं प्रति संप्रति गन्तुमिच्छामि ।' ततो मया विज्ञप्तम् । 'देव, ममैवादेशं दद्स्व, न पुनस्तत्र मार्गवैषम्यतस्तत्रभवतां भवतां गमनं सांप्रतम् ।' ततो देवेन तव प्रवृत्तिनिमित्तमपरै राजपुत्रैः समं प्रेषितस्य ममात्र ग्रीष्मकालस्यैको मासस्त्रयो वर्षाकालस्य च समभवन् । एकदा विभुं विजयसेनमेव प्रणम्य मया विज्ञप्तम् । 'देव, नरेन्द्रदृढवर्मपुत्रः कुवलयचन्द्रो भवत्समीपमुपागतः किं वा न ।' ततो ऽनेन स्वामिनादिष्टम् । 'सम्यग् न जानीमः, परं महेन्द्र, तवात्रैव तिष्ठतः कियद्भिर्दिनैर्यदि पुनः कुवलयचन्द्रो मिलति ।' ततो भूपवचो ऽङ्गीकृत्य त्रिकचतुष्कचत्वरदेवकुलमठप्रपारामविहारेषु भवतः शुद्धिं गवेषयन्नहं यावत्स्थितस्तावदद्य दक्षिणलोचनेन स्फुरता वामेतरभुजेन च भवद्दर्शनं सर्वेन्द्रियप्रीतिकारि समजायत ।' राज्ञोक्तम् । 'सुन्दरमेतज्जातं यदत्र प्राप्तः कुमारकुवलयचन्द्रो भवता । सर्वथा धन्यानामुपरि वयमेव स्थिताः । अधुना यूयमावासं व्रजत, यथा दैवज्ञमाकार्य कुवलयमालायाः पाणिपीडनलग्नं निर्णीय भवदन्तिके प्रेषयामि' इति वदन्नराधिपतिरुत्तस्थौ । ततः कुमारो महेन्द्रेण समं भूपतिसमर्पितनिकेतनमुपाजगाम । ततस्तौ विहितस्नानभोजनौ यावत्सुखासीनौ तिष्ठतस्तावन्महाराजप्रेषिता राजप्रतिहारिका समागत्य जगाद । 'यद्देवः स्वयं भवन्तमित्यादिशति, अद्य कुवलयमालायाः पाणिग्रहणकृते गणकेन लग्नशुद्धिर्विलोकिता, परं सर्वग्रहबलोपेताद्यापि न वर्तते, अतः कुमारेणात्यन्तोत्सुकमनसा न भाव्यम्, सांप्रतं स्वमन्दिर इवात्रैव क्रीडासुखमनुभवतु कुमारः' इति निवेद्य सा निर्ययौ । महेन्द्रेणोक्तम् । 'अद्यापि लग्नं दूरतरम्, ततः श्रीदृढवर्ममहीपतेः पुरस्तवात्रागमप्रवृत्तिर्विज्ञप्तिकया ज्ञाप्यते' इति भणित्वा निष्क्रान्तो महेन्द्रः ।

§ ६१ ) ततश्च कुमारो व्यचिन्तयदिति । 'यदि विषमं मार्गमुल्लङ्घ्यात्रायातेन मया मुनिनिवेदितं गाथापूरणं चक्रे, परं तथापि विधिवशात्तस्याः संगमः । इयन्ति भाग्यानि न मे सन्ति, यैरिमां परिणेष्यामि । भूयो ऽपि केनोपायेन तद्दर्शनं भविष्यति । यदि स्त्रिया वेषं विरचय्य कन्यान्तःपुरे कयाचिद्वेश्यया सह यासि, ततः सत्पुरुषचरितविमुखं राजविरुद्धं च । यस्योद्दण्डभुजप्रकाण्डे ऽतिशायिनी शक्तिव्यक्तिः स कथं लोकनिन्द्यं महिलावेषमातनोति । अथवा तस्याः सखीजनस्य सङ्केतं वितीर्य तामपहृत्य गच्छामि, तदपि कुलीनस्यानुचितम्' इति चिन्तयतस्तस्य बहिरागतो महेन्द्रो बभाण । 'अद्य मया त्वदिहावस्थानोदन्तः सर्वो ऽपि तातस्य विज्ञापितो ऽस्ति । कुमार, तत्किमस्वस्थचित्त इव लक्ष्यते भवान् ।' कुमारेणोक्तम् । 'सुन्दरतरमाचरितमेतद्भवता । वयमेतावतीं भुवमागताः, परं भूपतिर्निजां

13 ) P om. पुरी. 18 ) P B °प्रसादे गते ( B मते ) निजमेव, B समादिष्टं, B om. मां प्रति च प्रोचे. 19 ) B गंतुमिच्छामः. 24 ) C मिलिष्यति. 25 ) P has blank space between शुद्धिं and याव°, C वितन्वन्नियत्कालं for गवेषयन्नहं, P B om. च. 26 ) B कुमारः कुवलय°. 33 ) P पुरस्तत्रागम° C पुरस्तवागम°. 39 ) B अथ for अथवा.

तनुजां दास्यति न वा, इत्यतो मे मनसि विषादः ।' महेन्द्रेणोक्तम् । 'त्वया यदनुध्यातं तन्मिथ्या, कुलशौर्यलावण्यनिरुपमरूपयौवनविज्ञानकलाकलापेन न यतः को ऽपि तव समः पुमान् यस्येमां दास्यति । अतो ऽमुष्यास्त्वमेव परिणेता ।' यावदित्यनल्पविकल्पोर्मिमालाकुलहृदम्बुधिं कुमारं स धीरयति तावदागत्य चेटिकया विज्ञप्तम् । 'यद्य कुमार, मत्स्वामिन्या कुवलयमालया स्वकरतलगुम्फिता कुसुममाला प्रेषितास्ति, एष कृत्रिमसुकर्णपूरः ।' ततः कुमारो ऽपि सुखसंदोहमहोदधिमन्थनोद्गतं पीयूषमिव तच्च जग्राह । ततः कुमारेण कर्णपूरानाले प्रियोत्कण्ठितामिव राजमरालिकामेकां विलोक्य तस्या विज्ञानप्रशंसनेन सुचिरं स्थित्वा सा भणिता । 'भद्रे, इदानीं घर्मांशुरयमस्ताचलचूलावलम्बी जातस्तद्वयं सांध्यं विधिं विदध्मः । त्वमपि गत्वा तत्पुरः सर्वमपि सुन्दरं निवेदयेः, यतस्त्वमुचितभाषणे स्वयमपि निपुणासि ।' तदङ्गीकृत्य सा निःसृता । कुमारस्तु कृतसांध्यसवनः प्रावृतधौतसितवसनः समुच्चरितजिननमस्कारचतुर्विंशिकः समवसरणस्थं जगज्जीवबान्धवं श्रीनाभिसंभवमवन्दत । अथ महेन्द्रेण समं निद्रासुखमनुभूय शयनीयादुत्तस्थे । ततश्च पूर्वपर्वतमस्तकमहर्पतिरारुरोह । अथो एका महिला मध्यमवया भोगवत्यभिधेयया वृद्धयानुचर्यया समं तत्रागमत् । सा वृद्धा किंचिदग्रतो भूत्वा तं व्यजिज्ञपत् । 'कुमार कुवलयचन्द्र, कुवलयमालाया एषा जननी । ततः कुमारेण ससंभ्रममासनदानप्रतिपत्त्याभिनन्दिता । ततः सा वृद्धा योषित्तया प्रतिपत्त्या रञ्जिताभ्यधादिति 'वत्स कुमार, तव परपीडाभिज्ञस्य पुरः किंचिन्निवेद्यते, आकर्ण्यताम् ।

§ ६२ ) अस्त्यमुष्यामेव विजयापुर्यां विजयसेनो नामायं नरेश्वरः । इयमेव तस्य सहचरी रूपेणोपहसितत्रिदशयुवती भानुमती महादेवी । न चास्याः संततिः । ततो ऽस्या निरपत्यायाः संजातमहादुःखाया अनेकैर्देवताराधनैरनन्तैर्मनोरथशतैः स्वप्नदृष्टकुवलयमालानुसारेण कुवलयमालाभिधानासामान्यगुणकलावनी कनी समजनि । सा च मया प्रतिपच्चन्द्रलेखेव वृद्धिमानीता यौवनश्रियमाशिश्राय । पित्रैतदर्थमनेकरूपलावण्यगुणशालिनो नृपपुत्रा विलोकिताः परमेषा पुरुषद्वेषिणी न कमप्यभिलषति । मया पुनर्बहुधा शिक्षिताप्यसौ मनागपि पुरुषेषु प्रीतिं न दधाति । अतः पितरौ व्यथितचेतसावभूतां मन्त्रिजनो राजलोकश्च । अन्यदा प्रतीहारेण निवेदितम् । 'देव, बाह्योद्याने को ऽपि दिव्यज्ञानी विद्याधरः श्रमणः समायातः' इत्याकर्ण्य नरेश्वरः कुवलयमालया समं सपरिच्छदः समागत्य तस्मै मुनये नमश्चक्रे । स च प्रदत्तधर्मलाभाशीर्वादः सकलमपि संसारस्वरूपमनित्यतादिकं देशनाद्वारेण प्रकटीचकार । तन्निशम्य प्रणिपत्य च भूपतिः पप्रच्छ । 'भगवन्, मम दुहिता कुवलयमाला कथमेषा परिणेतव्या, केन वा, कस्मिन् वा कालान्तरे, यदियं पुरुषद्वेषिणी ।' ततः स भगवान् ज्ञानातिशयेन कौशाम्ब्यां पूर्वभवकृतमायादित्यमायाबोधसङ्केतकुवलयमालाजन्मराजद्वारावलम्बितगाथापूरणाभिज्ञानजयकुञ्जरवशीकरणकुवलयचन्द्रपाणिग्रहणप्रभृति सर्वमपि निवेद्य नभस्तलमुत्पपात । ततो भूपतिः प्रमोदमाससाद । त्वयापि जयकुञ्जराधिपं वशीकृत्य गाथां प्रपूर्यात्मा प्रकटीकृतः । तद्दिनादारभ्य कुमार, कुवलयमालया भवद्दुःसहविरहतप्तया कुसुमशरजर्जरिताङ्ग्या वचनागोचरां नवमीमवस्थामनुभवन्त्या भवदन्तिके देव्या समं प्रेषितास्मि ।' कुमारेणोक्तम् । 'समादिश किं कृत्यम्' इति । तयोक्तम् । 'यदि कुमार, मां पृच्छसि तदतिक्रान्तः सर्वो ऽपि वाचामवसरः । यदि पुनर्यूयं नृपभुवनोद्यानमागच्छथ तदा केनैवोपायेन भवद्दर्शनपाथसा बालिकायाः कुवलयमालायाः क्षणमेकं विरहतापोपशान्तिर्जायेत ।' महेन्द्रेणोक्तम् । 'को ऽत्र दोषो, भवत्वेवम्' एवमभिधाय भोगवती भानुमत्या समं निर्गतवती । ततः कुमारो महेन्द्रेण समं नृपाक्रीडक्रोडं विचचार । महेन्द्रेणोक्तम् । 'यथा मञ्जुमञ्जीररवः श्रूयते तथा मन्ये ऽभिनवमदनमहाज्वरविनाशमूलिका कुवलयमाला समागतैव मन्यते । कुमारेण भणितम् । 'न सन्तीयन्ति भाग्यानि ।' महेन्द्रेण निगदितम् । 'कुमार, धीरो भव ।' ततः क्षणान्तरेण कुमारेण बहललतान्तरितेन सखीनां मध्यगतां हंसीनामिव राजमरालिकां तारकाणामिव मृगाङ्करेखामप्सरसामिव रम्भां कुवलयमालामायान्तीमालोक्य भणितम् । 'सर्वथैव धन्यो विधिर्येनैषा त्रिभुवनजनाश्चर्यदायिनी विदधे' तथोक्तम् ।

'विधे यदि त्वं तुष्टो ऽसि तदद्यैव तथा कुरु । तं नवं येन पश्यामि स च पश्यतु मामिह ॥ ४१४

§ ६३ ) इति निशम्य कुमारेणोक्तम् । 'महेन्द्र, अग्रतो भूत्वा चेष्टितमस्या निरीक्षे' इत्यभिधाय कुमारो लतागृहं प्रविवेश । महेन्द्रस्तु क्रीडार्थमितस्ततो ऽभ्रमत् । [ इतः ] भोगवत्योदितम् । 'वत्से,

5) P मथनोद्गतपीयूष°. 6) B कर्णपूरनाले, P has blank space for ना. 20) P परमेषा पुरुषद्वेषिणी । ततः स भगवान्– thus between पुरुषद्वेषिणी and ततः it loses a few lines because the copyist's eye has wandered a few lines ahead where the same word occurs. 26) B कालांतरेण. 37) B क्षणांतरे. 40) P त्वं पुष्टो. 42) P B om. [ इतः ].

विषादपरवशं मानसं मा कुरु । स युवात्र समागत एव विभाव्यते यथा शङ्खचक्राङ्किता चरणप्रतिकृतिः ।' ततस्तदादेशवचनान्ते सर्वा अपि चेटिकास्तद्वीक्षायै प्रसस्रुः, परं कुत्रापि ताभिर्न दृष्टः । भोगवत्या भणितम् । 'स्वयं गत्वाहं विलोकयिष्ये, त्वया पुनरत्र स्थातव्यम्' इति वदन्ती भोगवती गता । कुवलयमालया चिन्तितम् । 'एतत्सर्वमपि कपटं मन्ये यत्तेन यूनात्रोद्याने सङ्केतः प्रदत्तः । अन्यस्य कस्यचिदयं चरणप्रतिबिम्बः । स युवा देवानामपि दुर्लभो मया कथं प्राप्यः । यावता कालेन तातो मां परिणाययिष्यति तावन्तं को जीविष्यति, सांप्रतं तत्करोमि यथा दुःखानां भाजनं न भवामि' इति विचिन्त्य कुवलयमाला पाशरचनार्थकं लवलीलतागृहं प्रति चलिता यत्र कुमारः स्वयमेवास्ते । तेन च सा समागच्छन्ती वीक्षिता । ततः क्षणं कुमारो लज्जित इव भीत इव विलक्ष इव जीवित इव सर्वथैवानाख्येयमवस्थान्तरमवाप । सा च तं समीक्ष्य 'एकाकिनी' इति भीता, 'स एवायम्' इति प्रमुदिता, 'स्वयमागता' इति लज्जिता, 'मया पूर्वमेष वृतः' इति विश्वस्ता चतुर्दिक्षु प्रेषिततरलतरतारकदृष्टिः ससाध्वसा सस्तम्भा सविस्मया सस्वेदा सरोमाञ्चा समभवत् । तदा तयोः परस्परं निरीक्षणेनापि तत्सुखमजायत यत्कविवाचामप्यगोचरम्, दिव्यज्ञानिभिरप्यनुपलक्ष्यम् । ततः कुमारेण साहसमवलम्ब्य धीरत्वमङ्गीकृत्य कामशास्त्रोपदेशं स्मृत्वा समुत्सृज्य लज्जां परित्यज्य साध्वसं 'सुन्दरि, भवत्यै स्वागतम्' इति वदता प्रसारितोभयभुजादण्डेनांसस्थलयोः कुवलयमाला जगृहे । ततः सा प्रोवाच । 'कुमार, मां मुञ्च मुञ्च सर्वथा न कार्यमनेन जनेन ।' कुमारः प्रोवाच । 'सुतनु, प्रसीद मा कुप्यस्व त्वदर्थमेवाहमेतावतीं भुवमायातः, परमेतदपि त्वं न जानासि ।' तयोक्तम् । 'जानासि यद्भवान् पृथिवीमण्डलदर्शनकौतुकी ।' कुमारेण प्रोचे । 'एवं मा वादीः, किं तत्स्मरसि न सुतनो, मायादित्यस्य जन्मनि भवत्योक्तं 'यन्मम भवता दातव्यं बोधिरत्नम्' [इति] स्मृत्वा तन्मुनिवचसा प्राप्तो ऽहं लोभदेवजीवस्त्वाम् । मुग्धे, बुध्यस्व ततो मम वाचा मोहमुत्सृज्य' कुमारो यावदिदं जल्पन्नस्ति तावद्भोगवती समागत्य प्रोचे । 'वत्से, वञ्जुलाख्यः कन्यान्तःपुररक्षक इति वदन्नस्ति यद् राजा कथयति यदद्य कुवलयमाला दृढमस्वस्थशरीरा काननान्तःपरिभ्रमन्ती त्वया त्वरितमेवैषा समानेया ।' ततः सा सकलककुम्मण्डलदत्ततरललोचना कथमपि चलितुमारेभे । कुमारः प्रोवाच ।

'उक्तेन बहुना किं वा किं कृतैः शपथैर्घनैः । वदामि सत्यमेवैतत्त्वमेव मम जीवितम् ॥' ४१५

§ ६४ ) कुवलयमालापि 'महाप्रसादः' इति वदन्ती लवलीलतागृहतो निःसृता । कञ्चुकी जगाद । 'वत्से, भवतीयतीमत्र वेलां कथं स्थिता, केनाप्राकारिता, अत्र तव वनान्तश्चिरं स्थातुं नो युक्तं सत्वरं त्वमग्रतो भव' इति । ततः सा तद्वचः कर्कशमाकर्ण्य तेन कञ्चुकिना सह पथि गच्छन्ती चिन्तयति स्म । 'अहो, अस्य कुमारस्य प्रतिपन्नवत्सलता, अहो, अस्य सत्यप्रतिज्ञता, अहो, उपकारिता, यदेष शिरीषकुसुमगात्रो ऽपि चरणचारयैव पथि क्षुत्तृषाद्यवगणय्य प्रीत्या दूरस्थामपि मां प्रष्टुं बोधयितुमिहागतः । भूयो ऽपि कदा संगंस्यते' इति ध्यायन्ती कन्या कन्यान्तःपुरमाययौ । कुमारस्तु तस्याः प्रेमकोपपिशुनं वचनं स्मरन्नेकस्मिन् पादपे कुसुमावचयं विरचयन्तं महेन्द्रं निरीक्ष्य जगाद । 'वयस्य, समेहि यथावासं व्रजावः । यद् द्रष्टव्यं तद्दृष्टमेव ।' ततो द्वावपि निकेतनमाजग्मतुः । तत्र च महाराजप्रेषितेन वारवनिताजनेन स्नानं कारितौ । ततः कृतभोजनौ यावदासनस्थौ तिष्ठतस्तावदेकया कामिन्या समागत्य कुमारस्य करे ताम्बूलमदायि । कुमारेणोक्तम् । 'केनेदं प्रेषितम्' । तयोदितम् । 'केनापि जनेन' इति । एवं सा कदाचिद्भोज्यं कदाचित्ताम्बूलं कदाचित्पत्रच्छेद्यं कदाचिदालेख्यं परमपि स्नेहरसविशेषपोषकं कुमारस्य योग्यं प्रतिदिनं प्रेषयति । एवं च तयोर्निजराज्य इव सुखेन तिष्ठतोः कियन्तः पुण्यभासुरा वासरा व्यतीयुः ।

§ ६५ ) अथ हेमन्ते भूमिभृता निमित्तमिदमाकार्य पुत्र्याः पाणिग्रहणलग्नं पृष्टम् । तेन सर्वाण्यपि ज्योतिःशास्त्राण्यवलोक्य प्रोचे । 'फाल्गुनसितपञ्चम्यां बुधे स्वातिनक्षत्रे यामिन्याः प्रथमे यामे व्यतीते प्रधानं गतदोषमुपयामलग्नमस्तीत्यवधार्यतां देवेन ।' राज्ञापि 'तथा' इत्यङ्गीकृत्य कुमारस्याग्रे ज्ञापितम् । 'कुमार वत्स, भवद्विज्ञानसत्त्वसाहसप्राग्भवस्नेहवश्यायाः कुवलयमालाया वियोगश्चिराय भवतो ऽस्माभिः कृतः । अतः सांप्रतममुष्यां पञ्चम्यां कुमारो ऽमुष्या वेदिकामध्यमध्यासीनायाः पाणिग्रहणं करोतु ।' कुमारेणोक्तम् । 'यदादिशति देवस्तत्तथा' इति । ततः कुवलयमाला पाणिग्रहणाकर्णनस्मेरवदनाम्बुजा प्रमोदभरभासुरा सर्वाङ्गरोमोद्गमसंगमा चिरसंचितपूर्यमाणमनोरथपथा न देहे न गेहे न

2) B °दादेशवचनेन सर्वा. 5) B परिणाययिष्यति. 10) B om. तर before तारक. 18) P B om. [इति], B मानभट for लोभदेव. 19) B वंजुलाख्यकन्यांतःपुररक्ष इति. 20) B om. यद् राजा कथयति. 27) B om. अस्य before सत्यप्रतिज्ञता. 31) B निकेत for निकेतन. 33) B om. सा after एवं. 39) C वशीकृतायाः for वश्यायाः.

त्रिभुवने ऽपि माति स्म । तत्र राजकुले विवाहभोजनार्थं धान्यान्यानीयन्ते । क्रियन्ते विविधानि पक्वान्नानि । विरच्यन्ते सर्वत्र मण्डपमञ्चप्रपञ्चाः । रच्यन्ते वेदिकाः । प्रेष्यन्ते लेखवाहाः सर्वेषां स्वजनराजन्यानाम् । निमन्त्र्यते सर्वत्र बन्धुवर्गः । भूष्यन्ते भवनानि । घट्यन्ते नानाविधान्याभरणानि । शोध्यन्ते नगरीरथ्याः ।

§ ६६ ) एवं विवाहारम्भकृत्यप्रवृत्तस्य जनस्य निधिलाभक्षण इव सौभाग्यनिर्मित इवोपयमदिवसः समागमत् । तस्मिन् दिने ऽविद्धमौक्तिकचारुचतुष्कस्थापितप्राङ्मुखासने निवेश्य कुमारं कुलवृद्धा मङ्गलस्नानमकारयत् । ततः स गोशीर्षचन्दनविलिप्ताङ्गः प्रावृतकौरकश्वेतसदशावसनः सिद्धार्थगोरोचनातिलकः कण्ठावलम्बितसुरभिकुसुमदामा महेन्द्रेण राजलोकेन चानुगम्यमानो जयकुञ्जरकुञ्जराधिरूढः प्रौढजनान्वितो दक्षिणकरकमलाबद्धकौतुकमदनफलः स्तुतिव्रातस्तूयमानगुणग्रामः प्रचुरमृदङ्गशङ्खपणववेणुवीणास्वरमुखरितदिक्चक्रवालो धृतसितातपत्रः पुरः प्रवर्तमानप्रेक्षणक्षणः क्षणेनोद्वाहमण्डपमलंचकार । ततश्च स प्रावृतसितचीवराया माङ्गल्याभरणभूषितायाः कुवलयमालाया लग्नवेलायां द्विजवरेणोपढौकितं करं करेण जग्राह । ततो ऽविधवा गीतं गातुं प्रवृत्ताः । वादितानि तूर्याणि । निःस्वानस्वनाः प्रसस्नुः । पूरिताः शङ्खाः । आहता झल्लर्यः । वेदोच्चारपरायणा द्विजन्मानो मङ्गलपाठकाः पठन्ति । जयजयारवपरो लोकश्च । ततः प्रवर्तितं मङ्गलचतुष्टयम् । ततो निर्वृत्ते पाणिग्रहणमहोत्सवे पूजिते गुरुजने कृते समस्तकरणीये स्वस्थाने समेत्य विविधरत्नविद्रुमनिर्मिततलिने गङ्गापुलिन इव राजहंसयुगलं कृतमङ्गलोपचारं तन्मिथुनमुपविष्टं दृष्ट्वा परिवारः सखीजनश्च मन्दं मन्दं निस्ससार । तत्रस्थस्य तस्य निद्रासुखमनुभवतः क्षणदा क्षणमिव क्षयमियाय । ततः प्राभातिकतूर्यरवप्रतिबोधितः कुमारः कृतदेवाधिदेवनमस्कृतिर्नित्यकृत्यमकरोत् । तत्रान्यदा कुमारो हिमगिरिशिखरसमानं स्वसौधमारुह्य दक्षिणपक्षप्राकारप्रत्यासन्नं रत्नाकरं निरीक्ष्य श्लक्ष्णं व्यावर्णयन् मात्राक्षरबिन्दुच्युतकप्रश्नोत्तरक्रियागुप्तककाव्यकथाविनोदैश्च कुवलयमालया समं प्रीतिपरस्तस्थौ। अत्रान्तरे कुवलयमालया विज्ञप्तम् । 'देव, त्वया मद्वृत्तान्तः कथं परिज्ञातः ।' ततः कुमारेण सविस्तरमयोध्यातो हयापहाराद्यं मुनिनिवेदितचण्डसोममानभटमायादित्यलोभदेवमोहदत्तपञ्चजनपूर्वभवगाथापूरणपरिणयनपर्यन्तं सर्वमपि प्रोचे । प्रिये, ऐहिकसुखमूलं विवाहकर्म वृत्तम् । संप्रति पारत्रिकसौख्यप्रदं सम्यक्त्वमाद्रियस्व । यतः,

चिन्तामणिः श्रितः प्राणिस्वान्तचिन्तितमात्रदः । सम्यक्त्वं सर्वजन्तूनां चिन्तातीतार्थदं पुनः ॥ ४१६
तावदेव तमस्तोमः समस्तो ऽपि विजृम्भते । यावत्सम्यक्त्वतिग्मांशुरुदेति न हृदम्बरे ॥ ४१७

सद्दृष्टिर्दृष्टिहीनो ऽपि यः सम्यक्त्वविलोचनः ।
श्रुतिविश्रान्तनेत्रो ऽपि सो ऽन्धो यस्तद्विवर्जितः ॥ ४१८
यदि ते स्मृतिमेति सांप्रतं दयिते पूर्वभवः स्वचेतसि ।
तदवश्यमिदं जिनेशितुर्वचनं निर्वृतिशर्मदं श्रय ॥ ४१९

श्रुत्वेति तस्य वचनं किल सा जगाद नाथ त्वमेव शरणं सुगुरुस्त्वमेव ।
देव त्वयाखिलपुरातनजन्मजल्पात् सम्यक्त्वभाजनमहं विहिता यदद्य ॥ ४२०

इत्याचार्यश्रीपरमानन्दसूरिशिष्यश्रीरत्नप्रभसूरिविरचिते श्रीकुवलयमालाकथासंक्षेपे श्रीप्रद्युम्नसूरिशोधिते कुवलयचन्द्रकुमारवनपरिभ्रमणविजयापुरीगमनजयकुञ्जरहस्तिवशीकरणसमस्यापूरणकुवलयमालापरिणयनसम्यक्त्वोपदेशप्रभृतिवर्णनस्तृतीयः प्रस्तावः ॥ ३ ॥

## [ अथ चतुर्थः प्रस्तावः ]

§ १ ) अथ श्रीदृढवर्मणो नृपतेर्लेखवाहः प्रतीहारनिवेदितः प्रविश्य कुमारं प्रणिपत्य लेखं पुरो विमुच्य विज्ञपयामासेति । 'देव, श्रीतातपादा भवन्तमाकारयन्ति ।' ततः कुमारः पूर्वं लेखं प्रणम्योन्मुद्र्य च स्वयं वाचयामास । 'स्वस्त्ययोध्यापुरीतो महाराजाधिराजश्रीदृढवर्मदेवो विजयापुर्यां पुत्रं दीर्घायुषं कुवलयचन्द्रकुमारं महेन्द्रसमन्वितं साञ्जसं गाढमालिङ्ग्य समादिशति, यथा 'अत्र तावत्तव दुःसहविर-

2 > P रच्यते वेदिका. 7 > P ततः स विलिप्तांगः. 9 > B स्तुतिव्रत°. 11 > B °भूषिताया वेदिकामध्यमध्यासीनायाः कुवलय°. 14 > P निवृत्ते. 15 > P B om. स्वस्थाने समेत्य. 16 > P B om. निद्रासुखमनुभवतः. 17 > B inter. क्षणदा & क्षणमिव. 18 > B दक्षिणपक्षे. 38 > B om. पुत्रं.

1 हेण मम जलबहिःक्षिप्तमत्स्यस्येव क्षणमात्रमपि न सुखावकाशः, तथा तव मातुः पुरीजनस्य च । अतस्त्वया त्वरितमागत्य निजदर्शनपाथसा पाथोदेनेव पादपो वियोगतप्तो ऽहं निर्वाप्यः' इति । कुमारेण जगदे । 'प्रिये, 3 अस्माकमेष गुरुनियोगस्तत् किं कर्तव्यम् ।' तयोक्तम् । 'यत्तुभ्यं रोचते तदाचरणीयमेव ।' ततः कुमारः समुत्थाय महेन्द्रेण साकं श्रीविजयसेनमिति विज्ञपयामास । 'देव, ममायातस्य बहवो दिवसा अभवन्, उत्कण्ठितौ च पितरौ, अतः प्रसादं विधाय मां प्रैषयत ।' ततो नृपतिना विसृष्टः सांवत्सरेण निवेदिते 6 मुहूर्ते कुमारः कृतमाङ्गल्यविधिर्वहन्नासिकादत्ताग्रपादो निर्मितजिननमस्कृतिर्जयकुञ्जरं गजमारुह्यानेकसेवकलोकपरिकलितो महेन्द्रेण सह प्रमुदितचित्तः पुरीतो निर्गत्य बाह्यभुवि प्रस्थानमङ्गलं विदधे ।

§ २ ) साप्यथो मातरं नत्वा तत्त्वालोकनबद्धधीः । पूर्णा हर्षविषादाभ्यां प्रोवाच नृपतेः सुता ॥ १ ॥

9 देहच्छायेव देहेन पत्या यास्याम्यहं सह । मातस्त्वदंह्रिसेवाया वियोगस्तु सुदुःसहः ॥ २ ॥

मद्रोपिता लता मातर्विना जलनिषेचनम् । पाण्डिमानमुपेष्यन्ति यथा प्रोषितयोषितः ॥ ३ ॥

मातर्मदीयविरहे कलापकलितः किल । कलापी तालसुभगं केनायं नर्तयिष्यते ॥ ४ ॥

12 जनन्युवाच किं वत्से धत्से खेदं स्वचेतसि । नरेश्वरसुता यत्त्वं दृढवर्मसुतप्रिया ॥ ५ ॥

तत्पुत्रि मा कृथाः खेदं हर्षस्थाने ऽस्य कः क्षणः । स्वर्धुनीस्नानसंप्राप्तौ को हि पङ्के निमज्जति ॥ ६ ॥

इत्युक्त्वा तनुजां क्रोडं स्वमारोप्य सबाष्पदृक् । चुम्बित्वा च शिरोदेशे जनन्येवमशिक्षयत् ॥ ७ ॥

15 वत्से चेत्त्वं गुणश्रेणिमीहसे स्वस्य सर्वदा । तद्भर्तृमन्दिरप्राप्ता ब्रूयाः प्रियमसंशयम् ॥ ८ ॥

कार्यं श्वश्रूप्रभृतिषु गौरवार्हेषु गौरवम् । त्वयानुकूलया भाव्यं सपत्नीष्वपि संततम् ॥ ९ ॥

तदपत्यानि दृश्यानि निजानीवाश्रितेषु च । कृपा कार्या न तु क्वापि गर्वः सर्वप्रतीपकः ॥ १० ॥

18 भुक्ते भर्तरि भोक्तव्यं स्वप्यं च शयिते सति । नीचैर्लोचनया स्थेयं नीरङ्गीस्थगितास्यया ॥ ११ ॥

दुःखिते दुःखिता पत्यौ सुखिते सुखिता भवेः । कोपवत्यपि मा कोपं विदधीथाः कदाचन ॥ १२ ॥

कदापि पतिपादारविन्दद्वयविलोकनम् । न हेयं सर्वदा सर्वसतीमार्गो ऽयमद्भुतः ॥ १३ ॥

21 § ३ ) इति शिक्षां शिरसि चारोप्य पितरौ प्रणम्य परिजनमभिपृच्छ्य कुवलयमाला ततः कुमारान्तिकमागता । ततो ऽन्यदिने कुमारः कुवलयमालया समं प्रचलितः सन् जातानुकूलपवनः श्रुतवामखरस्वरः सव्यसमुत्तीर्णैकवर्णशुनकः सर्वत्र समुच्चारितचारुवचनो व्यचिन्तयदिति । 'भगवति प्रवचनदेवते, यदि 24 तातं निरामयं पश्यामि राज्यं च प्राप्नोमि परिवर्धते सम्यक्त्वं [ तदा ] कुवलयमालया समं प्रव्रज्यामाश्रयामि, तद्दिव्यज्ञानेन परिज्ञाय तादृशमुत्तमं शकुनं देहि, येन मे निर्वृतिः स्यात् ।' इति यावच्चिन्तयन्नस्ति तावत्पुरस्तस्य मणिकनकनिर्मितं प्रलम्बितमुक्तावचूलमातपत्रं केनाप्युपनीय विज्ञप्तम् । 'देव, अस्य 27 भूपस्य जयन्तीपुरीपतिर्ज्येष्ठो भ्राता जयन्ताभिधो वसुधाधवः । तेन त्वद्धेतवे देवताकृताधिष्ठानं छत्ररत्नं प्रेषितम्' इति । कुमारेण चिन्तितम् । 'अहो, प्रवचनदेव्याः प्रभावः, येन प्रथममेव प्रधानं शकुनम्' इति ध्यात्वा तच्च स्वीकृत्य कुमारो राज्ञा पौरजनेन चानुगम्यमानो महता सैन्येन परिवृतः कियतीं भुवं परि30 गतः प्रोवाच । 'महाराज, व्यावृत्य धवलगृहमलंक्रियताम् । पौरजनाश्च निवर्तध्वम्, यतो दूरे भवति विजयापुरी ।' ततस्तेषु व्यावृत्तेषु कुमारः सपरीवारो गच्छन् कतिपयैरपि प्रयाणकैः सह्यशैलसमीपं संप्राप । अत्रान्तरे केनाप्यागत्य विज्ञप्तम् । 'नाथ, अत्र सरस्तीरे देवायतने महामुनिरेको ऽस्ति' । इत्याकर्ण्य कुमारः 33 कुवलयमालया समं तत्र गत्वा मुनिं नत्वा सविनयं जगाद । 'भगवन्, भवन्तः स्वीकृतनवव्रता इव विभावयामस्तत्र को हेतुः ।' ततो मुनिमतल्लिका निवेदितुमारेभे ।

समस्ति लाटदेशान्तः पारापुर्यां नरेश्वरः । सिंहः प्राज्यतमस्थामा भानुनामास्ति तत्सुतः ॥ १४ ॥

36 चित्रकर्मप्रियः प्रायः सो ऽहं क्रीडनकौतुकी । अन्यदा तत्पुरीबाह्योद्यानभूमिमुपागतः ॥ १५ ॥

§ ४ ) तत्र च विचरता मया कलाचार्य एको दृष्टः । तेनोक्तम् । 'कुमार, चित्रपटममुं मल्लिखितं निरीक्ष्य निवेद्यतां यदयं रम्यो न वा' इति । ततस्तदालोकनेन मया चिन्तितम् । 'तत्किमपि पृथिव्यां नास्ति यदत्र 39 न लिखितमस्ति' इति विस्मयस्मेरमानसं मां निरीक्ष्य तेनोक्तम् । 'कुमार, मयात्र सकलमपि संसारविस्तारस्वरूपं चित्रितमस्ति, यन्मनुष्यजन्मनि यत्तिर्यग्भवे यन्नरके यत्त्रिदिवे विविधं दुःखं सुखं चानुभूतं तत्सर्वमप्यस्ति, अत्र तावन्मोक्षो ऽपि, यत्र न जरा न मृत्युर्न व्याधिर्न चाधिः ।' एवं कुमार, तेन निवेदिते

2 ) B om. इति. 5 ) P श्रुतप्रसाद for अतः प्रसादं. 15 ) B मंदिरं प्राप्ता. 24 ) P om. च, P B om. [ तदा ]. 25 ) P निवृत्तिः. 29 ) B कियंतीं. 33 ) B adds इति ( on the margin ) after इव.

तस्मिंस्तादृशे संसारचक्रचित्रपटे प्रत्यक्षीकृते मया चिन्तितम् । 'अहो, कष्टं संसारवासः । दुर्गमो मोक्षमार्गः । अत्यन्तदुःखिताः प्राणिनः । विषमा कर्मगतिः । स्नेहनिबिडनिगडसंदानितो मूढजनः । अशुचिमयः कायः । विषमिव विषयसुखम् । साक्षादेवैष जीवसार्थो महासागरनिमग्नः ।' इति चिन्तयता मया भणितम् । 'अहो, त्वयायं यदि चित्रपटो लिखितस्ततो न मनुष्यस्त्वम्, अनेन दिव्यचित्रपटप्रकारेण किमपि कारणान्तरं चिन्तयन् त्वं देवो देवलोकतः समागतः ।' इति च वदता मया तस्यैकस्मिन् पार्श्वे ऽपरं चित्रपटं दृष्ट्वा प्रोक्तम् । 'अहो उपाध्याय, पुनरेव ततः संसारचक्रतो व्यतिरिक्तश्चित्रपटो ऽयम्, ततो ममायमपि प्रत्यक्षीक्रियताम् ।' इदमाकर्ण्य कलाचार्येण भणितम् । 'कुमार, मयैव लिखितमेतद्वयोर्वणिजोश्चरितं विभक्तस्वरूपं पश्यतु भवान् । एषा चम्पापुरीति लिखिता । अत्रैष महाराजो महारथः । अत्र च धनी धनमित्रो नाम वणिग् । तस्य भार्या देवीति । तयोस्तनुजौ द्वौ धनमित्रकुलमित्रौ । तज्जन्मानन्तरं तदात्वमेव पिता पञ्चत्वमुपागतः । सर्वो ऽप्यर्थो निधनमियाय । ततस्तौ मात्रा कष्टेन वृद्धिमानीतौ यौवनमवापतुः । जनन्या निगदितम् । 'भवन्तौ व्यवसायं कुरुताम् ।' ततस्तौ वाणिज्यकृषिपरमन्दिरकर्मकरवृत्तिप्रतिगृहप्रार्थनारत्नाकरसमुल्लङ्घनरोहणपर्वतारोहणानवरतखानिखननधातुवादद्यूतक्रीडनस्वामिसेवाप्रवृत्तिविवरयक्षिणीसमाराधनगुरूपदिष्टमन्त्रसाधनप्रभृतिभिः प्रकारैर्धनोपार्जनार्थं ताम्यतः, परं वराटिकाया अपि नोत्पत्तिः ।

§ ५ ) ततो ऽतीवदुःखितौ ताविति संकल्पपरौ बभूवतुः । 'धिग् धिग् जीवितमस्माकम् । यः को ऽप्युपायः प्रारभ्यते स सर्वो ऽपि पूर्वकृतदुष्कृतवशेन वालुकापिण्डकलनमिव खलप्रीतिप्राग्भार इवाञ्जलिकृतजलसंघात इव समीरप्रेरितजीमूतपद्धतिरिव विलयमायाति । कथमनेन दैवेनावामेवाभाग्यभाजनं विहितौ । इदमपि दैवं सर्वेषामप्यन्येषामनवमम्, परमावयोरवममेव । तावत्सर्वथैवालममुना जीवितेन सर्वथा दुःखनिकरमन्दिरेण । अथ कस्मिंश्चिदुच्चशिलोच्चयशिखरमारुह्यात्मानं मुञ्चावः' इत्यालोच्य तौ तच्छिखरमारुह्यैवं प्रोचतुः । 'भोः पर्वत, तव शिखरपतनसाहसेनावामग्रेतनभवे दारिद्र्यदुःखभाजनं न भवावः ।' इत्युदित्वा तौ युगपदेव यावदात्मानं मुञ्चतस्तावत्तयोः 'मा साहसं मा साहसं' इति ध्वनिः श्रवणाध्वनि पपात । तं निशम्य ताभ्यां सर्वतो दिशः पश्यद्भ्यां साधुं कायोत्सर्गस्थितं निरीक्ष्य भक्त्या प्रणिपत्य प्रोचे । 'परमेश्वर मुनीश्वर, भवतावां मृत्युतः कथं निषेधितौ ।' मुनिनापि ततः प्रोक्तम् । 'युवयोः किं वैराग्यकारणम् ।' ताभ्यामुक्तम् । 'भगवन्, आवयोर्दरिद्रतैव वैराग्यहेतुर्नान्यत् ।' साधुनाप्यभ्यधायि । 'भो पण्याजीवौ, भवन्तौ निर्वेदं कृत्वा मा प्राणत्यागं तनुताम् ।' ताभ्यामुदितम् । 'भो यतीश, कथय कथं जन्मान्तरे ऽपि न दारिद्र्यं पुनरावयोः ।' भगवता भणितम् । 'यदि भवन्तौ दीक्षामङ्गीकृत्य तपः समाचरतस्तदेवंविधदुःखभाजनं भूयो ऽपि न भवतः ।' ताभ्यामुक्तम् । 'एवं प्रसादः क्रियताम् ।' ततस्तेन मुनिना जैनविधिना कुमार, तयोः प्रव्रज्या दत्ता । इमौ तौ प्रव्रजितौ मया चित्रपटे लिखितौ । ततस्तौ दुश्चरितं तपस्तप्त्वा समाधिना मृत्वा देवभवमुपाजग्मतुः । तयोः पुनरेक आयुषि क्षयमीयुषि स्वर्गतश्च्युत्वा पारापुर्यां सिंहभूपतेः सुतो भानुनामा संजातः । स चात्रोद्याने त्वम् । यः पुनर्द्वितीयो वणिग्जीवः स चाहम् । इमं चित्रपटं समालिख्य भवतः प्रतिबोधार्थमिहागतः । तावद्भो भानुकुमार, प्रतिबुध्यस्व मा मुहः, भीम एष भवाम्बुधिः, तरला कमला, हस्तप्राप्या विपत्तयः, दुःसहं दारिद्र्यम्' इदमाकर्ण्य ऊहापोहं कुर्वाणः सहसैव मूर्च्छितो भानुकुमारः । स्मृता जातिः । परिजनेन वयस्यैश्च शीतलजलकदलीदलपवनादिभिः समाश्वासितः । ततः संजातस्वस्थचेतसा भानुनानुभूतं पूर्ववृत्तं विलोक्य भणितम् ।

'सर्वथा त्वं गुरुर्नाथ त्वमेव शरणं मम । येन त्वयाधुना जैनाध्वनि प्रीत्यास्मि रोपितः' ॥ १६ ॥

§ ६ ) एवं वदंस्तच्चरणशुश्रूषापरायणः क्षणमेकं यावद्भवं तावदुपाध्यायः पताकाराजिराजिते विविधासपत्नरत्ननिर्मिते विमाने मणिकुण्डलगलस्थलसमुच्छलदतुच्छदेहदीप्त्या दश दिशः प्रकाशयन्तं वरमुकुटविराजमानं विमानसंस्थितमात्मानं प्रकटीकृत्य जगाद । 'भो भानुकुमार, दृष्टस्त्वयैष संसारमहीचक्रविस्तारः ।' ततो मया तन्निरीक्षणसंजातवैराग्येण स्मृतपूर्वभवेन देवस्य पुरस्तत्क्षणमेवाभरणानि विमुच्य स्वयं विनिर्मितोत्तमाङ्गपञ्चमुष्टिकलोचस्तद्देवार्पितरजोहरणमुखवस्त्रिकाप्रतिग्रहाद्युपधिरु-

---

6 ) B पुनरेतत्संसार. 16 ) C पिण्डक[व]लनमिव. 20 ) B °खरमारूढा एवं. 38 ) P B om. देह, B om. दश. 40 ) B संसारमहाचक्र°.

1 द्यानतो निष्क्रान्तः। ततो हाहारवमुखरो वयस्यवर्गः परिजनश्च सिंहनरेशसकाशमुपागमत्। तेन देवेन 1
ततः प्रदेशतोपहृत्यात्र निर्जने वने मुक्तो ऽस्मि। सांप्रतं पुनः कमप्याचार्यं मृगयासि, यदन्तिके तपस्त-
3 नोमि।' इदं निशम्य कुमारेणोक्तम् 'अहो, महाविस्मयकारी वृत्तान्तः।' ततो महेन्द्रेण सम्यक्त्वं 3
गृहीतम्। कुमारो ऽपि महेन्द्रकुवलयमालाभ्यां सममावासमागत्य कृतकृत्यः शर्वर्यामस्वाप्सीत्। ततः
पुनरपि निर्मले गगनाङ्गणे तिरोहितेषु तारानिकरेषु समुदिते दिनेशे कुमारः प्रदत्तप्रयाणकः क्रमेण
6 विन्ध्यगिरिकान्तारासन्नं समावासितः। तत्र स कुमारः कृतदिवसरात्रिककृत्यः कुवलयमालया समं 6
पल्यङ्के प्रसुप्तः।

§ ७) ततो निशीथे यावज्जागर्ति तावद्विन्ध्यगिरिशिखरकन्दरान्तरे ज्वलनं ज्वलन्तं विलोक्य
9 विकल्पमालाकुलः समजनि। 'अहो किमेतत्, किं तावदेष वनदवः, किमुतान्यत्। अत्र च पार्श्वेषु 9
परिभ्रमन्तः के ऽपि पुरुषा दृश्यन्ते। किं वा राक्षसाः, पिशाचा वा। ततो ऽग्रतो भूत्वा सम्यग् निभाल-
यामि किमेतज्ज्वलति, क एते पुरुषाः।' इति विचिन्त्य सुचिरं निभृतपदं समुत्थितः कुमारः कुवलय-
12 मालां तलिने सुप्तां विमुच्य स्वीकृतखड्गरत्नवसुनन्दकः कटीतटनिबद्धक्षुरिकः प्राहरिकान् वञ्चयित्वा गन्तुं 12
प्रवृत्तः। ततस्तेन ज्वलनान्तिके धातुवादवार्तां वितन्वतः पुरुषान् विलोक्य चिन्तितम्। 'यदमी धातुवा-
दिनः किमेतेषामात्मानं प्रकटीकरोमि किं वा न, कदाचिदेते वराकाः कातरहृदो ऽमी दिव्य इति मां
15 संभाव्य भयभीता नङ्क्ष्यन्ति विपत्स्यन्ते वा, तदिह स्थित एव तेषां वाचः श्रोष्यामि' इति। तदा तत्र 15
तैरपीत्युक्तम्। 'यदद्य कल्कः सर्वो ऽपि विघटितस्तावदिदानीं करणीयं किम् इति। किमत्रापरः कार्यः'
इति वदन्तश्चलिताः। कुमारेण भणिताः 'भो भो नरेन्द्राः, किं व्रजत।' तैरित्युक्तम्। 'भवतो भयेन।'
18 कुमारेण भणितम्। 'कथं भवतां भयम्, अहमपि भवन्मध्यवर्ती नरेन्द्रः, ततः सर्वमपि निवेद्यताम्।' 18
ततस्तैर्जल्पितम्। 'अहोरात्रं यावदस्माभिः सुवर्णभ्रान्त्याध्मातं परं सर्वमेव भस्मीभूतम्।' ततः साहसम-
वलम्ब्य कुमारेण देवगुरुचरणस्मरणप्रवीणान्तःकरणेन तेषां पुरस्तेनैवौषधयोगेन सुवर्णं निरमायि।
21 सर्वैरपि तैः प्रमुदितैर्विज्ञप्तम्। 'देव, अद्यप्रभृति भवानेवास्माकं गुरुः। वयं तु तव शिष्या एवातो विद्या- 21
दानप्रसादो विधेयः।' कुमारेण तत्प्रणीतभक्तिपरीतचेतसा योनिप्राभृतग्रन्थप्रयोगाः कत्यपि कथिता-
स्तेषाम्। कुमारेण प्रोक्तम्। 'व्रजाम्यहं स्वस्ति भवद्भ्यः। यदा कदाचिद्यूयमयोध्यायां कुवलयचन्द्रभूपतिं
24 शृणुत तदा सत्वरमेव समागन्तव्यम्' इति वदन् कुमारः कटकसंनिवेशे कुवलयमालाया विबुद्धायाः 24
कुमारादर्शनेन महद्दुःखं दधत्याः पुरः संप्राप्त एव। ततस्तया प्रमुदितया प्रोक्तम्। 'देव, कुत्र गता
भवन्तः।' ततः कुमारेण धातुवादिवृत्तान्तं सर्वमपि निवेदितम्। ततो निःश्वासनिःस्वनपटुपटहरवम-
27 ङ्गलपाठकपठितादीनि विभातविभावरीचिह्नानि मत्वा कुमारेण भणितम्। 'अये प्रिये, प्रभातप्राया रजनि- 27
रजनि। क्षपापतिरपि क्षपितकिरणगणः। चरणायुधसंहतिरपि मन्दं मन्दं रौति च। सांप्रतं देवगुरु-
बान्धवकार्याणि क्रियन्ते' इति वदन् कुमारो निर्मलजलक्षालितवदनकमलः श्रीमति गृहचैत्ये प्रविश्य
30 देवाधिदेवमेवं स्तोतुमारेभे। 30

'सुप्रभातं जिनेन्द्राणां धर्मबोधविधायिनाम्। सुप्रभातं च सिद्धानां कर्मौघघनघातिनाम्॥ १७॥
सुप्रभातं गुरूणां तु धर्मव्याख्याविधायिनाम्। सुप्रभातं पुनस्तेषां जिनस्तवप्रदर्शिनाम्॥ १८॥
33 सुप्रभातं तु सर्वेषां साधूनां साधुसंमतम्। सुप्रभातं पुनस्तेषां येषां हृदि जिनोत्तमः॥ १९॥ 33

§ ८) एवंविधां स्तुतिं विधाय कुमारः करिवरारूढः सुखासनाधिरूढया कुवलयमालया समं
विविधतुरगखुरखुराविदारितमहीतलसमुच्छलदतुच्छरेणुनिकरपरिपूर्यमाणसकलदिग्मण्डलमुखनिरुद्ध-
36 दिनकरप्रसरजातदुर्दिनशङ्कासहर्षशिखण्डिताण्डवितकलापभ्राजमानेन वनान्तरेण संचचार। ततो 36
ऽनवरतदत्तप्रयाणकः कुमारो ऽयोध्यापुरीपरिसरमलंचकार। तमायान्तं श्रुत्वा तदात्वाधिकप्रमोदवश-
समुल्लसद्रोमाञ्चकवचितः क्षितिपतिः सपरिजनः सान्तःपुरः कुमारसम्मुखमाजगाम। ततः स्वदर्शन-
39 मात्रेणैव दृढवर्ममहीपतिः कमलबन्धुरिव कमलाकरं कैरवबन्धुरिव कैरवसंचयं घनाघन इव घनसुहृत्सं- 39
घातं मधुरिव पिकनिकरं तं कुमारं भृशं प्रमुदितमानसमातत। ततो द्वावपि स्नेहभरपरवशमानसौ
बाष्पाविललोचनौ बभूवतुः। ततः कुमारेण महाविनयशालिना पितृमातृचरणद्वन्द्वमद्वन्द्वभक्त्या

10 > B क एते for केऽपि. 12 > B adds प्राहरिकः before प्राहरिकान्. 32 > P om. the verse सुप्रभातं गुरूणां etc., B om. जिनस्तव etc., to पुनस्तेषां in the next line–obviously a haplographical skipping over by the copyist.

प्रणतम् । ताभ्यामुक्तम् । 'वत्स, अतीव दृढकठिनहृदयो भवान् बभूव । आवां पुनस्त्वत्स्नेहनिर्भरप्रसृतदुःसहविरहज्वालावलीदुःखितौ सजीवमप्यात्मानं मृतमिव मन्यमानौ स्थितौ । ततो वत्स, चिरं जीवास्माकं जीवितेन ।' राज्ञा पृष्टम् । 'तदा तुरगेणापहृतः कुत्र गतः, कुत्र स्थितः, इत्येतत्सर्वमपि स्वरूपमावेदय ।' एतदाकर्ण्य कुमारेण यत्र यत्र भ्रान्तं यत्र यत्र यद्यद्दृष्टमनुभूतं च तदखिलमपि विज्ञप्तम् । इतश्च मध्याह्नावसरे मागधेन निवेदिते तत्रैव विहितमज्जनभोजनौ दृढवर्मकुवलयचन्द्रौ सुखं समासीनौ क्षणं स्थितौ । ततः,

दृढवर्मसुतः शस्ते मुहूर्ते गणकोदिते । गजपृष्ठप्रतिष्ठेन भूमिभर्त्राग्रयायिना ॥ २० ॥
दुर्वारैर्वारणैरश्ववारैर्वारितवैरिभिः । मनोरमैः स्यन्दनौघैः संनद्धैः सुभटैः समम् ॥ २१ ॥
प्रवाद्यमाननिःस्वानुस्वानडम्बरिताम्बरः । विधीयमानमाङ्गल्योपचारश्चतुराग्रिमैः ॥ २२ ॥
आकर्णयञ्शुभाकर्णिबन्दिवृन्दभवां स्तुतिम् । वनीपकानां दीनानां ददद्दानं पदे पदे ॥ २३ ॥
जयकुञ्जरमारूढः पश्यन् मञ्चान् प्रपञ्चितान् । मुक्तावचूलसश्रीकविचित्रोल्लोचरोचितान् ॥ २४ ॥
वृद्धाङ्गनाशिषो गृह्णन् प्रतीच्छन्नक्षताक्षतान् । समाससाद प्रासादं विशदं सप्तभूमिकम् ॥ २५ ॥
षड्भिः कुलकम् ॥

§ ९ ) तस्मिन्नेव मुहूर्ते श्रीदृढवर्मणा कनकमयासने निवेश्य कुमारस्य जयजयशब्दपूर्यमाणनभस्तलं चारुचामीकरविरचितैः कलशैः सत्तीर्थसमानीतोदकसंभृतैः सर्वलोकप्रत्यक्षं युवराजपदाभिषेकश्चक्रे । ततस्तेन राजलोकेन नमस्कृतः कुमारः । राज्ञा प्रोक्तम् । 'वत्स कुमार, पुण्यवानस्मि, यस्य भवादृशास्तनुजः । अद्यैव चिरसंचितो मनोरथरथः परां प्रमाणकोटिमधिरूढः । अतः प्रभृति त्वमेव राज्यभारधौरेयः ।

ततः प्रीतिप्रकर्षेण रोमहर्षयुतो नृपः । राज्यप्रधानप्रत्यक्षं तनूजं समशिक्षयत् ॥ २६ ॥
राज्यभारधुराधुर्ये वर्ये वत्स गुणैस्त्वयि । अद्यापि न परं लोकं साधये तेन मे त्रपा ॥ २७ ॥
विश्वम्भरायास्त्वय्यद्यावनं कलितयौवने । मयि वत्स पुनर्युक्तं वनं गलितयौवने ॥ २८ ॥
परं भोगफलस्यास्य कर्मणः शेषमस्ति मे । यावत्तावत्त्वया राज्ये भूयतां सहकारिणा' ॥ २९ ॥

कुमारोऽपि पादौ प्रणम्य प्रोवाच । 'यत्किंचित्तातः स्वयमादिशति तदवश्यं मया विधेयम्' इति । ततः कुवलयमालया गुरुजनस्य प्रणतिश्चक्रे । गुरुजनेनाप्यभिनन्दिताशीर्वचोभिः । कुमारोऽथ यौवराज्यपदं पालयन् स्वगुणैः सर्वसंमतो बभूव । अपि च ।

स्मितैर्निरीक्षितैस्तस्य चरितैर्जल्पितैरयम् । राजलोकः समग्रोऽपि सर्वदानन्दभूरभूत् ॥ ३० ॥
धिनोत्यखण्डधाराभिर्धरां धाराधरो यथा । तथायमर्थसंघातैरत्यर्थं सार्थमर्थिनाम् ॥ ३१ ॥

§ १० ) ततश्च कियत्यपि गते काले सुखसंदर्भमये व्यतीते राज्ञा भणितम् । 'वत्स कुवलयचन्द्र, एष कालो मम धर्मस्याराधने ततस्त्वं करोसि ।' कुमारेण प्रोक्तम् । 'महाराज, युक्तमुक्तम्, परमेकं पुनर्विज्ञपये धर्मः कुलोचित एव कर्तव्यः ।' राज्ञोक्तम् । 'बहवो धर्मोपायाः, कोऽयं कुलोचितः ।' कुमारेणोक्तम् । 'य इक्ष्वाकुवंश्यैः पूर्वजैः कृतः स एवोचितः ।' तदाकर्ण्य राजा धर्मपरीक्षार्थं देवतागृहे कुलदेवतां श्रियमाराधयामास । ततस्तस्य राज्ञः कुसुमस्रस्तरे स्थितस्य षड् यामा व्यतीताः । अथ निशीथे गगनतले वाणी समुल्ललास । 'भो नरेश, यदि भवतो धर्मसारेण कार्यं तत इक्ष्वाकुवंश्यकुलधर्मं गृहाण ।' इति वदन्त्या कुलदेवतया श्रिया प्रत्यक्षीभूय हेमपट्टिकाखण्डं ब्राह्मीलिपिसनाथं समर्प्यान्तर्धानं विदधे । तन्निरीक्ष्य नरेश्वरः प्रमुदितः प्रगे कुमारमाकार्य सर्वमपि निशावृत्तं निवेदयामास । ततः कुमारः पित्रादेशेन तत्र लिपिं वाचयितुं प्रवृत्त इति ।

'ज्ञानदर्शनचारित्ररत्नत्रयमनुत्तरम् । साधनं मोक्षमार्गस्य निधानं शिवशर्मणाम् ॥ ३२ ॥
न हिंसा यत्र नासत्यं न स्तेयं ब्रह्मपालनम् । परिग्रहप्रमाणं च रात्रिभोजननिर्वृतिः ॥ ३३ ॥
सर्वदोषविनिर्मुक्तो यत्र देवो जिनेश्वरः । महाव्रतधरो धीरो गुरुर्धर्मोपदेशकः ॥ ३४ ॥
पूर्वापराविरुद्धश्चागमः श्रीशिवसंगमः । मुक्तये धर्म एवायं प्रतीपस्तु भवभ्रमौ ॥ ३५ ॥'

§ ११ ) एवं वाचिते धर्मस्वरूपे राज्ञोक्तम् । 'अहो, अनुगृहीता वयं भगवत्या कुलदेवतया । एतत्पुनर्न ज्ञायते, के ते धर्मपुरुषाः, येषामेष धर्मः ।' कुमारेणोक्तम् । 'दर्शनान्याकार्य धर्मपृच्छा विधीयते, यस्य कस्यचिद्धर्म एतल्लिपिसंवादी भवति स एव साध्यते ।' ततो भूपतिर्दर्शनप्रधानपुरुषानाकार्य यथा-

1 ) B वत्स तवातीव ( on the margin ). 8 ) B दुर्वारिवारणै°.

1 स्थानं निवेश्य धर्मं पप्रच्छ। सर्वैरपि निजनिजागमानुसारेण धर्मो निवेदितः परं तस्य चेतसि स्थितिं न 1
बबन्ध। ततो राज्ञा जैनमुनयः पृष्टाः। 'यूयं निजं धर्मं निवेदयत।' ततो गुरुणा 'यो धर्मः कुलदेवतया
3 निवेदितः स एव धर्मो धर्मसारः' इति प्ररूपितः। ततो भूपः कुमारं विलोक्य बभाषे। 'सम्यगेवैष मोक्ष- 3
मार्गक्षम इति। सर्वेषामपि धर्माणामेष एव मुख्यः। एष एव कुलदेवतया दत्तः। इक्ष्वाकूणामयमेव
कुलधर्मः।' कुमारेण विज्ञप्तम्। 'यदाहं तुरङ्गमाविष्टस्तदैतस्यैव धर्मस्य बोधार्थं देवेनापहृतः। मयारण्ये
6 मुनिसिंहदेवा विलोकिताः पूर्वभवसंगताः पूर्वभवे ऽप्यमुमेव धर्ममाराध्य ते स्वर्गं गतवन्तः। तैरप्येनं 6
धर्मं निवेद्य कुवलयमालाबोधार्थमस्मि प्रेषितः। येन च शुकेन तं देशं गतानामस्माकं प्रवृत्तिर्भवतां पुरो
निवेदिता तेनाप्ययमेव सार्वज्ञो धर्मो दृष्टः।

9 रजोहृतिः कराम्भोजं भेजे यस्य नरेश्वरः। पुरन्दरो ऽपि तं स्तौति सादरं विगतादरम् ॥ ३६ ॥ 9
स्वयं स्वामी जगन्नाथ पाथोनाथः कृपाम्बुनः। सभायामादिशद्धर्ममसुमेव जिनेश्वरः ॥ ३७ ॥
साधवो ऽपि मया दृष्टा धर्मे ऽत्र स्थितिशालिनः। उत्पाद्य केवलज्ञानं महोदयपदं ययुः ॥ ३८ ॥
12 तेन विज्ञप्यसे तात जैनधर्मः सुशर्मदः। सर्वेषामेव धर्माणामयमेव मनोरमः ॥ ३९ ॥ 12
दुर्वारवारणाकीर्णं रङ्गत्तुङ्गतुरङ्गमम्। भवेद्राज्यमपि प्राज्यं न धर्मस्तु जिनोदितः ॥ ४० ॥

§ १२) तावद्देव भवता भवतापहारी दुर्लभो जिनधर्मः प्राप्तस्ततो निपुणेन त्वयायं विधेयः।' राजा
15 'तथा' इति प्रतिपद्य प्रोवाच। 'अहो, सत्यमेतद्यदेष धर्ममार्गो दुर्लभः। तथा वयं पलितकलितशिरसः 15
संजाताः परं धर्माणामन्तरं नावगतम्'। 'भोस्तपोधनाः, तत्रभवतां भवतां स्थानं न वयं जानीमः।' गुरु-
णोक्तम्। 'राजन्, बाह्योद्याने कुसुमगृहचैत्ये ऽस्ति।' राज्ञोक्तम्। 'व्रजत यूयं स्थानं कुरुत कर्तव्यानि,
18 प्रभाते समेष्यामि' इति वदन् कुमारमहेन्द्राभ्यां समं क्ष्मापतिरुत्तस्थौ साधवो ऽपि स्वं स्थानमलंचक्रुः। 18
ततो दृढवर्मावशेषमपि भवस्वरूपं मायागोलकमिव, इन्द्रजालमिव, आदर्शप्रतिबिम्बमिव नेत्ररोगि-
विभावरीवरयुगलावलोकनमिव, मरुमरीचिकानिचयाद्यभासनमिव गन्धर्वपुरनिरूपणमिव, अविचारित-
21 रामणीयकमिवाकिंचित्करमनुपादेयं विचिन्त्य संजातवैराग्यः कुवलयचन्द्राय सप्ताङ्गं राज्यं ददौ, इति 21
च शिक्षां तं प्रति जगाद। 'वत्स कुवलयचन्द्र, ज्ञातयुक्तायुक्तस्य पठितसर्वशास्त्रसार्थस्य तव धवलित-
धवलनमिव पिष्टपेषणमिव विभूषितविभूषणमिव शिक्षाप्रदानं, परं पुत्रप्रीतिर्मां मुखरयति।

24 दुरन्तदुरितोपायाश्चपलाश्चपलास्तथा। स्त्रियः श्रियश्च तत् क्वापि मा भूयास्तद्वशंवदः ॥ ४१ ॥ 24
उच्चैस्तरं पदं प्राप्य त्वया कार्यविदा सदा। गुरवो न लघुत्वेन दर्शनीयाः कदाचन ॥ ४२ ॥
त्वया बद्धानुरागेण पालनीया निजाः प्रजाः। यतः प्रजालता नीतिनीरसिक्ताः फलन्त्यमूः ॥ ४३ ॥
27 अन्तरङ्गारिषड्वर्गजयाय भवतादरः। शास्त्रे शस्त्रे च कर्तव्यो बहिरङ्गारिशान्तये ॥ ४४ ॥ 27
आराध्या सर्वदा विद्यानवद्याः स्थविरास्त्वया। मज्जतां व्यसनाम्भोधौ वृद्धसेवा हि मज्जिनी ॥ ४५ ॥
राज्यश्रीः काममाहेयी न्यायगोभक्तपोषिता। निकामं कामदुग्धानि प्रसूते वसुधाभुजाम् ॥ ४६ ॥

30 § १३) इति शिक्षां दत्त्वा दत्तदीनजनदानः संमानितस्वजनः कृतचैत्याष्टाहिकामहः सुतकारितां 30
शिबिकामारुह्य नृपो गत्वा कुसुमगृहचैत्ये तस्यैव गुरोरन्तिके प्राव्राजीत्। तदग्रे करुणावता गुरुणा
मनुष्यभवोपरि युगसमिलापरमाणुदृष्टान्तौ प्ररूपितौ। तथा हि।

33 समग्रद्वीपवार्धीनां पर्यन्ते ऽस्ति महोदधिः। स्वयंभूरमणो नाम वलयाकारतां गतः ॥ ४७ ॥ 33
देवः को ऽपि युगं प्राच्यां प्रतीच्यां समिलां पुनः। स्थापयेदथ सा भ्रष्टा जले तत्रातलस्पृशि ॥ ४८ ॥
अपारे चानिवारे च परितो ऽपि चलाचला। युगे चलाचले योगं लभते न कथंचन ॥ ४९ ॥ युग्मम् ॥
36 प्रचण्डवातवीचीभिः प्रेरिता सा कथंचन। युगे न लभते योगं जन्तुर्न तु जनुर्नृणाम् ॥ ५० ॥ 36

[युगसमिलादृष्टान्तः।]

तथाहि त्रिदशः कश्चिदारासनदृषन्मयम्। स्तम्भं महान्तमाचूर्य दृग्निक्षेपनिभं व्यधात् ॥ ५१ ॥
39 तच्चूर्णं स समादाय तूर्णं गत्वा सुराचले। चूलिकायामवस्थाय नलिकां स्वकरे ऽकरोत् ॥ ५२ ॥ 39
तत्रस्थितेन फूत्कृत्य तया ते प्रचुरौजसा। ते ऽणवः पातिताः सर्वे दिशासु चतसृष्वपि ॥ ५३ ॥
कल्पान्तकालप्रोन्मीलदुद्दाममरुता हताः। सर्वे ऽपि पश्यतस्तस्यादृश्यास्ते जज्ञिरे क्षणात् ॥ ५४ ॥

5) P B तुरंगमाविश्य एतस्यैव. 8) P सर्वज्ञो धर्मः. 9) B नरेश्वर, B विन (ने?) यादरं for विगतादरं. 10) B जगन्नाथः. 19) B नेत्ररोगिणा (णा added above the line) विभावरी. 21) B सप्तांगराज्यं. 30) B °चैत्याष्टाहिकस्तत्कारितां. 36) C adds here [युगसमिलादृष्टान्तः] at the end of verse No, 50. 39) P om. स. 40) P पूत्कृत्य, B ति for ते.

1 सुपर्वपर्वतभ्रष्टैस्तैरेव परमाणुभिः । स सुपर्वापि नो कर्तुं समर्थस्तं पुनर्यथा ॥ ५५ ॥
दुष्कर्मवशतो भ्रष्टस्तथा मानुषजन्मनि । निस्तुषं मानुषं जन्म जन्मी न लभते पुनः ॥ ५६ ॥
3 परमाणुदृष्टान्तः ।

ततः स राजर्षिर्द्विविधशिक्षाविचक्षणः चारुचारित्रं समाचरन् गुरुणा सह विजहार । कुवलयचन्द्रस्यापि निखिलभूपालमण्डलीमुकुटकोटिनिघृष्टचरणारविन्दस्य विपुलामासमुद्रमेखलां पालयतः प्रभूता वासरा 6 व्यतीयुः ।

§ १४ ) अत्रान्तरे पद्मकेसरसुरः स्वानि च्यवनचिह्नानि परिज्ञाय दुर्मनाश्चिन्तयामास ।
'खेदं मा व्रज जीव त्वं दीनत्वं हृदि मा व्यधाः । तावदेव हि भुज्येत यावदायुरुपार्जितम्' ॥ ५७ ॥
9 ततः संप्रति कालोचितं क्रियत इत्यागत्यायोध्यायां सुरः कुवलयचन्द्र–कुवलयमालयोः पुरः कथयामासेति । 'यथामुकमासे ऽमुकदिवसे युवयोः सूनुर्भविष्यामि तावदिमानि पद्मकेसरनामाङ्कितानि कटककुण्डलहारार्धहारादीनि भूषणानि स्वीक्रियन्ताम् । तानि च प्रसृतबुद्धिविस्तरस्य मम तनौ 12 निवेश्यानि, येनैतानि चिरपरिचितानि प्रेक्षमाणस्य मम जातिस्मृतिरुत्पद्यते' इत्युदित्वार्पयित्वा च त्रिदशः स्वस्थानमागतः । ततः कियद्भिर्दिनैः सुरश्च्युत्वा कुवलयमालाया गर्भे सुतत्वेनोदपद्यत । ततः सापि समये पवित्रं पुत्रं प्रासूत । पित्रा मध्ये पुरं विरचय्य वर्धापनकमहोत्सवे संजाते द्वादशे दिवसे 15 तस्य मुनिना पूर्वमुदितमभिधानं 'पृथ्वीसारः' इति विदधे । स कुमारः कलाकलापेन यौवनेन च स्वीचक्रे । तस्य पितृभ्यां तान्याभरणानि समर्पितानि । तानि पश्यत एव तस्य प्रागपि क्वापि दृष्टान्येतानीत्यूहापोहवतो मूर्छाजनि, जातिं च सस्मार । ततः शीतेन तोयेन वायुना चाश्वासितो लब्धचैतन्यो 18 दध्याविति । 'अहो, तत्र तानि सुखान्यनुभूय पुनरीदृशानि तुच्छानि मनुजजन्मजातानि जीवो ऽभिलषति, इति धिग् मोहं धिक् च संसारावासं यत्र निरन्तरमाधिव्याधिव्यथितो जनः, तदहं संसारदुःखपरंपरापराभवविधायिनीं प्रव्रज्यां गृहीत्वात्मानं साधयिष्ये' इति चिन्तयन् स वयस्यैर्भणितः । 'कुमार, तव 21 स्वस्थशरीरस्य किमेतदत्याहितम् ।' तेनोक्तम् । 'ममाजीर्णविकारेणैषा भ्रमिरुत्पन्ना, तेन न पुनरात्मस्वभावो निवेदितः ।' एवं व्रजत्सु दिनेषु कुवलयचन्द्रेणोक्तम् । 'कुमार, राज्यं गृहाण, अहं प्रव्रज्यां ग्रहीष्ये । कुमारेणोक्तम् । 'महाराज, त्वमेव राज्यं प्रतिपालय, अहं पुनर्दीक्षां स्वीकरिष्ये ।' राज्ञादिष्टम् । 24 'अद्यापि बालस्त्वं राज्यसुखमनुभव, वयं पुनर्भुक्तभोगा दीक्षां ग्रहीष्यामः' इति कुमारं प्रतिबोध्य भूपतिर्निर्विण्णकामभोगः प्रव्रज्याग्रहणमनाः कस्यापि गुरोरागमनमभिलषंस्तस्थौ । अन्यदिने दत्तमहादानः संमानिताशेषपरिजनः कुवलयमालया समं धर्मवार्तां वितन्वानः क्ष्माधनः सुप्त्वा पाश्चात्यया- 27 मिनीयामे प्रथममेव प्रबुद्धश्चिन्तयामासेति ।

§ १५ ) 'दुष्प्रापं प्राप्य मानुष्यं दक्षिणावर्तशङ्खवत् । विचारचतुरैश्चिन्त्या हेयोपादेयहेतवः ॥ ५८ ॥
मानुषत्वमतिश्रेष्ठं कुले जन्म विशेषतः । धर्मः कृपामयो जैनस्त्रयमेतद्धि दुर्लभम् ॥ ५९ ॥
30 धन्यास्ते पुण्यभाजस्ते निस्तीर्णैस्तैर्भवार्णवः । ये संगमपरित्यागनिगमाध्वगतां ययुः ॥ ६० ॥
त एव कृतिनो ऽभूवन् भुवनश्रीविशेषकाः । जिनेन्द्रजल्पिता सर्वविरतिर्यैरलंकृता ॥ ६१ ॥
धन्यानि तानि क्षेत्राणि यत्र जैनमुनीश्वराः । भ्रमन्ति विभ्रमत्यक्ता मुक्ताहाराः शुभाशयाः ॥ ६२ ॥
33 पुण्यतिथिस्तिथिः सा का सा वा वारो ऽपि कः स च । तन्मुहूर्तं च किं भावि ममामोदप्रमोदकृत् ॥६३॥
यस्मिन् पवित्रचारित्रचित्रभानुप्रभोदयात् । मन्मनःसरसीजन्म स्मेरतामुपयास्यति ॥ ६४ ॥ युग्मम् ॥
प्रधानधान्यतो येन दीक्षाशिक्षाशिलोपरि । क्षालयिष्ये मनोवासः कुवासमलिनं कदा' ॥ ६५ ॥
36 इति चिन्तयतस्तस्य भूपतेः प्राभातिकमङ्गलपाठकः पपाठ ।
'हतसंतमसानीकः पातितनक्षत्रसुभटसंघातः । प्रसृतप्रतापनिकरः शूरः पृथिवीपतिरुदेति' ॥ ६६ ॥
एतदाकर्ण्य राज्ञा चिन्तितम् । 'अहो, सुन्दरोपश्रुतिः सुतराज्याय ।
39 नमस्ते लोकनिर्मुक्त नमस्ते द्वेषवर्जित । नमस्ते जितमोहेन्द्र नमस्ते ज्ञानभास्कर' ॥ ६७ ॥
इति वदन् भूपतिः शयनीयादुत्तस्थौ । ततो 'नमो जिनेन्द्रेभ्यः' इति वदन्ती संभ्रमपरा त्रिदशतटिनी-

2 ) B मानुषजन्मनः ( partly on the margin ). 5 ) C चरणारवृन्दस्य, B adds समुद्रं before समुद्रमेखलां, P चालयतः for पालयतः. 13 ) B inter. पवित्रं & पुत्रं. 14 ) B °महोत्सवं. 24 ) P B om. दीक्षां ग्रहीष्यामः. 25 ) P महादानसन्मानिताशेष, P वितन्वत for वितन्वानः, B adds सुष्वाप before सुप्त्वा, 33 ) P C स for सा वा.

पुलिनकल्पात्तल्पादुत्थाय कुवलयमाला पतिं प्रति प्रोवाच। 'एतावतीं वेलां यावद्धोस्वामिना किं चिन्तितम्।' राज्ञा जल्पितम्। 'पृथ्वीसारं कुमारं राज्ये निवेश्य प्रव्रज्याग्रहणेनात्मानं साधयिष्ये' इति। तया प्रोक्तम्। 'यदा विजयापुर्या आवां निःसृतौ तदा प्रियेण प्रवचनदेवता विज्ञप्ता, यदि भगवति जीवन्तं तातं परिपश्यामि राज्याभिषेकं च प्राप्नोमि ततः पश्चात्तनुजं राज्ये निवेश्य व्रतं गृह्णामि, ततो देवि शकुनोत्तमं विधेहि' इत्युदिते केनचिन्नरेणातपत्रमुपढौकितम्। ततः स्वामिना जल्पितम्। 'दयिते, प्रकृष्टमेतच्छकुनं सर्वापि संपत्तिः संततिश्चास्माकं भाविनी' इति तत्सत्यं जातम्। सांप्रतं प्रव्रज्यापालनस्यानुध्यानं ततो युक्तमेव। ततस्तयाभ्यधायि। 'धर्मस्य त्वरिता गतिः', अतो देव, कथं विलम्बः, त्वरितमेवात्महितं वितन्यते'। राज्ञोक्तम्। 'देवि, यद्येवं ततः कुत्रचिद्गुरवो विलोक्या येन यथा चिन्तितं प्रमाणपदवीमध्यारोहति।'

§ १६ ) ततः प्राभातिकं कृत्यं विधाय भूनायकस्तत्रैव दिने पृथ्वीसारं कुमारं राज्ये ऽभिषिच्य द्वितीयदिवसे शिरोगृहासनस्थौ नभोमध्यमध्यासीने नभोमणौ साधुयुगलं भिक्षार्थं भ्रमन्तं रथ्यामुखे वीक्ष्य प्रासादादुत्तीर्य सुखासनाधिरूढः कियज्जनावृतो गत्वा प्रणिपत्य प्रोवाच। युवयोर्निरामयः कायः।' साधुभ्यामुक्तम्। 'कुशलमावयोर्गुरूणां चरणस्मरणप्रवीणान्तःकरणयोः'। राज्ञोक्तम्। 'गुरूणां किमभिधानम्।' ताभ्यामुक्तम्। 'इक्ष्वाकुवंश्यः प्राप्तगुरुविनयसकलशास्त्रार्थः कन्दर्पदर्पसर्पसर्पारिर्दर्पफलिकाख्यो गुरुः।' राज्ञोक्तम्। 'भगवान्, किमु स अस्मत्संबन्धी रत्नमुकुटस्य राजर्षेः पुत्रो दर्पफलिकः, किं वापरः' इति। साधुभ्यामुक्तम्। 'स एव'। राज्ञा भणितम्। 'कस्मिन् स्थाने तिष्ठन्ति'। ताभ्यामुक्तम्। 'राजन्, संसारमरुतरवस्ते गुरवः प्रधाने मनोरमोद्याने समवसृताः सन्ति' इत्युदित्वा मुनियुगलं विचर्य स्वस्थानमाजगाम। नृपतिरपि प्रासादमासाद्य कुवलयमाला महेन्द्रस्य च पुरो वृत्तान्तं सर्वमपि निवेदयामास। अद्य स चैवास्मज्ज्ञाता दर्पफलिकः संपन्नाचार्यपदः समवसृतः। ततः कुवलयचन्द्रः कुवलयमालया महेन्द्रेण च समं मनोरमोद्याने समागत्य भगवन्तं दर्पफलिकं प्रणिपत्य पप्रच्छ। 'तदा भगवन्, भवन्तश्चिन्तामणिपल्लीतो निःसृत्य कस्य गुरोरन्तिके प्रव्रजिताः।' ततो भगवानुवाच। 'महाराज, तदा ततो निर्गत्य मया श्रीभृगुकच्छं गतेन मुनिरेको ददृशे'। तेन मुनिना प्रोक्तम्। 'भो दर्पफलिक राजपुत्र, मामभिजानासि।' मयोक्तम्। 'भवन्तं सम्यग् नोपलक्षये।' तेनोक्तम्। 'केन तव तच्चिन्तामणिपल्लीराज्यं दत्तम्।' मयोक्तम्। 'भगवन्, किं भवान् सः।' तेनोक्तम् 'एवमेव'। मयोक्तम्। 'यथा तदा त्वया राज्यं दत्तं तथा संप्रति संयमराज्यदानेन प्रसादं तनु।' तेनोक्तम्। 'यद्येवं ततः कथं विलम्बः।' तदा तेन मुनिना व्रतं दत्तम्। तेन सह विहारं कुर्वाणो ऽयोध्यायामागतवान्। तत्र च तव पिता दृढवर्मा तदन्तिके निष्क्रान्तः। स च मम गुरुस्तव जनकश्चोत्पन्नकेवलज्ञानौ सम्मेतशैलोपरि द्वावपि सिद्धिपदमीयतुः। अहं पुनर्भवत्प्रतिबोधाय समागमम्।' तत एवं पिशुनसंगतिमिव लीलावतीलोचनप्रान्तमिव महाबलान्दोलितकदलीदलमिव शरत्समयघनाघनपटलमिव सुरेश्वरशरासनमिव चपलस्वभावं पदार्थजातं परिज्ञाय तत्पदान्ते कुवलयचन्द्रः कुवलयमालया महेन्द्रेण च समं व्रतं जग्राह। कुवलयमालाप्यागमानुसारेण तपस्तप्त्वा सौधर्मे नाके सागरोपमद्वयस्थित्यायुस्त्रिदशः समभवत्। कुवलयचन्द्रो ऽपि समाधिना विपद्य तत्रैव विमाने तत्प्रमाणायुः समुदपद्यत। सिंहो ऽप्यनशनकर्मणा तत्रैव देवो जातो ऽस्ति। स च भगवानवधिज्ञानी सागरदत्तमुनिर्मृत्वा तस्मिन्नेव स्थाने सुरः समजायत।

§ १७ ) अथ पृथ्वीसारः कियत्कालान्तरं राज्यसुखमनुभूय विरचितमनोरथादित्यनामतनुजराज्याभिषेकः संसारमहाराक्षसभयभ्रान्तस्वान्तः परिज्ञाय भोगान् भोगिभोगोपमान् गुरूणां चरणमूले प्रव्रज्य कृतश्रामण्यः प्रदत्तमिथ्यादुष्कृतः पञ्चत्वमवाप्य तत्रैव विमाने सुधाशनो ऽजनिष्ट। एवं ते पञ्चापि तत्रैव वरविमाने कृतसुकृताः समुत्पन्नाः। परस्परं ते विज्ञातपूर्वनिर्मितसङ्केता जल्पितुं प्रवृत्ताः। 'दुस्तरं संसारसागरमवगम्य यथा पूर्वं तथाधुनापि सकलसुरासुरनरसिद्धिसुखदायिनि भगवत्प्रणीते सम्यक्त्वे यत्न एव कार्यः। इतो ऽपि च्युतैरात्मभिः पूर्ववत्प्रतिबोधपरैः परस्परमेव भाव्यम्।' तथेति प्रतिपन्ने तैस्तेषां कालो व्यतिक्रामति।

अथो जम्बूद्वीपे दक्षिणभरते ऽस्यामेवावसर्पिण्यां युगादिजिनादितीर्थनाथेषु मोक्षं गतेषु सत्सु ततः समुत्पन्ने चरमजिने श्रीमहावीरे पूर्वं कुवलयचन्द्रदेवः स्वमायुः परिपाल्य स्वर्गतश्च्युत्वा काकन्दी-

1 ) P B om. पतिं प्रति. 2 ) B पृथ्वीसारकुमारं. 4 ) B पश्यामि for परिपश्यामि, P प्राप्नोति for प्राप्नोमि. 5 ) P यदि ते for दयिते. 18 ) P B जगाद for निवेदयामास. 36 ) P °मिथ्यादुःकृतः संसारमहाराक्षसभयभ्रांतस्वांतः परिज्ञाय भोगोपमान। गुरूणां चरणमूले पंचत्वमवाप्य तत्रैव वरविमाने कृताः समुत्पन्नाः।. 37 ) B दुरुत्तरं दुस्तरं.

पुर्यां प्रणतजनकुमुदामन्दप्रमोदकौमुदीशस्य शत्रुजनकुञ्जरकण्ठीरवस्य सत्पथजाङ्घिकस्य काञ्चनरथस्य पृथ्वीपतेरिन्दीवरलोचनाभिधानप्रणयिनीकुक्षिभवो मणिरथकुमारस्तनयः समभवत् । स च क्रमेण प्राप्तयौवनो गुरुजनैः प्रतिषिद्धो ऽपि वयस्यैर्निवारितो ऽपि सद्भिर्निन्द्यमानो ऽपि कर्मोदयेन नक्तंदिवा पापर्द्धिं कुर्वन्न विरमति । अन्यदा च तस्यारण्ये प्रविष्टस्य श्रीवर्धमानजिनः केवलज्ञानशाली जगत्त्रयपतिः पवित्रितत्रिभुवनतलः काकन्द्यां समवसृतः । ततश्चतुर्विधदेवनिकायैः समवसरणं चक्रे । तत्र च श्रीमहावीरः स्वयं गौतमादीनां गणभृतां सौधर्माधिपतेरपरस्य च सुरासुरनिकरस्य सपरिजनस्य काञ्चनरथस्य नरेशितुः पुरः सम्यक्त्वमूलं धर्मं द्विविधं निवेदितुमारेभे ।

शङ्कादिदोषरहितं स्थैर्यादिगुणभूषितम् । पञ्चभिर्लक्षणैर्लक्ष्यं सम्यक्त्वं शिवशर्मणे ॥ ६८
आर्जवं मार्दवं क्षान्तिः सत्यं शौचं तपो यमः । ब्रह्माकिञ्चनता मुक्तिर्यतिधर्मः प्रकीर्तितः ॥ ६९
अहिंसादीनि पञ्चाणुव्रतानि च गुणत्रयम् । शिक्षापदानि चत्वारि गृहिधर्मः कुकर्महृत् ॥ ७०

§१८) इतश्चावसरं मत्वा तत्त्वानुगामिना प्रभूतजन्तुवधजातपातकाशङ्किना कृताञ्जलिना काञ्चनरथेन राज्ञा पृष्टम् । 'नाथ, मणिरथकुमारो भव्यः किमभव्यश्च' इति । भगवतादिष्टम् । 'अयं भव्यश्चरमशरीरश्च' इति । नृपेण विज्ञप्तम् । 'भगवन्, यद्ययमन्तिमतनुस्ततः कथमनेकधा निषिध्यमानो ऽप्याखेटकव्यसनतो न निवर्तते, कदा पुनस्तस्य जिनधर्मे बोधिः ।' तीर्थकृतोक्तम् । 'भद्र, त्वत्सूनुः प्रबुद्धः प्राप्तसंवेगरङ्ग इहैव प्रस्थितः' इति । नृपेणोक्तम् । 'नाथ, केन वृत्तान्तेन तस्य वैराग्यमजायत ।' जगन्नाथेन समादिष्टम् । 'इतो ऽस्ति योजनप्रमाणे भूमिभागे कौशाम्बं नाम वनम् । तत्र च बहवः कुरङ्गशूकरशशकसंघाताः परिवसन्तीति मत्वा कुमारः पापर्द्धिनिमित्तमागतः । तत्र च तेन भ्रमता एकस्मिन् प्रदेशे सारङ्गयूथमालोक्य कोदण्डमारोप्य यावच्छरः सज्जीकृतस्तावत्सर्वमपि मृगकुलं काकनाशं ननाश । परं तदैकाकिनी मृगी कुमारं चिरमभिवीक्ष्य दीर्घं निःश्वस्य निष्पन्दलोचना संजातहृदयविश्रम्भा निःशङ्का स्थिता । तां च तथावस्थितां दृष्ट्वा कुमारेण चिन्तितम् । 'अहो, महत्कौतुकम्, एतस्मिन् हरिणयूथे प्रनष्टे ऽपि परमियं मृगी मदभिमुखं पश्यन्ती तथैव तिष्ठति' इति चिन्तयतस्तस्याभ्यासं सा समुपेयुषी । ततः सानेकश्वापदजीवान्तकरमर्धचन्द्रमालोक्यापि स्नेहनिर्भरहृदयेव स्थिता । ततः कुमारेण शरासनं शरश्चाभाञ्जि । 'यो ऽपराधरहितान् जन्तून्निहन्ति स महापापी' इत्येवं चिन्तयता प्रादुर्भूतजन्तुजातकारुण्यमैत्रीपूरितचेतसा तेन सा हरिणी सहर्षं करतलेन पस्पृशे ।

यथा यथा तदङ्गं स सरङ्गं स्पृशति स्फुटम् । तथा तथासौ जायेत बाष्पाविलविलोचना ॥ ७१

ततस्तस्या विलोकनेन कुमारस्य दृग्भ्यां विकसितं सर्वाङ्गं रोमाञ्चकञ्चुकः प्रससार । चेतसि परमः प्रमोदः प्रवृत्तः । ज्ञातं यथा काप्येषा मम पूर्वसंबन्धिनीति ।

ज्ञानं मन्ये दृशोरेव नापरस्य च कस्यचित् । प्रमोदेते प्रिये दृष्टे दृष्टे संकुचतो ऽप्रिये ॥ ७२

'जन्मान्तरे का ममैषासीत्' इति ध्यायतस्तस्य हृदि स्थितम् । अद्यैव तातः काकन्दीं चम्पापुर्या आयातः । अत्र च किल भगवान् श्रीमहावीरः समवसृतः । 'तस्य वन्दनानिमित्तं तत्राहमपि गमिष्यामि, येनैतद्वृत्तान्तं पृच्छामि, कैषा मृगवधूः, अस्माकं जन्मान्तरे कीदृशि संबन्धे आसीत्' इति ध्यायंश्चलितः । 'स मृगी च सांप्रतं समवसरणबाह्यप्राकारगोपुरान्तरे द्वावपि वर्तेते' इति वदतस्तीर्थकृतः पुरो मणिरथकुमारः समागतश्च प्रदक्षिणात्रयं दत्त्वा भगवन्तं नत्वा प्रपच्छेति च । 'भगवान्, निवेदय कैषा कुरङ्गी ममोपरि परमप्रेमधारिणी ।' ततो भगवान् ज्ञातकुलतिलकः सकलजन्तुसंघातबोधाय पूर्वभवं तं तयोराख्यातुमारेभे ।

§१९) अत्रैव भरते साकेतपुरम् । तत्र नाम्ना कान्त्या च मदनो नृपः । तत्सूनुरनङ्गः कुमारः । तत्राढ्यो वैश्रमण इव वैश्रमणः श्रेष्ठी । तदङ्गजः प्रियंकराख्यः, स च सौम्यः सुजनः कुशलस्त्यागी दयालुः श्रद्धालुः । अन्यदा वैश्रमणेन प्रातिवेश्मिकप्रियमित्रपुत्र्या सुन्दर्या सह तनयस्य पाणिग्रहणमकार्यत । द्वयोरपि प्रीतिर्महती जाता । परस्परं स्तोके ऽपि विरहे तन्मिथुनं सोत्सुकचित्तं भवति । अन्यदा च भवितव्यतयापटुतरशरीरे प्रियंकरे सा सुन्दरी बहुतरशोकशङ्कव्यथिता न भुनक्ति न स्नाति न जल्पति न गृहकृत्यं करोति, केवलं संभावितदयितपञ्चताधिकाभ्यन्तरतापलोचनप्रवर्तमानबाष्पजललवा विषीदन्ती स्थिता । ततस्तथाविधकर्मसंयोगेन क्षीणे प्राणिते प्रियंकरः परलोकमियाय । ततस्तं मृतं विलोक्य

---

11 > B तत्त्वातत्त्वानुगामिना. 14 > P सबुद्धः for प्रबुद्धः 21 > P तिष्ठत इति. 22 > B स्नेहभरनिर्भर ( भर added on the margin ). 23> P B शरश्चाभाजि. 31 > P om. अस्माकं. 37 > B inter. वैश्रमणः & श्रेष्ठी.

1 परिजनो ऽतीवविषण्णमनाः। पिता प्रलपितुमारेभे।

'हा वत्स हा गुणावास हा सौभाग्यनिधे भवान्। प्रियंकर गतः कुत्र देहि प्रतिवचो मम' ॥ ७३

3 स्वजनैस्तच्छवं संस्कारार्थं गृहान्निष्कासितुमारेभे, परं सा सुन्दरी स्नेहमोहितमानसा तत्संस्कारं कर्तुं न ददाति। ततः सा पित्रा मात्रा स्वजनेन च वयस्याभिर्विविधाभिः शिक्षाभिः शिक्षितापि तत्कुणपं न मुञ्चति। केवलं विलपन्ती अराजकमिति वदन्ती सुन्दरी तन्मृतकलेवरमालिङ्ग्य स्थिता।

6 पतिं पश्यति निर्जीवमपि जीवन्तमेव सा। स्नेहे नैव विचारः स्यान्मोहान्धितदृशां यतः ॥ ७४

§२० ) ततो विषण्णमनसा स्वजनेन मान्त्रिकास्तान्त्रिकाश्च समाकारिताः। तैरपि विशेषः को ऽपि न समजनि। स्वजनेन 'इयमयोग्या' इति विचिन्त्य मुक्तास्तथैव तद्दिनं स्थिता। द्वितीयदिवसे तद्देहं 9 श्वयथुना व्याप्तं ततो विगन्धः प्रससार। तथापि सा प्रेमपरवशा मृतकमालिङ्गन्ती परिजनेन निन्द्यमानापि सखीभिर्वार्यमाणाप्येवं चिन्तयामास। 'अयं स्वजन इति जल्पति, 'यदयं मृत इयं च ग्रहिला', ततस्तत्र गन्तव्यं यत्र न को ऽपि स्वजनः' इति ध्यात्वा तच्छवं शिरसि समारोप्य मन्दिरतो निःसृत्य सुन्दरी 12 विस्मयकरुणाबीभत्सहास्यरसवशेन जनेन दृश्यमाना श्मशानमुपाजगाम। तत्र प्रावृतजरच्चीवरगात्रा रेणुधूसरितशरीरा कृतोर्ध्वकेशा महाभैरवव्रतमिवाचरन्ती भिक्षामानीय यत्किंचित्सुन्दरं तत्तदग्रे मुक्त्वा, इति वदति। 'प्रियतम, यत्किंचिद्रम्यतरं तत्त्वं गृहाण पाश्चात्यं यत्किंचिद्विरूपतरं तन्मम देहि' इति प्रोच्य 15 भुङ्क्ते। एवं सा दिने दिने कृताहारा कापालिकबालिकेव राक्षसीव पिशाचीव स्थिता। तदा तत्पित्रा प्रियमित्रेण पुरस्वामी विज्ञप्तः। 'यद्देव, मम सुता ग्रहगृहीतेव वर्तते। तत्तां यदि को ऽपि सकलीकरोति तस्य यथाप्रार्थितमहं ददामि' इति दाप्यतां मध्ये पुरं पटहः। एतत्तेन विज्ञप्यमानं कुमारेण श्रुतं चिन्तितं 18 च। 'अहो, मूढा वराकी ग्रस्ता प्रेमपिशाचेन न पुनरन्येन तदहं बुद्ध्या एतां प्रतिबोधयामि' इति चिन्तयता तेन विज्ञप्तो राजा। 'तात, त्वं यदि समादिशसि तदेतां वणिजः सुतां संबोधयामि।' एवं विज्ञप्ते नृपेण भणितम्। 'वत्स, यदि स्वस्थां कर्तुं शक्नोषि ततो युक्तमेतत्क्रियतामस्य वणिज उपकारः।' 21 ततो राजपुत्रः कमपि नार्याः शवं समानीय तस्याः समीपे मुमुचे। न च सा तेन जल्पिता न च तया सः। यत्किंचित्सा शवस्य करोति तदयमपि करोति। अन्यदा तया भणितम्। 'क एष वृत्तान्तः।' तेनोक्तम्। 'एषा मम प्रियतमा सुरूपा सुभगा किंचिदस्वस्थशरीरा जाता।' ततो लोको वदति। 'यदियं 24 मृता संस्कारार्हा।' मया चिन्तितम्। 'यदयं लोके ऽलीकभाषी ततो मया ततः समानीयास्मिन् श्मशाने मुक्ता।' तयोक्तम्। 'सुन्दरं कृतम्, आवयोः समानस्वभावयोर्मैत्री समभवत्।' यतः "समानशील-व्यसनेषु सख्यम्।" तेन भणितम्। 'त्वं मम स्वसा, एष मम भावुकः। किमभिधानममुष्य।' तया 27 जल्पितम्। 'मम पतिः प्रियंकराभिधः।' तयोक्तम्। 'तव प्रियायाः किं नाम'। तेन निवेदितम्। 'मम प्रिया मायादेवीति नाम।' एवं परस्परसमुत्पन्नसंबन्धौ तौ वर्तेते। यदा सावश्यककृत्यकृते प्रयाति तदा तदभिमुखं वदति। 'यदयं मद्दयितो द्रष्टव्यः।'

30 §२१ ) यदा स कुत्रापि याति तदा तस्यास्तं शवं समर्प्य याति। अन्यदा तेनोक्तम्। 'भगिनि, तव पत्या मम प्रिया किंचिद्भणिता तन्मया सम्यग् नावगतम्।' तयोक्तम्। 'हे जीवेश, त्वत्कृते मया सर्वमपि कुलगृहपितृमातृप्रभृतिकं तृणवत्परित्यक्तं त्वं पुनरीदृशः, यदन्यामङ्गनामभिलषसि' इत्युक्त्वा 33 किंचित्कोपपरा संजाता। पुनरन्यदिवसे सा शवं तस्य समर्प्य नित्यकृते गता। तत्पुनस्तेन शवद्वयमपि कूपे निक्षिप्तम्। ततस्तदनुमार्गमनुसरन्नयं तया भाषितः। 'कस्य त्वया तन्मानुषद्वयमर्पितम्।' तेनापि गदितम्। 'मायादेवी प्रियंकरस्य रक्षानिमित्तमर्पिता, प्रियंकरो मायादेव्याश्च। तदावामपि तत्रैव 36 व्रजावः' इत्युदित्वा तत्र तौ समागतौ प्रियंकरं मायादेवीं च न ददृशतुः। ततः सा दुःखमुपागता। सो ऽपि च्छद्मना मूर्छितः। ततो लब्धचैतन्येन तेनादिष्टम्। 'भगिनि, किं कर्तव्यम्, यत्तव प्रियो मम महेलामादाय कुत्रापि गतः, तत्सुन्दरं तेन नाचरितम्। मदीयमिदमाचरितम्।' ततः सुन्दरी 39 मुग्धस्वभावा चिरं चिन्तयति स्म 'यत्किल तेन मम स्वामिनामुष्य प्रिया हृतान्यत्र नीता च। तत ईदृशो ऽनार्यो निष्कृपो निर्घृणः कृतघ्नश्च, येनेदृशमाचरितम्।' ततस्तेन भणितम्। 'भद्रे, एवंविधे विधेये किं विधेयम्।' तयोक्तम्। 'नास्मि जानामि, भवानेव जानाति किमत्र कर्तव्यम्।' तेनोक्तम्। 'भद्रे, सत्यं

10 ) B सखीभिर्वार्यमाणापि जल्पितुमारभत अयं. 11 ) B वदंती for ध्यात्वा, P तत्सर्वशिरसि. 14 ) B om. प्रोच्य भुङ्क्ते. 30 ) B प्रयाति for याति. 32 ) P हे मज्जीवेश. 33 ) B दिने for दिवसे, B नित्यकृत्यकृते. 35 ) B तेनापि निगदितं, P तत्रैवं. 36 ) B inter. तत्र & तौ. 37 ) P लब्धचेतनेन, B तेन निर्दिष्टं. 41 ) P एवं विधेये तयोक्तं, P सत्यं शृणु.

1 ततः शृणु । सर्वदैक एव जीवः संसारे परिभ्रमन्नस्ति, कः प्रियः, का प्रिया च, सर्वमपि संसारस्वरूपं सौदामिनीव क्षणदृष्टनष्टम् । सर्वथैवानित्यतादिभावनाः समाश्रय । वियोगान्ताः संयोगाः । पतनान्ताः
3 समुच्छ्रयाः । महारोगा इव भोगाः । एष जीवः संसारे चतुरशीतिलक्षसंख्ययोनिषु नट इव विविधरूपभाग्भवतीति ज्ञात्वा सम्यक्त्वमङ्गीकुरु ' एवं च भो मणिरथकुमार, या सुन्दरी प्रबोधिता तेन गृहमुपागता च । तत्पित्रा महोत्सवो रचयांचक्रे । सर्वत्र मध्ये पुरं प्रवृत्तः साधुवादो यदियं सुन्दरी
6 कुमारेण बोधिता । तावद्भो मणिरथकुमार, यः सुन्दरीजीवः स त्वं तदा कृतसम्यक्त्वरत्नयत्नः पञ्चत्वमवाप्य मानभटः संजातः । ततः पद्मसारनामा । ततः कुवलयचन्द्रः । ततो वैडूर्यनामा देवः । ततस्त्वं मणिरथकुमार इति । यः पुनर्वणिक्तनूजः स संसारं परिभ्रम्यास्मिन् वने मृगी समुदपद्यत । त्वां
9 दृष्ट्वोहापोहवत्या अस्याः प्राग्भवस्मरणेन त्वयि स्नेहः समुल्ललास ।' एवं च भगवता निवेदिते मणिरथकुमारेण विज्ञप्तम् । 'एवं ममानेन दुःखावासेन संसारवासेनालं, भगवन्, प्रसादं विधाय मयि प्रव्रज्यारत्नं देहि' इति वदन् कुमारः श्रीभगवता दीक्षितः ।

12 § २२) अत्रान्तरे गौतमेन गणभृता विज्ञप्तम् । 'भगवन्, अस्मिन् संसारे जीवानां मध्ये को जीवो दुःखितः' इति । भगवता समादिष्टम् । 'सम्यग्दृष्टिर्जीवो ऽविरतो नित्यं दुःखित एव ।' गौतमेन भणितम् । 'केन हेतुना ।' भगवता निवेदितम् । 'यः सम्यग्दृष्टिर्भवति स नरकतिर्यग्मनुष्यवेदनां
15 जानाति । ततः पुरतः संसारभावं प्रेक्षते । न च विरतिभावं करोति । अनुभवति वर्धमानसंतापो नरकदुःखमिति । अत एव स दुःखितानामपि दुःखी ।' पुनर्गौतमेन पृष्टम् । 'स्वामिन्, कः सुखी ।' भगवतादिष्टम् । 'सम्यग्दृष्टिर्जीवो विरतः स एव सुखितः । यतः,

18 देवलोकसमं सौख्यं दुःखं च नरकोपमम् । रतानामरतानां च महानरकसंनिभम् ॥ ७५

एवमनेकधा भगवान् विविधजनपृष्टसंदेहसंदोहभङ्गं वितत्य समुत्तस्थौ । ततस्त्रिदशवृन्दमपि स्वस्वस्थानं जगाम । भगवानपि श्रावस्तीं पुरीं प्रति जगाम । सुरैः समवसरणे कृते त्रैलोक्याधिपतिः सिंहासन-
21 मलंचकार । गौतमादयो गणभृतो यथास्थानं निविष्टाः । तत्रत्यो नृपती रत्नाङ्गदो भगवन्तं प्रणिपत्य निषसाद । भगवता संसाराशर्मनाशिनी देशना निर्ममे । अत्रान्तरे गौतमस्वामिना सर्वमपि जानताप्यबोधजनबोधार्थं तीर्थनाथः प्रपच्छे । 'नाथ, जीवस्वरूपं निवेदय ।' ततो भगवता यथावस्थं सर्वमपि
24 जीवस्वरूपं प्ररूपितम् । अथ तत्र बालमृणालकोमलभुजो भुजान्तरराजमानहारसारः कपोलपालिविलसन्मणिकुण्डलः को ऽपि नरस्त्रिदशकुमार इव प्रविश्य जय जयेति वदन् त्रिजगदभिवन्द्यमभिवन्द्य बभाणेति । 'नाथ, यन्मया दृष्टं श्रुतमनुभूतं रजनीमध्ये तदधुना निवेदय, किमिन्द्रजालम्, किं स्वप्नः, सत्यं
27 वा ।' भगवता भणितम् । 'देवानुप्रिय, यत्त्वया दृष्टं तदवितथमेव ।' एतदाकर्ण्य तत्क्षणमेव त्वरितपदं समवसरणान्निःसृतः । ततो गौतमेन पृष्टम् । 'स्वामिन्, किमेतत्, अस्माकमपि महत्कौतुकम् ।' ततस्तीर्थकृतादिष्टम् । 'इतो ऽस्ति नातिदूरे ऽरुणाभं नाम नगरम् । तत्र रत्नगजेन्द्रो नाम नृपतिः । तत्तनुजः
30 कामगजेन्द्रः । स चान्यदा प्रियङ्गुमत्या प्रियया सह मत्तवारणे निविष्टः । ततो नगरगतविभवविलासान् प्रेक्षितुं प्रवृत्तः । ततः कस्मिंश्चिद्वणिग्मन्दिरोपरि कुट्टिमतले कन्यकामेकां कन्दुककेलिं कुर्वतीमद्राक्षीत् । तस्य तदुपरि महानुरागः समुत्पन्नः ।

33 सुरूपे ऽपि कुरूपे ऽपि भवति प्रेम कुत्रचित् । रूपं स्नेहस्य नो हेतुर्वृथा रूपं ततो ऽङ्गिषु ॥ ७६

§ २३ ) तेन पार्श्वस्थितायाः कान्ताया भयेनाकारसंवरणमेव चक्रे । तया तु तत्सर्वमपि लक्षितम् । तस्य राजपुत्रस्य तामेव ध्यायतो महत्युद्वेगे जाते तया चिन्तितम् । 'किं पुनरस्योद्वेगकारणम्, अथवा
36 ज्ञातं सैव वणिक्पुत्री मत्पत्युश्चेतसि स्थिता ।' ततस्तया तां याचयित्वा प्रियः परिणायितः । ततस्तुष्टेन तेनोक्तम् । 'प्रिये, साधु त्वया तदा मम मनोभाव उपलक्षितः । ततस्त्वं ब्रूहि कान्ते, कं ते वरं ददासि ।' तयोक्तम् ।

39 'यत्किंचित्त्वं पश्यसि शृणोषि यद्वानुभवसि यद्दयित । तत्सर्वमपि निवेद्यं मह्यं देयस्त्वयैष वरः' ॥७७

तेनोक्तम् । 'भवत्वेवम् ।' ततो ऽन्यदा तत्र चित्रकृता तस्मै कुमाराय चित्रपटः समर्पितः । तत्र च चित्ताह्लादविधायिनीं चित्रितां कनीमेकां विलोक्य विस्मयस्मेरमनाः कुमारः पप्रच्छ । 'भोश्चित्रकर,

---

1 ) P सर्वदा वैक एव. 3 ) B om. संसारे. 4 ) B om. या. 10 ) P एवं मानेन B एवमनेन. 15 ) P B om. ततः पुरतः etc. to नरकदुःखमिति. 25 ) C त्रिजगदभिवंद्य. 29 ) C नाम भूपतिः 31 ) P B प्रेषितुं for प्रेक्षितुं. 32 ) B महाननुरागः 36 ) P ततस्तुष्टेनोक्तं. 41 ) B भो चित्रकर.

1 कुमारीरूपं प्रतिकृत्याः कस्याश्चित्त्वया लिखितम्, किमुत स्वमत्या ।' तेन विज्ञप्तम् । 'देव, उज्जयिन्यां 1
महापुर्यामवन्तीनृपतेः सुतायाः प्रतिच्छन्दः ।' ततः कुमारः सादरं तां निद्रामिव नयनमनोहारिणीं,
3 शक्तिमिव हृदयदारणनिपुणां, शुद्धपक्षेन्दुकलामिव भृशं विमलां, महाराजराज्यस्थितिमिव सुविभक्त- 3
वर्णोपशोभितां, जिनश्रुतिमिव सुप्रतिष्ठिताङ्गोपाङ्गसुभगां विलोक्य क्षणं स्तम्भित इव, ध्यानगत इव,
दृषन्निर्मित इव, लेप्यमय इव स्थितः । ततः कृतकृत्य इव कुमारस्तं चित्रपटं देव्यै प्रदर्श्य जजल्पेति ।
6 'देवि, सुन्दरमुत्पद्यते यद्येषा कन्या लभ्यते ।' तया प्रत्युक्तम् । 'देवि, निजरूपं चित्रपटे लेखयित्वायमेव 6
व्यावृत्य प्रेष्यतां, यथावन्तीपतिस्तद्दृष्ट्वा स्वयमेव दुहितरं ददाति ।' कुमारेणोक्तम् । 'प्रमाणमेतत् ।'
ततस्तेन चित्रकृता चित्रपटः कामगजेन्द्ररूपसमन्वितो ऽवन्तीभर्तुः पुरो दर्शितः तेनापि सुतायै दर्शितः ।
9 तमालोक्य जातानुरागां तां विज्ञाय राजा जगाद । 'युक्तमेतद्यदियं पुरुषद्वेषिणी ततोऽन्यं कुमारं 9
नाभ्यलषत् । सांप्रतं तु विधिप्रज्ञाप्रकर्षकशपट्टायमाने ऽस्मिन् कुमाररूपे भृशमनुरक्ता । ततो ऽस्या
अयमेव वरो युक्तः ।' इति ध्यात्वा राज्ञा तस्मै कुमाराय दुहिता दत्ता ।

12 §२४) ततः पित्रादेशेन कुमारो वल्लभया समं स्कन्धावारेण च चलितः । ततो ऽस्तपर्यस्त- 12
किरणदण्डे चण्डरोचिषि निशाप्रथमयामार्धे प्रियया समं सुष्वाप । एवं द्वितीये यामे कस्याप्यपूर्व-
कोमलकरतलस्पर्शेन विबुद्धः सन् कुमारो व्यचिन्तयदिति । 'यदीदृशः स्पर्शो नानुभूतपूर्व इति ।
15 सर्वथायं मनुष्यस्पर्शो न भवति' इति चिन्तयता कुमारेण पुरस्त्रिभुवनाश्चर्यकारि रूपहारि कन्याद्वयं 15
निरीक्ष्य भणितम् । 'यद्भवत्यौ मानुष्यौ, किं वा देव्यौ, ममात्र महत्कौतुकम् ।' ताभ्यामुक्तम् । 'आवां
विद्याधर्यौ भवतः पार्श्वे केनापि हेतुना समायाते स्वः, परमावयोर्भवता परोपकारिणा प्रार्थना वृथा न
18 कार्या ।' कुमारेणोक्तम् । 'निवेद्यतामहं दुस्साध्यमपि भवत्कार्यं साधयिष्ये ।' ताभ्यामुक्तम् । 'देव, 18
शृणु । अस्ति कुबेरदिग्भागे वैताढ्यः पर्वतः । तत्रोत्तरदक्षिणश्रेण्यौ विद्येते । उत्तरश्रेण्यां सुन्दरमानन्द-
मन्दिरं नाम नगरम् । यत्कीदृशं, बहुसौवर्णमन्दिरं बहुपुरुषसेवितं बहुजलाशयपरिगतं बहुकुमुदोप-
21 वनम् । तत्र पृथ्वीसुन्दरः क्षमानेता । तस्य देवी मेखलाभिधा । तत्कुक्षिसंभवा बिन्दुमती कन्या । सा 21
च सुन्दरावयवाभङ्गभाग्यसौभाग्यभूमिका चारुचातुर्यकरण्डिका पुरुषद्वेषिणी । सा च वयोविभवकला-
कलापपरिकलितेभ्यो ऽपि विद्याधरकुमारेभ्यः कदापि न स्पृहयति । ततः सा यौवनस्था गुरुजनेन
24 जल्पितेति । 'वत्से, स्वयंवरं वरं गृहाण ।' तदाकर्ण्य तयावां भणिते । 'यदि, सख्यौ युवां भणथस्तदैकदा 24
दक्षिणश्रेण्यां भवतीभ्यां सह परिभ्रमामि' इति । आवाभ्यामप्युक्तम् । 'एवं भवतु' इत्युदित्वा गगनतल-
मुत्पत्य गिरिवरकाननान्तरे वयमवतीर्णाः । तत्र क्रीडन्तीभिरस्माभिः किंनरमिथुनमेकं कामगजेन्द्र-
27 कुमारस्य गुणग्रामगानं कुर्वाणं समाकर्णितम् । प्रियसख्योक्तम् । 'सखि, पवनवेगे, अग्रतो भूत्वेदं पृच्छ, 27
क एष कुत्रत्यो वा कामगजेन्द्रकुमारः, यस्याधुना गीतमुद्गीतम् ।' ततस्तया किंनर्या निवेदितम् ।
'विद्याधरबाले, कामगजेन्द्रः स कदापि न दृष्टः श्रुतश्च न । तर्हि यदि तेन कार्यं तदमुं किंनरं पृच्छ ।'
30 तेन भवद्वृत्तान्तः सर्वो ऽपि कथितः । तदिदं श्रुत्वा तया बिन्दुमत्याः पुरो गदितम् । तदाकर्णनेन 30
तद्दिनादारभ्य बिन्दुमती तुहिनक्लिष्टा कमलिनीव प्रियवियुक्ता राजहंसिकेव मन्त्राहता भुजङ्गीव निःश्रीका
निर्वचना निःप्रसरा तनोत्यालेख्यम्, न शृणोति गीतं न वादयति वीणां, केवलं मत्तेव ग्रहगृहीतेव
33 मृतेव जाता । सखीभिर्भाषितापि सा किमपि नोत्तरं ददाति । मया ज्ञातं यदेतस्याः कामगजेन्द्र एव 33
व्याधिनिदानम् । अतो ऽमुष्यास्तत्संगम एव महौषधम् । यतो ऽग्निदग्धानामग्निरेवौषधं विषक्रान्तानां
विषमेव । इति विचिन्तयन्त्या मया भणिता मानवेगा । 'वयस्ये अमुष्याः कामगजेन्द्र एव चिकित्सकः ।'
36 तत आवाभ्यां भणितम् । 'प्रियसखि, विश्वस्ता भव' तथा करिष्यावः, यथा तं कुमारमानीय तव 36
व्याधिमपनेष्यावः ।' तयोक्तम् ।' 'तदानयनाय युवां व्रजथः ।'

§२५) तयेत्यावां प्रतिपद्य तस्मिन्नपि गिरिकुहरशिलातले कमलकोमलदलविरचिते स्रस्तरे तां
39 बिन्दुमतीं विषादं कुर्वन्तीं निवेश्य प्रचलिते, परं न जानीवः कुत्र सा पुरी यत्र त्वं भवसि, कुत्र भवान् 39
प्राप्य इति । एतदर्थपरिज्ञानाय भगवती प्रज्ञप्ती समाराधिता । ततस्तया प्ररूपितम् । 'यथैष कुमार उज्ज-
यिन्यां गच्छन् वनान्तरे रचितशिबिरसंनिवेशः सांप्रतं तिष्ठति ।' एतन्मत्वावां भवदन्तिके समा-
42 याते ।' अतः परं सांप्रतं देव, तवायत्तं प्रियसख्या जीवितमिति मा विलम्बस्व त्वरितमेवोत्तिष्ठ यदि 42

3 ) P सुविभक्तिवर्णोप°. 12 ) B has a marginal note on अस्तपर्यस्त etc. : अस्तस्थाने पर्यस्तः पतितः किरणदंडो यस्य स तथा ॥. 13 ) P om. चण्ड, P प्रियासमं. 27 ) P सखे पवन°. 32 ) B adds न after निःप्रसरा. 34 ) P B औषधं for महौषधं.

1 जीवन्ती बिन्दुमती कथंचिद्दृश्यते ।' कुमारेणोक्तम् । 'यद्यप्यवश्यं गन्तव्यं तथापि देव्याः पुरो निवेद- 1
यिष्ये ।' ताभ्यामुक्तम् । 'त्वमीदृशः स्वामी सर्वनीतिपरायणः कथं स्त्रीणां रहस्यं कथयसि, किं न श्रुत-
3 स्त्वया जनैर्वक्ष्यमाणः श्लोकः । 3

'नीयमानः सुपर्णेन नागराजो ऽब्रवीदिदम् । यः स्त्रीणां गुह्यमाख्याति तदन्तं तस्य जीवितम्' ॥ ७८

ततो न कथ्यं नारीणां रहस्यम् ।' कुमारेणोक्तम् । 'किमपि कारणमत्रास्ते, एकदा मया तस्या वरो
6 ऽदायि, यत्किंचिच्छ्रुतं दृष्टमनुभूतं तत्सर्वमपि निवेदयिष्ये ।' ततः कुमारः प्रोवाच । 'प्रिये, संप्रति 6
व्रजामि ।' तयोदितम् । 'यत्किंचिद्देवाय रोचते देवस्तत्तनोतु ।' ततो देव्या विहिताञ्जलिपुटया विद्या-
धर्यौ विज्ञप्ते । 'अयं पतिर्मया भवत्योर्न्यासीकृत इत्यह्नाय इहानीय मोक्तव्यः ।' ततस्ते तं कुमारं विमान-
9 मारोप्य गगनतलमुत्पतिते । ततस्तस्य प्रिया 'माया काप्यत्र, किं स्वप्नो वा, हृत एताभ्यां मम पतिरेष्य- 9
तीति किं वा न' इति ध्यायन्ती यावद्विषण्णा तिष्ठति तावत्स्तोकावशेषक्षणदायां विमानं प्राप्तमेव । तत-
स्तद्दृष्ट्वा तद्भार्या नलिनीवनविलोकनेनेव मरालिकाभिनवजलददर्शनेनेव शिखण्डिनी प्रमुदिता जाता ।
12 ततस्तया दृष्टे विद्याधर्यौ कामगजेन्द्रो ऽपि । 12

§ २६ ) अथ विमानादवतीर्य वीर्यशाली शयनीये निविष्टः । प्रोचतुस्ते । 'भद्रे, स्वपतिर्न्यासीकृत-
स्त्वयावयोर्यः स चेदानीं समानीय समर्पितो ऽस्ति' इत्युदित्वा ते समुत्पत्य गते । ततो ऽसौ पादपतन-
15 मातत्य पप्रच्छ । 'देव, भवान् क गतः, कुतो वा प्राप्तः, किं त्वया दृष्टम्, किमनुभूतम्, किमवस्था सा 15
विद्याधरी प्राप्ता । एतत्प्रसद्य सद्यः कथयस्व ।' कुमारः समाख्यातुं प्रववृते । 'इतो विमानाधिरूढेन मया
व्योम्नि वैताढ्यपर्वतकन्दरोदरे मणिप्रदीपप्रज्वलनप्रद्योतितदिक्चक्रं नवीनं भुवनमेकमदर्शि तत्र नलिनी-
18 दलस्रस्तरे विद्याधरकुमारी च । ततस्ते मृणालकोमलवलयां चन्दनकर्पूररेणुधवलां कुरङ्गीदृशमिमां 18
कुमारीं जीवन्तीमभिवीक्ष्य प्रमुदिते ऊचतुः । 'प्रियसखि, प्रमोदं भज, एष तव मनो ऽभिरुचितो दयितः
प्राप्तः, यत्कृत्यं तदाचर' इति वदन्तीभ्यां सखीभ्यां तदङ्गतो नलिनीदलान्यपनीतानि । इति यावत्ते
21 सम्यकपश्यतस्तावत्तस्याङ्गोपाङ्गानि शिथिलीभूतानि । ततो दयिते, ताभ्यां तद्दृष्ट्वा पूत्कृतं 'यदियमावयोः 21
स्वामिनी मरिष्यति ततो ऽहमपि ।' 'किमेतत्' इति ध्यायन् विलोकितुं प्रवृत्तो यावत्तावत्सा विनिमीलित-
लोचना निश्चलाङ्गोपाङ्गा पञ्चतामुपागता । मया भणितम् ।

24 'भवतो न देव रचितुं युक्तमिदं गगनगामितनुजा यत् । 24
मम विरहदुःसहानलसंतप्ता मृत्युमुपनीता ॥' ७९

इति जल्पन्नहं मोहमुपागतः क्षणेन विबुद्धस्तयोः प्रलापान् शृणोमि ।

27 प्रियसखि कुपिता किं त्वं प्रतिवचनं नो ददासि को हेतुः । 27
किं कृतमप्रियमेतत् यदयं दयितः समानीतः ॥ ८०

§ २७ ) मयोक्तम् । 'यदस्यै कालयोग्यं तत्कार्यम् ।' ततस्ताभ्यामुदयाचलचूलावलम्बिनि किरण-
30 मालिनि चन्दनदारूण्यानीय प्रपञ्चितायां चितायां तदङ्गं निक्षिप्तम् । तद्दत्तो हुताशनः प्रसृतः । 'एतां 30
विनावयोर्जीवितेन किम्' इति गदित्वा चिरं विलप्य च तत्रैव ते ऽपि प्रविष्टे । एवं त्रितये ऽप्यस्थिशेषी-
भूते क्षणमेकमहमपि मुद्गरेण प्रहत इव महाशोककुन्तेन प्रभिन्न इव व्यचिन्तयमिति । 'पश्य विधि-
33 विलसितम्, यदियं बिन्दुमती मदनुरागेण विपन्ना तद्दुःखेन एते च । ततः किं ममैतेन स्त्रीवधकलङ्क- 33
कलुषितेन जीवितेन । ततो ऽमुमेव चितानलं प्रविश्य स्वस्य कलङ्कमुत्तारयामि' यावदिति प्रिये,
चिन्तयन्नस्मि तावद्विद्याधरमिथुनमध्ये विद्याधर्योक्तम् । 'विलोकय यदयं कीदृशो निर्दयः कुमारः, इयं
36 वराकी मृता, अयं पुनरद्यापि जीवति ।' विद्याधरेणोक्तम् । 'मैवं वादीः, यतः स्त्रियः पत्यौ मृते चितायां 36
प्रविशन्ति पुनः सत्पुरुषेण महिलाविनाशे स्ववधो न विधेयः ।' एतदाकर्ण्य मया चिन्तितम् । 'यदनेन
युक्तमुक्तम् । तत एतस्यां बिन्दुमत्यनुकारिण्यां वाप्यां नीरलावण्यपूर्णायां विकसितनीलेन्दीवरलोचनायां
39 चलद्धवलमृणालवलयकलितायां विकसितशतपत्रवरवक्त्रायां तरलजलतरङ्गरङ्गद्भङ्गिकटाक्षच्छटायां 39
विकटकनकतटनितम्बफलकायामहमवतीर्यैतासां तिसृणां जलाञ्जलिं ददामि' इति चिन्तयित्वावतीर्णो
दयिते, तां वापीं यावन्मज्जनोन्मज्जनं कृत्वा निर्गतस्तावत्तत्र सर्वमप्यपूर्वं पश्यामि । व्योमतलस्पर्शिनः
42 शाखिनः । महाप्रमाणा औषध्यः । उच्छ्रिताङ्गास्तुरङ्गाः । पञ्चचापशतमाना मानुषाः । महादेहाः पक्षिणः । 42

4 ) B° ब्रवीदिति. 9 ) B एव ताभ्यां for एताभ्यां. 11 ) B नलिनवन. 15 ) P पादपतनमातन्य. 16 ) B om. सद्यः. 19 ) B om. कुमारीं, B °वीक्ष्य सप्रमुदितमूचतुः. 21 ) B inter. ताभ्यां & तद्दृष्ट्वा. 29 ) B कालस्य योग्यं. 31 ) B ते for तेऽपि. 36 ) B adds एतत्कृते before मृता.

§२८) मया चिन्तितम्। 'सर्वथा नास्माकीनं स्थानम्, तत्र सप्तहस्तवपुषः पुरुषः, सर्वथायमन्यो द्वीपः' इति यावद्विचिन्तयामि तावद्दयिते, सा वापी विमानत्वमभजत्। 'तदहं कमपि पुरुषं पृच्छामि क एष द्वीपः' इति चिन्तयता मया दारकयुगलं विलोक्य पृष्टम्। 'को ऽयं द्वीपः। ततो मां कृमिमिव कुन्थुमिव पिपीलिकापोतमिव विलोक्य ताभ्यां विस्मयस्मेरमनोभ्यां निवेदितम्। 'वयस्य, तदिदमपूर्वविदेहमहाक्षेत्रम्।' मया चिन्तितम्। 'अहो, अतिश्रेष्ठं संजातं, इदमपि द्रष्टव्यमभूत्।' यावदिति चिन्तयन्नस्मि तावत्ताभ्यामहं कृमिरिव कौतुकात्करतलेन संगृहीतः। ततः श्रीसीमंधरस्वामिसमवसरणान्तर्मुक्तः। ततो मया भगवान् सिंहासनस्थः प्रणतः। ततस्तत्रत्येन केनचिन्नृपेण प्रस्तावमासाद्य पृष्टम्।' 'क एषः।' ततो भगवता निवेदितुमारेभे। 'अस्ति जम्बूद्वीपे भरतक्षेत्रे मध्यमखण्डे ऽरुणाभं नाम नगरम्। तत्र रत्नगजेन्द्रो नाम राजा। तदङ्गजः कामगजेन्द्र एष कुमारः। एताभ्यां देवाभ्यां 'स्त्रीलम्पटः' इति मत्वा स्त्रीवेषं विधायापहृत्य वैताढ्यकन्दरान्तरानीतः। तत्रालीकभवने 'विद्याधरबालिका तव वियोगेन मृता' इति ते उक्त्वा तां चितामारोप्य तामनु विलपन्त्यौ स्वेनापि प्रविष्टे तत्रैव दग्धे च। सापि माया विद्याधरमिथुनता। प्रबुद्धो वाप्यां समागतः। ततो वापीव्याजेन जलकान्तयानेनात्राभ्यामानीयैष मदन्तिके सम्यक्त्वलाभार्थमवसरे मुक्तः।' राज्ञेति पृष्टम्। 'भगवन्, एतयोरेतस्यानयने किं कारणम्।' भगवतादिष्टम्। 'पञ्चभिर्जनैः पूर्वभवे सङ्केतः कृतो यदेकेनैकस्य परस्परं सम्यक्त्वं दातव्यमिति। पूर्वं मोहदत्तः १ ततः स्वर्गी २ ततः पृथ्वीसारः ३ पुनः स्वर्गी ४ पुनरेष चरमदेहः कामगजेन्द्रः ५ समुत्पन्नः। तत्त्वं बुध्यस्व मा मुह्य, यथाशक्त्या विरतिं गृहाण' इति स्वामिनोक्तम्। ततः प्रिये, राज्ञा पुनः पृष्टम्। प्रभो, अयं लघुः कथं वयमुच्चैस्तराः।' भगवता भणितम्। इदमपूर्वमहाविदेहक्षेत्रं, अत्र तु सुषमा कालः सैष शाश्वतः, महादेहा देहिनः। तत्र पुनर्भरतक्षेत्रं, दुःषमा समयः, स अशाश्वतः, अतस्तुच्छतनवो जनाः।' ततो ऽपि राज्ञा पृष्टम्। कावेतौ देवौ।' जिनेनोचे। 'यैः पञ्चभिः सङ्केतः कृतः, तेषां मध्ये एतौ द्वौ देवौ।'

§२९) एवं भगवता निवेदिते यावन्मया मस्तकमुन्नासितं तावदहं स्वमिहैव कटके पश्यामि, एतदेव शयनं, एषा भवती देवी' इति। तया भणितम्। 'देवो यदाज्ञापयति तदवितथमेव, परं किमपि विज्ञपयामि, एतद्वृत्तं त्वया कथितम्, अत्रोद्गतो ऽरुणो ऽपि महद्वृत्तं निवेदितं परमेष कालः स्तोकः।' कुमारेण भणितम्। 'यतो मनसा देवानां वाचा पार्थिवानां, यो मया भगवान् श्रीसीमंधरस्वामी दृष्टः सो ऽद्यापि मम हृदयाग्रत एवावतिष्ठते। अथवा किमत्र विचारेण, भगवान् श्रीमहावीर एतस्मिन् प्रदेशे समवसृतः श्रूयते तमेव गत्वा पृच्छामि सत्यमसत्यं वैतत्। यदि भगवान् समादेक्ष्यति तत्सत्यमन्यथा माया' इति वदन् समुत्थाय कामगजेन्द्रः प्रस्थितः। प्रियया पृष्टम्। 'यदिदं सत्यं तदा किं कर्तव्यम्।' तेनोक्तम्। 'सत्ये जाते व्रतं ग्राह्यम्।' तयोक्तम्। 'यदि देवो दीक्षां ग्रहीष्यते तदाहमपि'। 'एवं भवतु' इति वदन् कुमार एष प्राप्तो मम समवसरणम्। अमुना प्रणम्य पृष्टो ऽहम्। 'किमिन्द्रजालं, किमु सत्यम्।' मयोक्तम्। 'सत्यमेतत्।' एतन्निशम्य समुत्पन्नवैराग्यः कटकनिवेशं गतः।' गौतमस्वामिना पृष्टम्। 'भगवन्, इतो गतेन तेन किं कृतम्, संप्रति च किं तनोति, कुत्र वा वर्तते।' भगवतादिष्टम्। 'इतो गत्वा देव्याः पुरः सत्यमिदमिति निवेद्य पितरौ दिग्गजेन्द्राख्यं स्वं सुतं चापृच्छ्य संमानितबन्धुजन एष संप्रति समवसरणबाह्यप्राकारगोपुरस्याग्रमागतो वर्तते' इति भगवति वदत्येव सत्वरं समागतः। ततो भगवता कामगजेन्द्रकुमारो वालुकाकवलनमिव निस्वादं, क्षुद्रबीजकोशाभक्षणमिवातृप्तिजनकं, क्षारनीरपानमिव तृष्णावर्धकं, बन्धनहेतुः(?) मिथ्यात्वमिव भववर्धकं, उपहासपदं, विद्वज्जननिन्दनीयं, विषयसुखसेवनं मन्यमानो वल्लभया तया परिजनेन च समं प्रव्राजितः। तेनान्यदा भगवान् पृष्टः। 'कुत्र ते पञ्च जनाः प्रवर्तन्ते।' भगवतोदितम्। 'द्वौ देवौ स्तः, तावप्यल्पायुषौ। शेषाः पुनर्मनुष्यलोके। ततो दर्शितो भगवता मणिरथकुमारमहर्षिः। 'एष मानभटजीवः। तत्र भवे भवान् मोहदत्त इति, तस्य जीवो भगवान् कामगजेन्द्रः। एको लोभदेवजीवः, सो ऽपि मर्त्यभवे ऽवतीर्णो ऽस्ति, तस्य वैरिगुप्त इति नाम। सर्वेषामस्मिन् भवे सिद्धिः' इत्यादिशन् भगवान् श्रीमहावीरः समुत्थितवान्। अन्यदिने भव्यकुमुदमृगाङ्कस्त्रिभुवनभवनप्रदीपः श्रीवर्धमानः काकन्दीपुर्या बाह्योद्याने समवसृतः। सदसि जीवाजीवपुण्य-

2 > B इति विचिंतयामि. 10 > B adds च befor वैताढ्य. 18 > B इदं पूर्वमहा, P B दुःखमा. 19 > B भूयोपि for ततोऽपि.
27 > B ततः for तदा. 31 > B om. भगवन्.

1 पापास्रवसंवरनिर्जराबन्धमोक्षस्वरूपमाचख्यौ। ततो गौतमेन पृष्टम्। 'भगवन्' कथं जीवाः कर्म बध्नन्ति।' 1
भगवतोक्तम्। 'लेश्याभेदैर्जीवाः शुभाशुभं कर्मार्जयन्ति। अत्र जम्बूफलभक्षणदृष्टान्तः।

3 § ३०) एकदा कस्माद्ग्रामात् षट् पुरुषाः परशुविहस्तहस्ताः समुन्नततरुच्छेदाय काननान्तः 3
प्रविष्टाः। तैरेकस्मिन् शाखिनि भक्तं स्थापितम्। तत्र भक्तपादपे समारुह्य केचिद्वानरास्तत्सर्वमपि भक्तं,
भक्षयित्वा तद्भाजनमपि भङ्क्त्वा प्रतिनिवृत्ताः। ते वनच्छेदका अपि मध्याह्ने बुभुक्षाक्षामकुक्षयस्तृ-
6 षातरलितचेतसस्तत्र तद्भक्तं न पश्यन्ति, भाजनमपि भग्नमालोकयन्ति। ततस्तैरिति परिज्ञातम्। 'यत्प्ल- 6
वगयूथेन सर्वमपि भक्तमास्वादितम्, तावदस्माकं बुभुक्षितानां का गतिः' इति ध्यात्वा समुत्थाय फला-
न्वेषणाय प्रवृत्तास्ते एकं जम्बूपादपं फलितं दृष्ट्वा परस्परं मन्त्रयन्ति 'कथयत, कथं जम्बूफलभक्षणं
9 करिष्यामः।' ततो जम्बूफलानि दृष्ट्वा तत्र तेषां मध्यादेकेनोक्तम्। 'सर्वेषामपि पञ्चशाखाः परश्वधायुधव्यग्रा 9
वर्तन्ते, ततो मूलादप्येनं छित्त्वा फलभक्षणं कुर्मः।' तन्निशम्य द्वितीयेनोक्तम्। 'अस्मिन् पादपे मूलादपि
च्छेदिते भवतां को गुणो भविष्यति, केवलमस्य शाखा एव च्छिद्यन्ते।' तृतीयेन भणितम्। 'न शाखा
12 केवलं फलिता एव प्रतिशाखा गृह्यन्ते।' चतुर्थेनोक्तम्। 'न प्रतिशाखाः, केवलं स्तबका एव पात्यन्ते।' 12
पञ्चमेनोक्तम्। 'ममैव बुद्धिरिह विधीयताम्, लकुटेनाहत्य पक्वजम्बूफलानि पातयत।' ततः किंचि-
द्विहस्य षष्ठेनोक्तम्। 'भो नराः, भवतां महदज्ञानम्, महान् पापारम्भः, स्तोको लाभः, किमत्र
15 प्रारब्धम्, यदि जम्बूफलभक्षणेन वः कार्यं तदेतानि पक्वानि शुकसारिकादिभिः पातितानि स्वभावतः 15
पतितानि जम्बूफलानि स्वैरं भक्षयत, नो वान्यत्र व्रजत' इति ते सर्वे ऽपि तैर्धरापतितैरेव फलैः
सौहित्यसुखिता जज्ञिरे। सर्वेषामपि फलोपभोगः सदृश एव, परं पुनस्तत्र बहुविधं पापं येनेत्युक्तम्।
18 'अयं पादपो मूलादपि च्छिद्यते' स मृत्वा कृष्णलेश्ययावश्यं नरकातिथिरेव। द्वितीयेनोक्तम्। 'यच्छाखा 18
एव च्छेद्याः' स नीललेश्यया विपद्य नरकं तिर्यक्त्वं वा प्राप्नोति। तृतीयेनोक्तम्। 'यत्प्रतिशाखा एव
ग्राह्याः' स कापोतलेश्यया तिर्यग्योनावुत्पद्यते। चतुर्थेनोक्तम्। 'यत्केवलं स्तबका एव संगृह्यन्ते स
21 तेजोलेश्यया नरो भवति।' पञ्चमेनोक्तम्। 'यत्पक्वानि पक्वानि फलानि पात्यन्ते स पद्मलेश्यया देवत्वं 21
लभते।' षष्ठेनोक्तम्। 'यत्केवलं भूमिपतितान्येवास्वाद्यन्ते' स शुक्ललेश्यया सिद्धिसुखभाग्। ततो गौतम
पश्य त्वं, यदेकस्मिन् भक्षणकार्ये षण्णामपि लेश्याभेदः पृथग् भिन्नश्च कर्मबन्धः। यश्छिन्द्धि भिन्द्धी-
24 त्यादिकं कर्कशं वचो जल्पति, यस्य न दया न सत्यं स कृष्णलेश्यः। यः पञ्चकार्याण्यनार्याणि समाचरति 24
षष्ठं पुनर्धर्मार्थं स नीललेश्यः। यश्चत्वारि कार्याणि पापमयानि तनोति द्वयं धर्मनिमित्तं स कापोत-
लेश्यः। यस्त्रीणि कार्याणि पापार्थं त्रीणि च धर्महेतवे स तेजोलेश्यः। यः कार्यद्वयं पापार्थं चत्वारि
27 धर्मकारणे स पद्मलेश्यः। य एकं कार्यं पापहेतवे पञ्च धर्मार्थं च स शुक्ललेश्यः। तया जिनत्वमाप्नोति।' 27
तद्भगवतो भणितं सर्वैरपि सुरासुरनरेश्वरैस्तथेति प्रतिपन्नम्।

§ ३१) अत्रान्तरे राजपुत्र एकः प्रलम्बभुजदण्डः सुवेषो वक्षःस्थलविलसद्वनमालः समवसरणे
30 भगवन्तं प्रणिपत्य प्रोवाच। 'भगवन्, किं तत्सत्यम्, यद्दिव्येन बन्दिना तत्र मम निवेदितं तन्मङ्गलम- 30
मङ्गलं वा।' भगवतोक्तम्। 'भद्र, सत्सर्वमपि तथ्यमेव।' तदाकर्ण्य 'भगवदादेशः प्रमाणम्' इति
गदित्वा समवसरणतस्तस्मिन्निर्गते गौतमेनाभ्यधायि। 'नाथ, को ऽयं पुमान्, किमेतेन पृष्टम्।'
33 ततो भगवतानेकलोकप्रतिबोधाय समाचचक्षे। 'समस्ति जम्बूद्वीपे भरतक्षेत्रे मध्यमखण्डे 33
ऋषभपुरं नाम नगरम्। तत्र चन्द्रमण्डलकरनिकरनिर्मलकीर्तिस्फूर्तिशाली चन्द्रगुप्तः क्षितिपतिः।
तत्सूनुरनूनविक्रमो वैरिगुप्तः। तस्यान्यदिने मेदिनीस्वामिनः सभासीनस्य समागत्य प्रणिपत्य च
36 प्रतीहारी व्यजिज्ञपदिति। 'देव, द्वारे नगरप्रधाननरा भवच्चरणदर्शनमभिलषन्ति।' तदाकर्ण्य 36
राज्ञोक्तम्। 'त्वरितमेव प्रेष्यन्ताम्।' ततस्तया सह तैर्नरैः प्रविश्य किमप्यपूर्वं च वस्तु प्राभृतीकृत्य राजानं
प्रणम्य विज्ञप्तम्। "दुर्बलानां बलं राजा" इति परिभावयतु देवः। सर्वमपि नगरं केनापि मुषितम्।
39 यत्किंचिच्चारु तदखिलमपि निशि ह्रियते।' राज्ञोक्तम्। 'यूयं व्रजत स परिमोषी विलोक्यते लग्नः।' 39
ततो राज्ञा पुरारक्षमाकार्य समादिष्टम्। 'अहो, मध्ये पुरं महांश्चौरोपद्रवः' इति। तेनापि विज्ञप्तम्। 'न

12 ) P om. न. 14 ) B adds ( above the line ) संतु before केवलं. 16 ) B repeats स्वैरं ( below the line ).
17 ) B adds तस्य ( above the line ) after पापं. 21 ) B अपक्वानि for second पक्वानि, P B add वा before फलानि.
22 ) B adds भवति after °भाग्. 37 ) B om. च. 40 ) B adds देव before न दृश्यन्ते.

1 दृश्यन्ते ह्रियमाणाः पदार्थाः, न चौरो ऽपि लोचनगोचरः। केवलमेतदेव सर्वत्रापि प्रातः परिश्रूयते यत्पुरं 1
मुषितम्। अहं देवादेशेन पुरपरित्राणं करोमि, परं केनाप्युपायेन न मलिम्लुचोपलब्धिः। ततः स्वामी
3 कस्याप्यन्यस्यादेशं ददातु।' तस्मिन्नेवमुक्तवति नरेश्वरेण सकलमप्यास्थानमण्डलमालुलोके। 3

§ ३२ ) ततो वैरिगुप्तेन विरचिताञ्जलिना विज्ञप्तम्। 'यदि देव, सप्तरात्रमध्ये तं स्तेनं देवान्तिकं
नानयामि ततो ऽहं ज्वालाकुलं ज्वलनमाविशामि' इति। ततो राजादेशमासाद्य वैरिगुप्तस्य सुगुप्तविधिना
6 प्रकोष्ठनिक्षिप्तखेटकस्य करतलकलितकरालकरवालस्य चत्वररथ्यामुखगोपुरारामसरोवरवापीदेवकुल- 6
पानीयशालामठेषु विचरतः षड् दिवसा व्यतिचक्रमुः, न पुनस्तेन स चौरपुमानुपलब्धः। ततः सप्तमे
दिवसे वैरिगुप्तेन चिन्तितम्। 'सर्वत्र मयान्वेषितं पुरं परं न चौरः प्राप्तः, तदत्र को ऽयमुपायो विधेयः,
9 मम च प्रत्यूषे प्रतिज्ञा परिपूर्णा तावदागता ममापूर्णसंधस्य पञ्चता, तदद्य क्षणदायां श्मशाने महामांसं 9
विक्रीय कमपि वेतालं साधयित्वा चौरवृत्तान्तं पृच्छामि' इति विचिन्त्य वैरिगुप्तः श्मशानभुवं संप्राप्तः।
तत्र च तेन महासाहसिना क्षुरिकया जङ्घयोर्महामांसमुत्कृत्य हस्ते विधाय वारत्रयं भणितम्। 'भो भो
12 राक्षसाः, पिशाचा वा श्रूयताम्, यदि भवतां महामांसेन कार्यं तदेतद्गृहीत्वा चौरवृत्तान्तं निवेदयत।' 12
वेतालेनोक्तम्। 'महामांसमहं ग्रहीष्ये।' कुमारेण भणितम्। 'प्रमाणमेतत्, परं चौरप्रचारः परिकथनीयः।'
कुमारेणार्पिते महामांसे तेनोक्तम्। 'भद्र, मांसमिदं स्तोकं विस्रं च, यद्यग्निना पक्वं भवान् ददाति तदा
15 गृह्णामि।' कुमारेण भणितम्। 'चितासमीपमागच्छ यथा स्वेच्छयाग्निपक्वं स्वमांसं भवते ददामि।' 15
वेतालः प्रोवाच। 'भवत्वेवम्।' ततस्तौ चितासमीपमाजग्मतुः। कुमारेणापरं स्वमहामांसं पक्वं तस्मै प्रदत्तम्।
तेन च स्वेच्छया भुक्तं च। अत्रान्तरे गौतमेन पृष्टम्। 'भगवन्, किमु पिशाचा राक्षसाश्च कावलिक-
18 माहारं कुर्वन्ति किं वा न।' भगवताज्ञप्तम्। 'गौतम, न कुर्वन्ति।' गौतमेनोक्तम्। 'यद्यमी नाश्नन्ति 18
ततः कथमनेन महामांसमशितम्।' भगवतादिष्टम्। 'प्रकृत्या व्यन्तरा अमी बाला इव क्रीडां कुर्वन्ति।
'महामांसं भुक्तम्' इति लोकस्य मायां दर्शयन्ति।' वेतालेन भणितम्। 'एतन्महामांसं निरस्थि मह्यं न
21 रोचते, यद्यस्थिवत्कटकटारावकरं परं ददासि तद्देहि।' तदाकर्ण्य कुमारो दक्षिणजङ्घामुत्कृत्य चितानले 21
पक्त्वा वेतालस्यार्पयामास।' पुनस्तेनोक्तम्। 'भो भद्र, अमुनाधुना पूर्णं, संप्रत्यतीव तृषितो ऽस्मि, ततस्तव
शोणितं पातुमिच्छामि।' 'पिब' इति वदता कुमारेण यावदेका स्नसा विदारिता तावत् हाहारवमुखरे-
24 ऽट्टहासे गगनाङ्गणं प्रसृते, 24

'साहसेनामुना तुष्टो ऽस्म्यनन्यसदृशेन ते। यत्किंचिद्याचसे वीर तदेव वितराम्यहम्' ॥ ८१
§ ३३ ) ततः कुमारः प्रोवाच तुष्टस्त्वं यदि संप्रति। मत्पुरं मुषितं येन तमेव कथयस्व मे ॥ ८२
27 वेतालो ऽप्यब्रवीद्देव तस्य चौरस्य को ऽपि न। प्रतिमल्लः स दृष्टो ऽपि न हि केनापि गृह्यते ॥ ८३ 27
तन्निशम्य कुमारेणाक्षतं वीक्ष्य क्षतं दृशा। प्रोचे वेताल चौरस्य स्थानमेव निवेदय ॥ ८४
जगाद स च वेतालो यद्येवं शृणु तत्त्वतः। श्मशानान्तःस्थन्यग्रोधे ऽमुष्य स्तेनस्य संश्रयः ॥ ८५
30 तत्र वटे छिद्रमेव द्वारम्। तच्छ्रुत्वा कुमारस्त्वरितं विकटं प्रेतवनवटं समारुह्य शाखासु प्रति- 30
शाखासु मूले पत्रनिकरान्तरे च कृपाणपाणिर्विलोकितुं प्रवृत्तः। ततः कोटरस्थच्छिद्रसमीपे राजपुत्रो
यावदधोवक्त्रं करोति तावत्ततो धूपगन्धः कस्तीरजघनसारमृगमदपरिमलमांसिलो निस्सरति। वेणु-
33 वीणारवं कामिनीजनजनितगीतसंवलितं श्रुत्वा राजसूनुना चिन्तितम्। 'दृष्टममुष्य परिमोषिणो 33
मन्दिरम्। अधुना यो बलवांस्तस्यैव राज्यम्' इति विचिन्त्य तत्रैव विवरे किंचिद्भूभागमुपसर्प्य मणिमय-
भवनं चारुकाञ्चनतोरणं वरयुवतिजनप्रचारं विलोक्य व्यचिन्तयत्। 'स तावद्दुष्टाचारः कुत्र भावी' इति
36 चिन्तयता तेन कापि लोललोचना निस्तन्द्रचन्द्रवदना ततो निःसरन्ती दृष्टा पृष्टा च। 'कस्यायमावासः, 36
कासि त्वम्, कुत्र वा स परास्कन्दी, स्त्रीजनश्च किं गायति।' तयोक्तम्। 'भद्र, कथमेतावतीं भुवमागतः,
त्वमतीव साहसिकः, कुतः स्थानादागतः।' तेनोक्तम्। 'ऋषभपुरात्।' तयोक्तम्। 'यदि त्वं ऋषभपुर-
39 वास्तव्यः [ तत् ] किं जानासि चन्द्रगुप्तनरेश्वरं, वैरिगुप्तं पुत्रं च।' तेनोचे। 'भद्रे, त्वं कथं जानासि 39
तयोर्द्वयोरप्यभिधे।' तयोक्तम्। 'गतास्ते दिवसाः।' तेन भणितम्। 'कथय स्फुटं तयोः किं भवसि,
कथमभिजानासि तौ, केन पथात्र प्राप्तासि।'

---

4 ) B रात्रि for रात्र. 5 ) B om. इति. 7 ) B चौरः पुमा°. 11 ) B तेन साहसिना. 24 ) P प्रवृते for प्रसृते. 28 ) B वीक्षा क्षतं. 31 ) B पाणिबिंलं विलोकितुं. 34 ) B मणिमयं भुवनं. 35 ) B वरयुवतिजातप्रचारं. 39 ) P B om. [ तत् ].

§ ३४ ) तया भणितम् । 'श्रावस्तीपुर्यां सुरेन्द्रस्य भूपतेर्दुहिता बाल्यादेव तेन पित्रा तस्य वैरिगुप्तस्य परिणेतुं प्रदत्ताभूवम् । अत्रान्तरे विद्यासिद्धेनामुनापहृतात्र पातालतले प्रक्षिप्ता च । जानासि तेन तन्नाम्नी । केवलं नाहमेकापहृता अत्र बहुतरा महेला अन्या अपि ।' तेन चिन्तितम् । 'अहो, ममैषा चम्पकमाला प्रदत्तासीत्, ततः पश्चाद्विद्याधरेणामुना समानीता ।' तेनोक्तम् । 'भद्रे, कथय स कुत्र विद्याधराधमः, कथं हन्तव्यः स मया । अहं स एव वैरिगुप्तः, यदि ममोपरि महान् स्नेहः ।' तयोक्तम् । 'यदि भवान् वैरिगुप्तस्तद्वरेण्यमजनि ।' तया निवेदितम् । 'कुमार, रहस्यं शृणु यथा पापी मार्यते । अत्र देवतायतने ऽस्य खेटकं सिद्धकृपाणरत्नं चास्ति तद्गृहाण ।' राजपुत्रेणोक्तम् । 'तावद्भद्रे, कथय कथं कथं वर्तते स विद्यासिद्धः ।' तयोक्तम् । 'अयमस्तमिते दिनपतौ बहुलान्धकारायां निशायां स्वेच्छया परिभ्रमति, महिलादिकं यत्किंचित्सारं सारं वस्तु प्राप्नोति तत्सर्वं समानयति । दिवसे तु महेलावृन्दपरिवृतो ऽत्रैव तिष्ठति । तथास्यानेन कृपाणेनानेन खेटकेन च सर्वकार्यसिद्धिः ।' कुमारेणोक्तम् । 'अधुना कुत्रास्ते स निष्कृपचक्रवर्ती ।' तयोक्तम् । 'सर्वदैव सर्वस्त्रीजनमध्यगतो भवति, सांप्रतं यदि स भवति ततो नाहं न त्वं च ।' तेनोक्तम् । 'यदि स नास्ति तत एताः कथं गायन्ति ।' ततस्तया प्रोचे । 'भद्र, एतास्तेन विना प्रमुदिताः पठन्ति गायन्ति च । पुनरन्या रुदन्ति च ।'

§ ३५ ) कुमारेणोक्तम् । 'भद्रे, मम तस्य च द्वयोर्मध्ये एतासां हृदयंगमः को भावी' इति । स्मित्वा तया प्रोचे । यतः

'त्यजन्ति शूरमप्येताः सस्नेहमपि योषितः । कातरं विगतस्नेहं चापि गृह्णन्ति काश्चन ॥ ८६
वातोद्धूतध्वजपट इव विद्युदिवास्थिरम् । मनो मनस्विनीनां हि कः परिच्छेत्तुमर्हति ॥ ८७

तथाप्येतावन्मात्रं जानामि यद्येता भवन्तं विलोकयिष्यन्ति ततो ऽवश्यमेवैतासां त्वयि स्नेहो भावीति । एताः सर्वा अपि भवत्पुरसंबन्धिन्य एव भवन्तं दृष्ट्वा प्रत्यभिज्ञास्यन्ति । ततो दर्शनमेतासां देयमेव ।' कुमारेणोक्तम् । 'तावदस्य विद्यासिद्धस्य सिद्धकृपाणं खेटकं च समानय, पश्चादपि तासां दर्शनं दास्यामि ।' तयोचे । 'अत्रैव कुमार, तावत् स्थातव्यं त्वया यावदस्मि सिद्धखेटकं सिद्धखङ्गं च समानयामि' इत्युदित्वा सा गता । ततः कुमारश्चिन्तितवान् । 'कदाचिदियं मम मृत्युहेतवे कमप्युपायमन्यं चिन्तयति ततो न युक्तं स्थातुमत्रैव' इति कुमारः प्रविचार्य गृहीतखेटकः स्वीकृतखङ्गरत्नः पश्चाद्व्याघुट्य स्थितः । ततः सा स्वीकृतखङ्गखेटका तत्र प्रदेशे कुमारमपश्यन्ती विषण्णमानसा कुमारेण भणिता । 'भद्रे, त्वरितं समागच्छ अत्राहमवतिष्ठामि ।' इति समाकर्ण्य तया प्रोक्तम् । 'अतः स्थानात्कथमन्यत्र भवान् संप्राप्तः ।' तेनोक्तम् । 'यतो धीमतां 'स्त्रीणां कदापि न विश्वसनीयम्' इति शास्त्रोक्तिः । ततः पश्चाद्व्याघुट्य स्थितः ।' 'कुमार, राज्यपदवीयोग्यस्त्वमसि, यो महेलानां न विश्वसिति' इत्युदित्वा सा तत्पुरो भूमौ कौक्षेयकं खेटकं च मुमोच । राजतनयः सौवं निस्त्रिंशं खेटकं च तत्करे ऽर्पयामास । कुमारेण प्रदक्षिणीकृत्य तद्द्वयमद्वयरूपं स्वीचक्रे । तयोक्तम् । 'कुमारस्य विजयाय भवत्विदं खङ्गरत्नम् ।' कुमारेणोक्तम् । 'भद्रे, कथय कुत्र संप्रति स दुष्टविद्यासिद्धः ।' तयोक्तम् । 'कुमार, केन निगमेनात्र प्रविष्टो भवान् ।' तेन प्रोक्तम् । 'वटपादपकोटरच्छिद्रेण ।' तयोक्तम् । 'नाहं द्वारं जानामि, एतत्पुनर्जाने येन द्वारेण त्वमागतः, सो ऽपि तेनैव समागमिष्यति ततस्त्वया सज्जीभूयामुना दिव्यखङ्गेन शिरश्छेदनीयं तस्य । अन्यथा स पुनस्तव दुःसाध्यः' इत्यवगम्य कुमारः कृपाणपाणिश्छिद्रद्वारि स्थितः ।

§ ३६ ) अत्रान्तरे स विद्याधराधमः प्रभातकालमाकलय्य धवलगृहोपरि शयनीयप्रसुप्तामेकाकिनीं तस्यैव राजसूनोः पत्नीमपहृत्यागतः । तत्रैव बिले तं प्रविशन्तं निरीक्ष्य राजपुत्र्या पूत्चक्रे ।

'हा वैरिगुप्त हा वीर त्वत्प्रियास्मि हृतामुना । चम्पावत्यभिधानेन तस्मात्त्रायस्व मामिह ॥' ८८

एवं तत्प्रलपितमाकर्ण्य विद्यासिद्धेनोक्तम् । 'तेन तव किं कार्यम्, यदि तं दयितं प्राप्नोमि तदा तमेवाश्नामि' इति श्रुत्वा कुमारेण चिन्तितम् । 'अहो, दुराचारः समागत एव परं मम प्राणप्रियां गृहीत्वा, तदेतत्सुन्दरं जातमिति यत्सलोप्त्रो ऽयं चौरः' इति चिन्तयता कुमारेण बिलद्वारे विद्यासिद्धस्योत्तमाङ्गं प्रविशद्दृष्टम् । ततः कुमारेण चिन्तितम् । 'एतस्य शिरश्छिनद्मि, अथवा नहि नहि किं सत्पुरुषाश्छलान्वेषिणः, सर्वथा न युक्तमेतत्तावदस्य शक्तिमालोकयामि' इति ध्यायतः कुमारस्य विद्यासिद्धश्छिद्रेण प्रविष्टः । ततो भणितः कुमारेण । 'अरे, विद्यासिद्धो यदि भवान् तन्नीतिपथे व्रज, यदन्यायं कुरुषे

5 ) B हंतव्यो यदि ममोपरि. 21 ) C om. तावत्. 22 ) B कदाचिदयं. 26 ) B inter. धीमतां स्त्रीणां & कदापि. 27 ) B विश्वसति. 33 ) P B om. तस्य. 34 ) P प्रभातमाकलय्य. 38 ) B कुमारेणोक्तं for कुमारेण चिन्तितम्. 39 ) B °सुंदरं संजातं.

1 तन्नोचितम्। यदि सत्येन चौरो ऽसि तेन निग्रहयोग्यस्त्वं तत्सज्जीभव युद्धाय।' तं राजतनयं प्रेक्ष्य 'अहो, 1
कथमेष वैरिगुप्तः संप्राप्तः, तद्विनष्टं कार्यम्, तावत्किमनेन बालेन' इति चिन्तयता विद्यासिद्धेन प्रोचे।
3 'कृतान्तवदनप्राये क्षिप्तः केन बिले भवान्। कथं वा रूपसौभाग्यशाली निधनमिच्छसि' ॥ ८९ 3
ततः 'कृपाणः कृपाणः' इति वदन् स देवायतने राजतनयसंबन्धिनं खड्गं खेटकं च गृहीत्वा दध्यौ।
'अहो, मदीयं न खड्गरत्नं न च खेटकमपि' इति चिन्तयन् कुमारमूलमागत्य बभाण।
6 'मदीयान्तःपुरे केन प्रेषितो मातृशासितः। ज्ञातं वा कुपितः प्रेतपतिरेव तवोपरि ॥ ९० 6
इदानीं ते न निस्सारो विद्यते बिलतो ऽमुतः। सूपकारकरायातः शशवत्त्वं विनंक्ष्यसि ॥ ९१
प्रोचे कुमारः 'किं रे रे, स्वैरचारी मम प्रियाम्। हृत्वाद्य माद्यसि प्राप्त एवासि त्वं यमान्तिकम्' ॥ ९२
9 § ३७) इति वदता कुमारेण तदभिमुखं खड्गप्रहारः प्रदत्तः। तेनापि कलाकौशलशालिना 9
वञ्चयित्वा तं प्रहारं कुमारं प्रति प्रहारो मुक्तः। कुमारेणापि स वञ्चितः। ततस्तयोर्वनमहिषयोरिव
महानाहवः प्रवृत्तः, परमेतयोर्मध्ये न कस्यापि जयो ऽभूत्, तथाप्ययं विद्यासिद्धः 'कैतवी' इति विचिन्त्य
12 चम्पकमालया प्रोचे। 'कुमार, खड्गरत्नमिदं स्मर'। 'रम्यमुक्तमनया' इति विचिन्त्य कुमारो निजगाद। 12
'यदि सिद्ध्यसि सिद्धानां चक्रिणां वासिरत्न भोः। तत्त्वं मम कराग्रस्थं लुनीह्यस्य शिरो ऽधुना' ॥ ९३
अथ विद्यासिद्धेन चिन्तितम्। 'अये, अनयैव वनितया खड्गरत्नमिदमस्यार्पितम्, आः पापे, कुत्र व्रजसि'
15 इति वदन् तामेव दिशं विद्यासिद्धः प्रत्यधावत। 15
यावन्नाप्नोति वनितामिमामेष नराधमः। तावत्त्वरितमेवास्य शिरश्चिच्छेद राजसूः ॥ ९४
उक्तं चम्पकमालया।
18 'कुमारैतस्य वक्त्रान्तः समस्ति गुटिका किल। विदार्यास्य मुखं तत्त्वं तां गृहाण महाशय ॥ ९५ 18
स श्रुत्वेति मुखात्तस्य दारिताद्गुटिकां ततः। लात्वा प्रक्षाल्य चात्मीयमुखे चिक्षेप तत्क्षणम् ॥ ९६
कुमारः सुगुणाधारः पारावारस्तरोर्णसः। तयाधिकं समुद्दीप्य दर्पभूः समभूत्तदा ॥ ९७
21 § ३८) ततस्तस्य कुमारस्य तेनैव ललितविलासिनीजनेन सह विषयसुखमनुभवतो विस्मृतसकल- 21
गुरुवचनस्य निजशक्तिविजितसिद्धलब्धार्थानेकप्रणयिनीजनसनाथपातालभुवनस्य तत्रैव वसत एकदिन-
मिव द्वादश वत्सराणि व्यतीयुः। द्वादशसंवत्सरप्रान्ते ऽस्य प्रसुप्तस्य तस्य निशायाः पश्चिमे यामे
24 ऽदृश्यमानो मङ्गलपाठकः पपाठ। 24
'प्रभातसमये निद्रामोहं त्यज नरेश्वर। अवलम्बस्व सद्धर्मं कर्मनिर्मूलनक्षमम् ॥ ९८
संसारसागरं घोरमवगम्य दुरुत्तरम्। त्यक्त्वा स्त्रीसंगतिं धर्मपोतमेतमलं कुरु ॥' ९९
27 एतदाकर्ण्य राजसूनुना चिन्तितम्। 'अहो, कुत्रैष बन्दिध्वनिः।' ताभिर्भणितम्। 'देव, न जानीमः, 27
स च न दृश्यते, केवलं शब्द एव श्रूयते।' एवं बन्दिना सप्त दिनानि यावज्जय जयेति शब्दपूर्वं संसार-
वैराग्यजननानि वचांस्युच्चरता तस्य चेतो विसयसेरमतन्यत। ततो राजपुत्रेणोक्तम्। 'अयं तावद-
30 वश्यमेति तदेनमेव पृच्छामि' इति वदतस्तस्य कुमारस्य स दिव्यबन्दी प्रत्यक्षीभूय 'कुमार, जय जय' 30
इत्युवाच। कुमारेणोचे।
'भो दिव्य कथय क्षिप्रमायातः केन हेतुना। प्रत्यहं किमु वैराग्यवचो जल्पसि मत्पुरः ॥ १००
33 दिव्येनोचे 'तव स्वान्ते, किंचित्कौतुकमस्ति चेत्। पृच्छ तद्वत्स निर्गत्यामुतः पातालवेश्मनः' ॥ १०१ 33
स प्रोचे 'किंतु पातालमिदं कालः कियान् गतः। वसतो मे ऽत्र केनेतो निर्गच्छामि पथा ननु' ॥ १०२
सो ऽप्यूचे 'श्वभ्रमेवेदं, द्वादशात्र समाः स्थितः। त्वं ततो विवरद्वारानया निर्गच्छ सत्वरम्' ॥ १०३
36 § ३९) एवमाकर्ण्य कुमारः समुत्थितः। तिरोहितो बन्दी। ताभिः स्त्रीभिर्नत्वा ततो विज्ञप्तः 36
कुमारः। 'अतः परं देवः किं कर्तुकामः।' कुमारेणोक्तम्। 'अहं भगवन्तं दिव्यज्ञानिनं कथमपि गत्वा
प्रक्ष्यामि यदेष किंचिज्जल्पति तत्सत्यं तत्क्रियते न वा' इति। ततस्ताभिर्भणितम्। 'यं मार्गं त्वमङ्गी-
39 करिष्यसि वयमपि तमेवानुसरिष्यामः।' एवं प्रतिपद्य सद्यः कुमारः समुत्थाय तेनैव विवरद्वारेण 39
निर्गत्येह स्थितानस्मान् मत्वागत्य संदेहं पप्रच्छ, निर्गतश्च सो ऽयं चन्द्रगुप्तपुत्रो वैरिगुप्तः, प्राग्भव-
संबन्धिसङ्केतितदेवकृतबन्दिप्रयोगेण प्रतिबुद्धः।' ततो गौतमगणधारिणा विज्ञप्तम्। 'भगवन्, सांप्रतं

2 ) B तावत् अथवा किमनेन. 4 ) B om. ततः. 8 ) C कुमारः प्रोचे for प्रोचे कुमारः. 10 ) P प्रतिहारो for प्रति प्रहारो.
12 ) B °मनया विचिंतेति कुमारो. 21 ) P om. कुमारस्य, B adds च before सह. 22 ) B om. तत्रैव वसत, B एकं दिनमिव.
25 ) P कम्मी निर्म्मलक्षमम्, C °निर्मलन° 30 ) P तदेतमेव पृच्छामि. 37 ) B किमपि for कथमपि. 38 ) B यं त्वं मार्ग्गमंगी.

1 स कुत्रोपगतः' इति । भगवता निवेदितम् । 'तं कामिनीजनं पातालादाकृष्य संप्रति समवसरणतृतीय- 1
तोरणासन्न एष संप्राप्तः' यावद्भगवानिति कथयति तावदागत्य कुमारः स्त्रैणेन समं भगवन्तं प्रदक्षिणीकृत्य
3 प्रणिपत्य च सुखासनस्थः पप्रच्छ । 'भगवन्, केन हेतुना क एष दिव्यः स्तुतिव्रतः प्रतिबोधयति, कुत्र 3
वा स सांप्रतम्' इति । ततो भगवता पञ्चानां जनानां भवपरंपरा विस्तारिता तावद्यावन्मणिरथकुमारः
कामगजेन्द्रः स च तृतीयो वैरिगुप्तः स्वर्गतश्च्युत्वा भवान् लोभदेवजीवो ऽत्र समुत्पन्नः प्रमत्तश्च । ततो
6 मायादित्यचण्डसोमाभ्यामनेकप्राभातिकमङ्गलपठनच्छद्मना प्रतिबोधितः' इति । तन्निशम्य कुमा- 6
रेणोक्तम् । 'भगवन्, संप्रति किं विलम्बं करोषि दीक्षादानेन प्रसद्यताम् ।' ततो भगवता युवतीजनेन
सह वैरिगुप्तः प्रव्राजितः । ततः सकलत्रैलोक्यसरोवरालङ्कारपुण्डरीकः पुण्डरीकधवलमहिमा
9 श्रीवर्धमानो हस्तिनापुरमागत्य समवसृतः । भगवतापि स्वयं सरागनीरागदेवतास्वरूपं व्याख्यातम् । 9
स्कन्दरुद्रचतुर्मुखव्यन्तरगणाधिपप्रभृतयो देवाः सरागाः समाराध्यमाना जनानां जनाधिपा इव संतुष्टा
राज्यश्रियं यच्छन्ति । रुष्टाः सन्तो ऽपहरन्ति च । पुनस्तीर्थंकराः सिद्धा निर्दग्धकर्मेन्धनाः केवलिनो
12 रजोमदमोहपरिहृता एते नीरागाः स्वर्गापवर्गश्रियं ददति । 12

§ ४० ) अत्रान्तरे ब्राह्मणदारकः श्यामलवक्षःस्थलविलसद्ब्रह्मसूत्रस्त्रिःप्रदक्षिणीकृत्य भगवन्तं प्रणम्य
पप्रच्छ । 'भगवन्, क एष पक्षी मनुष्यभाषया भाषते, यत्तेनोक्तं तद्युक्तमयुक्तं वा ।' भगवतादिष्टम् ।
15 'भद्र, स पक्षी वने दिव्यो यत्तेनोक्तं तत्सर्वमपि युक्तमेव ।' एतदवगम्य समवसरणतः स निष्क्रान्तः । 15
ततो ज्ञानवतापि श्रीगौतमेन पृष्टम् । 'भगवन्, क एष सुखसंभवो दारकः, किमेतेन पृष्टम् ।' एवं पृष्टो
भगवान्निवेदयामास ।

18 'अस्ति नातिदूरे सरलपुरं ब्राह्मणानां स्थानम् । तत्र यज्ञदेवो महेभ्यः सूत्रकण्ठः । तत्सूनुः स्वयंभु- 18
देवः । स च यज्ञदेवः कालक्रमेण परलोकमियाय । तत्रास्तमिते द्विजपतौ सर्वमपि वसुजालं विलिल्ये ।
पूर्वकर्मपरिणामेन दिनयोग्यमप्यस्य नास्त्यशनम् । तत एवं क्षीणे विभवे न भवन्ति लोकयात्राः, विसं-
21 वदन्त्यतिथिसत्काराः, बभूवुः शिथिला बन्धुक्रियाः, गलहस्तितानि दानानि । 21

गुरूणां बान्धवानां च महिमाभाजनं जनः । तावदेव प्रजायेत मन्दिरे यावदिन्दिरा ॥ १०४
पुरः स्थिताः समुत्तुङ्गा अपि लक्ष्मीवतां नराः । भजन्ति न दृगातिथ्यं दारिद्र्याञ्जनभाजिनः ॥ १०५
24 मानवानां भवेदान्ध्यं बाधिर्यं च श्रिया सह । अतो दीनं न पश्यन्ति न शृण्वन्ति च तद्वचः ॥ १०६ 24

एतत्परिज्ञाय जनन्या स्वयंभुदेवो भणितः ।

'सर्वो ऽपि शोभते लक्ष्म्या वत्स वत्सलमानस । तया विना भवानत्र जीवन्नपि मृतायते ॥ १०७

27 § ४१ ) स पिता तव पुण्यवानस्तमितो ऽतः कुटुम्बपोषणं त्वदायत्तमेव' इति श्रुत्वा स्वयंभुदेवो 27
मातुश्चरणनमस्करणपूर्वं रचिताञ्जलिः प्रोवाच । 'जननि, खेदपरं मनो न विधेयम्, अहं बहुभिरपि
दिनैरनुपार्जितार्थो गृहं न विशामि' इत्युक्त्वा मन्दिरतो निःसृत्य विप्रसूनुर्ग्रामाकरनगरखेटाकुलां
30 विपुलां विलोकयन् सर्वैरप्युपायैरर्थमन्वेषयन् चम्पापुरीमवाप । तत्र चास्तंगते दिनपतौ स्वयंभुदेवः 30
पुर्यन्तःप्रवेशमलभमानो जीर्णोद्याने प्रविश्य कया रीत्या विभावरीनिर्गमनोपायं करोमीति विचिन्तयन्
तमालपादपमारुह्य व्यचिन्तयदिति 'धिग् जन्मेदं येन ममैतावतां दिनानां मध्ये सर्वत्र परिभ्रमतः करे
33 वराटिकापि न चटिता । कथं गृहं प्रविशामि' इति चिन्तयन्नस्ति । ततस्तमालपादपस्याधो जनद्वयं 33
समागतम् । एकेनोक्तम् । 'एतत्कार्यमस्य तमालस्याधः कार्यम् ।' द्वितीयेनोक्तम् । 'भवत्वेवम् ।' ततो
द्वावपि दशापि दिशो विलोक्य सुन्दरमिति स्थानं प्रोचतुः । स्वयंभुदेवस्तयोर्वचो निशम्य स्थितः ।
36 ततस्ताभ्यां खनित्रेण भुवं खनित्वाभिज्ञानपूर्वकं करण्डकं निक्षिप्य प्रोक्तम् । 36

'अत्र यः को ऽपि भूतो वा पिशाचो वापरो ऽपि वा । अयं न्यासीकृतस्तेन पालनीयो निधिः सदा ॥ १०८

इत्युदित्वा तौ यथास्थानं गतौ विलोक्यामुना चिन्तितम् ।

39 'यत्र येन यदा यच्च यावल्लभ्यं यतो जनात् । तत्र तेन तदा तच्च तावदस्मादवाप्यते ॥ १०९ 39

इति ध्यात्वा स च पादपादवतीर्य करण्डकस्थानि पञ्च रत्नानि निरीक्ष्य रोमाञ्चकवचिताङ्गश्चिन्त-
यामासेति । 'एतानि स्वीकृत्य संप्रति स्ववेश्म प्रति व्रजामि' इति ध्यात्वा गृहीत्वा च स्वयंभुदेवः पथि
42 गच्छन्महाटवीमाप्तवान् । इतश्च दिनकरो ऽप्यस्तरोचिरजनि । 42

4 ) P नमो for ततो. 5 ) P भगवान् for भवान्. 6 ) B °सोमाभ्यां प्राभातिक°. 7 ) P यौवनेन B यौवतेन for युवतीजनेन. 8 ) P om. पुण्डरीकः 19 ) B has a marginal gloss on द्विजपतौ and वसुजाल in this way: अर्थांतरं द्विजपतौ चंद्रेऽस्तमिते सति वसु-किरण जालं विलयं गच्छति ।. 23 ) B समुत्तुंगापि. 26 ) B °मानसः 33 ) P न घटिता. 42 ) B इति दिनकरो°.

1 § ४२ ) सो ऽपि बहुलविटपसंकुले कस्मिन्नपि प्रदेशे ऽनल्पश्यामलदलनिचितं न्यग्रोधमारुह्येति 1
ध्यातवान् । 'अहो, विधिना प्रदत्तं यद्दातव्यम् । ततो ऽधुना गृहं गतो रत्नमेकं विक्रीय सकलकुटुम्ब-
3 बान्धवानां यत्कृत्यं तत्करिष्यामि ।' ततः प्रवृत्ते ऽवतमसे सूचीभेद्ये तत्र विविधवर्णा बहवः पक्षिणः 3
समुच्छ्रिततनवः स्वयंभुदेवाध्यासितमेव वटमाश्रितवन्तः । अथ तत्र समागत्यैकः पक्षी पक्षिसंघात-
मध्यस्थं जराजीर्णाङ्गं पक्षिणमेकं प्रणम्य व्यजिज्ञपदिति । 'तात, त्वयाहं जातस्त्वयाहं संवर्धितस्त-
6 रुणीभूतो नयने ममाद्य सफलीभूते, कर्णावपि कृतार्थौ जातौ, एतत्पक्षियुगलमपि सार्थं जातम् । अद्या- 6
त्मानं गरुत्मतो ऽपि गुरुतरं मन्ये ।' एतदाकर्ण्य जीर्णपक्षिणा भणितम् । 'संप्रति भवानतीवामन्दानन्द-
संदोहमेदुरमना इव लक्ष्यते, [ अतो ] वत्स, भवता भ्रमता किमपि यद्दृष्टं श्रुतमनुभूतं वा तत्सर्वमपि
9 निवेदय ।' तेनोक्तम् । 'तात शृणु, अद्याहं भवत्समीपतः समुत्पत्य गगनतलं किंचिदाहारमन्वेषयन् 9
यावद्गगनतले भ्रमामि तावदहं हस्तिनापुरे प्राकारत्रितयमध्यगतं मनुष्यलोकं विलोक्य 'अहो, किं पुनरे-
तत्पश्यामि' इति ध्यात्वा द्वितीयप्राकारान्तरे पक्षिगणमध्ये गत्वाहमुपविष्टः सन् शोणाशोकपादपस्याधः
12 सिंहासनासीनं भगवन्तं कमपि दिव्यज्ञानिनं ज्ञात्वा व्यचिन्तयमिति । 'अहो, दृष्टं यद्द्रष्टव्यं मया त्रिभुव- 12
नाश्चर्यकारि । ततस्तात, तेन भगवता सकलसंसारस्वरूपं प्ररूपितम् । तथा हि, 'प्रदर्शितः प्राणिगणविचारः ।
विस्तारितः कर्मप्रकृतिविशेषः । विशेषितो बन्धनिर्जराभावः । भावितः संसाराश्रवविकल्पः । विकल्पित
15 उत्पत्तिस्थितिविपत्तिविशेषविस्तरः । प्ररूपितो यथास्थितो मोक्षमार्गः' इति । ततो मया भगवान् पृष्टः । 15
'हे नाथ, अस्मादृशः पक्षिणः प्राप्तवैराग्या अपि तिर्यग्योनित्वात्परायत्ताः किं कुर्वन्तु ।' ततो भगवता
ममाभिप्रायं परिज्ञाय समाख्यातम् । 'हे देवानुप्रिय, भवान् संज्ञी पञ्चेन्द्रियः पर्याप्तस्तिर्यग्योनिरपि
18 सम्यक्त्वं लभते ।' गणधारिणोदितम् । 'के प्राणिनो नरकगामिनः ।' भगवता निवेदितम् । 'ये पञ्चेन्द्रिय- 18
वधकारिणो मांसाहारिणश्च ते सर्वे ऽपि देहिनः श्वभ्रयायिनः । ये च सम्यक्त्वं भजन्ते ते नरकतिर्यग्गति-
द्वारपिधायिनः ।' मयोक्तम् । 'देव, पक्षिणः पञ्चेन्द्रियवधकारिणो मांसाहारिणश्च कथं सम्यक्त्वधारिणः,
21 अस्माकं जीवितं पापपरमेव । एवं व्यवस्थिते मया किं कर्तव्यम् ।' ततो भगवान्निजगाद । 21

'किल यः स्नेहं छित्त्वा नियन्त्र्य सौधं तथा च करणगणम् ।
विधिना मुञ्चति देहं स प्राणी सुगतिमुपयाति ॥ ११०

24 पक्षिणो ऽपि शुद्धमनसः सम्यक्त्वं दधति' इति निवेद्य समुत्थाय भगवानन्यत्र विजहार । अहमपि 24
तं भगवदुपदेशं निशम्य जातवैराग्यो ऽकृताहारस्तात, तव समीपमुपागतः । अधुना प्रसादं विधाय
मां प्रेषय । ममापराधं सर्वमपि क्षमस्वेति यथा स्वार्थपरो भवामि ।' ततः स पक्षी स्नेहनिगडान् छित्त्वा
27 स्पर्शनेन्द्रियादितुरगवृन्दमिदं नियन्त्र्य च मातरं ज्येष्ठं कनिष्ठं च भ्रातरं तथा महतीं लघ्वीं स्वसारं 27
भार्यां शिशून् मित्राणि चापृच्छ्य गगनतलमुत्पपात ।

§ ४३ ) इतश्च विभातायां विभावर्यां सर्वो ऽपि पक्षिगणो वटपादपतः प्रययौ । तं विहङ्गगणं
30 समुत्पतितं निरीक्ष्य स्वयंभुदेवो ऽपि विस्मयस्मेरमनाश्चिन्तितुं प्रवृत्तः । 'अहो, महदाश्चर्यं यदत्र वने 30
पक्षिणो ऽपि मनुष्यभाषाभाषिणः सद्धर्मपरायणाश्चेति । अवश्यमेते दिव्यपक्षिणः । स च पक्षी कुटुम्बं
परित्यज्यात्मनो हितं धर्ममेवाङ्गीचकार । यदि पक्षिणो ऽपि धर्ममार्गमनुसरन्ति तदहं परस्य रत्नानि
33 गृहीत्वा कुटुम्बपोषणं कथं करोमि । ततः सांप्रतमेतदेव मे करणीयं यस्य समीपे ऽमुना धर्मः श्रुतस्तमेव 33
गत्वा पृच्छामि । 'यद्भगवन् के पक्षिणः, किं वा तैर्मन्त्रितम्' इत्यापृच्छ्य यत्कृत्यं तत्पश्चादाचरिष्यामि ।
यदमुना पक्षिणा कृतम्' इति ध्यात्वा वटपादपादवतीर्य हस्तिनापुरमिदं समागतः । भो गौतम, मम
36 समवसरणे सैष प्रविष्टः, पृष्टश्चाहमेतेन, स पक्षी वने कः, कथितो मया यथैष दिव्यपक्षी । इदं निशम्य 36
समुत्पन्नवैराग्यो निर्गतः । ततो निर्विण्णकामभोगः संजातविवेको विगलितचारित्रावरणीयकर्मा तयो
रत्नानि प्रत्यर्प्य ममैव सकाशमधुना समागच्छन्नस्ति' इति । यावदिदं स भगवान् महावीरो निवेदयति
39 गौतमादीनां पुरस्तावत्प्राप्तः स्वयंभुदेवः प्रदक्षिणीकृत्य भगवन्तं प्रोवाच च । 'देव, प्रबुद्धो ऽहं वने पक्षि- 39
वचनमाकर्ण्य ततो मम दीक्षां देहि ।' ततो भगवता यथाविधि स्वयंभुदेवो दीक्षितः । चण्डसोमजीवः स्वयं-
भुदेवः पूर्वभवसङ्केतितदेवेन पक्षिप्रयोगेण प्रतिबोधितः । ततो भगवान् सर्वज्ञः श्रीमहावीरदेवो मगध-
42 देशमण्डले श्रियोगृहं राजगृहं जगाम । तत्र रचिते सर्वदेवैः समवसरणे श्रीश्रेणिकः क्षोणिनायकः सपरि- 42

1 > B पादप for विटप. 3 > B has a marginal gloss on सूचीभेद्ये thus: लक्षणशब्दोयं महानिबिडे. 8 > P B om. [ अतो ]. 19 > B adds च after ये. 24 > adds भगवतोक्तं before पक्षिणोऽपि. 30 > P मद्वने B यद्वने for यदत्र वने. 41 > P संकेतिदेवेन.

1 वारः परया भक्त्या भगवन्तं नत्वा यथास्थानसमासीनः सादरं प्रपच्छ । भगवन्, श्रुतज्ञानं किम् ।' 1

§ ४४ ) ततो भगवता श्रुतज्ञानं साङ्गोपाङ्गं समादिष्टं विशिष्टम् । तथा च ।

3 अ-इ-क-च-ट-त-प-य-श-एते शोभनवर्णा विज्ञेयाः । 3
आ-ई-ख-छ-ठ-थ-फ-र-ष-अशोभनास्ते पुनर्भणिताः ॥ १११
ए-उ-ग-ज-ड-द-ब-ल-स-सुभगाः संभवन्ति सर्वकार्येषु ।
6 ऐ-औ-थ-झ-ढ-ध-व-ह-न सुन्दराः कचन कार्येषु ॥ ११२ 6
ओ-औ-ङ-ञ-ण-न-म-अं-अः मिश्रस्वरूपा भवन्ति कार्येषु ।
संप्रति फलमपि वक्ष्ये वर्णानामीदृशां सर्वम् ॥ ११३
9 शोभनमशोभनं वा सुखदुःखं संधिविग्रहे चैव । 9
एति च नैति च लाभालाभौ न जयस्तथा च जयः ॥ ११४
भवति च न भवति कार्यं क्षेमं न क्षेममस्ति नैवास्ति ।
12 संपत्तिश्च विपत्तिर्वृष्टिश्च जीवितं मृत्युः ॥ ११५ 12
प्रथमवचने ऽपि प्रथमाः शुभवर्णाः संभवेयुरथ बहवः ।
जानीहि कार्यसिद्धिं सिध्यति कार्यं न चाप्यशुभैः ॥ ११६
15 अथवा पृच्छावचनं प्रथमं लात्वा च तन्निरीक्षेत । 15
विधिवचने भवति शुभं न शुभं प्रतिषेधवाक्ये च ॥ ११७
अथवा फलकुसुमाक्षतपत्रं रूपकमन्यच्च पुरुषरूपं च ।
18 अष्टविधभागलब्धं तेन फलं विद्धि चैतद्धि ॥ ११८ 18

ध्वजे तु सफलं सर्वं धूम उद्वेगकारकः । राज्यं श्रीविजयं सिंहे स्वल्पलाभश्च मण्डले ॥ ११९
वृषे तुष्टिश्च पुष्टिश्च खरे तु गमनं कलिः । पूजा गजे भवत्येव ध्वांक्षे नित्यं परिभ्रमः ॥ १२०

21 अत्रान्तरे श्रेणिकभूपस्य तनयो ऽष्टवर्षदेशीयो महारथकुमारः स्वामिनमानम्य व्यजिज्ञपत् । 'अद्य 21
भगवन्, मया स्वप्नान्तः कालायसं सुवर्णमिश्रितं दृष्टम् । ततो ज्वलनज्वालावलीपरितप्तं तद्गिरिसारं परि-
क्षीणं, तच्च सुवर्णमेव केवलं स्थितम्, तस्य को ऽयं फलविशेषः ।' भगवताज्ञप्तम् । 'भद्र, शोभनः स्वप्न
24 एषः, सम्यक्त्वचारित्रकेवलज्ञानसमृद्धिं प्रान्ते शाश्वतसुखसंगमं च निवेदयति । शिलासारसदृशं कर्म । 24
जीवस्तु कनकसमानः । तत्र ध्यानानलेन तद्दग्ध्वा त्वयात्मा निर्मलीकृतः । अन्यच्च चरमदेहः संजा-
तस्त्वमसि भद्र, नृपगेहे कुवलयमालाजीवो देवः स्वर्गतश्च्युत्वा । सर्वमपि तस्य कथितं मायादित्या-
27 दिदेवपर्यन्तम् । ते सर्वे प्रव्रजिताः, पश्यैतान् सुकृतिनस्त्वम् ।' 27

§ ४५ ) तदेतदाकर्ण्य महारथकुमारेण भणितम् । 'भगवन्, यद्येवं तावद्विषमश्चित्ततुरङ्गमः, किं
विलम्बसे, मम दीक्षां ददस्व' इति भणिते तेन भगवता श्रीवर्धमानेन यथाविधि महारथकुमारो
30 दीक्षितः ।' इति ते पञ्चापि जना मिलिताः परस्परं जानते, यथा 'कृतपूर्वसङ्केताः सम्यक्त्वलाभे वयम्' 30
इति । एवं तेषां भगवता श्रीवर्धमानजिनस्वामिना साकं विचरतां बहूनि वर्षाणि व्यतीयुः । कथितं च
श्रीजिनेश्वरेण मणिरथकुमारादिसाधूनाम्, यथा 'स्तोकमायुर्भवताम्' इति परिज्ञाय ते पञ्चापि यतयो
33 ऽनशनं प्रपद्य रागद्वेषबन्धनद्वयरहिताः शल्यत्रयदण्डत्रितयविवर्जिताः क्षीणकषायचतुष्काः चतुःसंज्ञा- 33
रहिताः विकथाचतुष्टयपरित्यक्ताः चतुर्विधधर्मकर्मपरायणाः पञ्चसु व्रतेषु समुद्युक्ताः पञ्चसु विषया-
भिलाषेषु द्वेषिणः पञ्चप्रकारस्वाध्यायप्रसक्तचेतसः पञ्चसमितीर्बिभ्राणाः पञ्चेन्द्रियशत्रूणां जेतारः षड्-
36 जीवनिकायपरिपालकाः सप्तभयस्थानप्रमुक्ताः अष्टविधमदस्थानविवर्जिता नवसु ब्रह्मगुप्तिषु रताः दश- 36
विधसाधुधर्मप्रतिपालनोद्यता एकादशाङ्गधारिणो द्वादशविधं दुस्तपं तपस्तप्यमानाः प्रतिमाद्वादशकबद्ध-
रुचयो दुस्सहपरिषहसहिष्णवः स्वदेहे ऽपि निरीहा आमूलतो ऽपि श्रामण्यं निष्कलङ्कं प्रतिपालयन्तः
39 पर्यन्तसमये समाधिनाराधनां व्यधुरिति । 39

§ ४६ ) तथा हि ज्ञानाचारो ऽष्टधा कालविनयादिकः, दर्शनाचारो ऽष्टधा निःशङ्कितादिकस्तत्र यः
को ऽप्यतिचारः सर्वथैव तं त्यजामः । एकेन्द्रियाणां भूम्यप्तेजोवायुवनस्पत्यादीनां द्वीन्द्रियाणां कृमि-

1 ) P परभक्त्या B परमभक्त्या for परया भक्त्या. 15 ) C लात्वा च. 25 ) P अन्यचरमदेहः. 37 ) B दशविधधर्म°, 38 ) P आमूरतोपि, P निःकलं प्रति.

शङ्खशुक्तिगण्डूपदजलौकप्रभृतीनां त्रीन्द्रियाणां यूकामत्कुणमत्कोटिलिक्षादीनां चतुरिन्द्रियाणां पतङ्गमक्षिकाभृङ्गदंशादीनां पञ्चेन्द्रियाणां जलचरस्थलचरखचरमानवादीनामस्माभिर्या हिंसा कृता सूक्ष्मा बादरा वा मोहतो लोभतो वा तां व्युत्सृजामः। हास्येन भयेन क्रोधेन लोभेन वा यत्किमपि वृथा प्रोक्तं तत्सर्वमपि निन्दामः प्रायश्चित्तं च चरामः। यदल्पं घनमपि क्वापि परस्य द्रव्यमदत्तं गृहीतं रागतो द्वेषतो वा तत्सर्वमपि त्यजामः। तैरश्च्यं मानुषं दिव्यं मैथुनं यत्पुरास्माभिः कृतं तत्त्रिविधं त्रिविधेनापि परित्यजामः। यस्तु धनधान्यपश्वादीनां परिग्रहो लोभतः कृतस्तं परिहरामः। पुत्रकलत्रमित्रबान्धवधनधान्यगृहादिष्वन्येष्वपि यन्ममत्वं कृतं तत्सर्वमपि निन्दामः। इन्द्रियपक्षे पराभूतैरस्माभिश्चतुर्विधो ऽप्याहारो रात्रौ भुक्तस्तं त्रिधापि निन्दामः। क्रोधमानमायालोभरागद्वेषकलहपैशून्यपरपरिवादाभ्याख्यानादिभिश्चारित्रविषये यद्दुष्टमाचरितं तत्त्रिविधेन व्युत्सृजामः। षड्विधबाह्याभ्यन्तरे तपसि यः को ऽप्यतिचारस्तं निन्दामः। वन्दनकप्रतिक्रमणकायोत्सर्गनमस्कारपरिवर्तनादिषु वीर्याचारे यद्वीर्यं गोपितं तत्त्रिधा निन्दामः। यत्कस्यापि किंचन वस्त्वपहृतं प्रहारः प्रदत्तो वा कर्कशं वचो जल्पितं चापराधश्च कृतो भवति सो ऽखिलो ऽप्यस्माकं क्षाम्यतु। यश्च मित्रममित्रं वा स्वजनो ऽप्यरिजनो ऽपि च स सर्वो ऽप्यस्माकं क्षाम्यतु तेषु सर्वेष्वपि समा एव। तिर्यक्त्वे तिर्यञ्चो नारकत्वे नारकाः स्वर्गित्वे स्वर्गिणो मानुषत्वे मानुषा ये ऽस्माभिर्दुःखे स्थापितास्ते सर्वे ऽपि क्षाम्यन्तु वयमपि तान् क्षामयामः। तेषु सर्वेष्वस्माकं मैत्री भवतु। जीवितं यौवनं लक्ष्मीर्लावण्यं प्रियसंगमा एतत्सर्वमपि वात्या नर्तितसमुद्रकल्लोलवल्लोलं व्याधिजन्मजरामृत्युग्रस्तानां देहिनां जिनप्रणीतं धर्मं विना न को ऽप्यपरः शरणम्। एते सर्वे ऽपि जीवाः स्वजनाः परजनाश्च जातास्तेषु मनागपि वयं सुधियः कथं प्रतिबन्धं विदध्मः। एक एव जन्तुरुत्पद्यते, एक एव विपत्तिमाप्नोति, एक एव सुखान्यनुभवति, एक एव दुःखान्यपि। अन्यच्छरीरमपरं धनधान्यादिकमन्ये बान्धवो ऽन्यो जीवस्तेषु कथं वृथा मुह्यामः। रसासृग्मांसमेदोऽस्थिमज्जाशुक्रयकृच्छकृतादिभिः पूरिते ऽशुचिनिलये वपुषि मूर्च्छां न कुर्मः। इदं देहं नित्यशः पालितं लालितमप्यवक्रयगृहीतगृहमिवास्थिरमचिरेणापि मोक्तव्यमेवेति। धीरा अपि कातरा अपि खलु देहिनो मृत्युमाप्नुवन्ति। वयं तथा मरिष्यामो यथा न पुनरस्माकं मृत्युकदर्थना। सांप्रतमर्हन्तः सिद्धाः साधवः केवलिभाषितो धर्मः शरणमस्माकमिति। जिनोपदिष्टः कृपामयो धर्मो माता धर्माचार्यस्तातः सोदरः साधर्मिको बन्धुश्च। अन्यत्सर्वमपीन्द्रजालमिव। भरतैरावतमहाविदेहेषु श्रीवृषभनाथादीन् जिनान् सिद्धानाचार्यानुपाध्यायान् साधून् नमामः। सावद्ययोगमुपधिं तथा बाह्यमाभ्यन्तरं यावज्जीवं त्रिविधं त्रिविधेन व्युत्सृजामः। यावज्जीवं चतुर्विधाहारमप्युच्छ्वासे चरमे च देहमपि त्यजामः। दुष्कर्मगर्हणा १ जन्तुजातक्षामणा २ तथा भावना ३ चतुःशरणं ४ नमस्कारः ५ तथानशनं च ६ एवमाराधना षोढा विहिता। ततः

> दग्ध्वा ध्यानधनंजयेन निखिलं कर्मेन्धनौघं क्षणा-
> दुन्मीलत्कलकेवलोदयपरिज्ञातत्रिलोकीतलाः।
> ते पञ्चापि मुनीश्वराः समभवन् व्युत्सृष्टदेहास्ततः।
> श्रीमन्मुक्तिनितम्बिनीस्तनतटालङ्कारहारश्रियः ॥ १२१

इत्याचार्यश्रीपरमानन्दसूरिशिष्यश्रीरत्नप्रभसूरिविरचिते श्रीकुवलयमालाकथासंक्षेपे श्रीप्रद्युम्नसूरिशोधिते कुवलयचन्द्रपितृसंगमराज्यनिवेशपृथ्वीसारकुमारसमुत्पत्तिव्रतग्रहणप्रभृतिकश्चतुर्थः प्रस्तावः ॥ ४ ॥

## ॥ इति कुवलयमालाकथा समाप्ता ॥

---

2 ) P om. खचर. 7 ) B om. इन्द्रियपक्षे etc. to निन्दामः. 8 ) P C द्वेषकालोपशून्य. 11 ) B च। अपकारश्च. 19 ) P यकृतसकृतादिभिः. 21 ) P मुक्तव्यमिति B मोक्तव्यमिति. 22 ) P B शरणमिति. 24 ) P साधून्ननाम. 29 ) P उन्मीलत्केवलोदय. 31 ) °हारः श्रिय. 33 ) P कुवलयचंद्राराज्यनिवेश. 35 ) P B omit इति, P B श्रीमत्कुवलय°, P B समाप्ताः ॥ छ ॥. P at the close एवं ग्रंथसंख्या ॥ ३९९४ ॥ शुभं भवतु ॥ छ ॥ संवत् १४८९ वर्षे आषाढ शुदि १४ चतुर्दश्यां बुधे कुवलयमाला कथा लिखिता ॥ छ ॥ चिरं नंदतात्। B at the close एवं ग्रंथाग्रसंख्या ३८०४ ॥ सं० १४४५ वर्षे मार्गसिर शुदि ६ गुरुदिने पुस्तिका लिखिता ॥ छ ॥ यादृशं पुस्तके दृष्टं तादृशं लिखितं मया। यदि शुद्धमशुद्धं वा मम दोषो न दीयते। १ भग्नपृष्टिकटिग्रीवा अधोदृष्टिरधोमुखं [।] कष्टेन लिखितं शास्त्रं यत्नेन परिपालयेत्। २ शुभं भवतु मंगलमस्तु लेखकपाठकयोः ॥ छ ॥ उदकानलचोरेभ्यो मूखकेभ्यो [भ्य] स्तथैव च। परहस्तगतां रक्ष एवं वदति पुस्तिकाः [का] ॥ छ ॥ श्रीः ॥ श्रीः ॥ श्रीः ॥ श्रीः ॥ छ ॥ C at the close ॥ एवं ग्रन्थसङ्ख्या ३८९४ ॥

# कुवलयमाला - पज्ज - सूई

References are to pages and lines.

ई



उ

## ख

### ग



### घ



### च

### थ



### द

कु. मा. १५

# NOTES

**Page 1**—*lines: 2-18)* To begin with Ṛṣabha, the first Tīrthakara is saluted. Then is saluted Mahāvīra with special reference to the attempts made by god Saṃgama to disturb his meditation. For more details about Saṃgama, see the *Mahāvīra-cariya* of Guṇacandra (Surat 1929), Prastāva VII, pp. 226 ff. The *Jaṃbucariya* of Guṇapāla (*c.* 11th century of the Vikrama era) is influenced by the *Kuvalayamālā*; and it refers to the episode of Saṃgama in the opening Maṅgala (Bombay 1959). Lastly, Tīrtha or Dharma is saluted.

**Page 2**—*lines: 5)* Compare *Uttarādhyayana* III. 7—कम्माणं तु पहाणाए आणुपुव्वी कयाइ उ । जीवा सोहिमणुप्पत्ता आययंति मणुस्सयं ॥ *8)* Thinking that it is a Gīti, I tried to adjust some vowel values. As Prof. H. D. VELANKAR points out to me, it is a Gītikā with its 3rd and 7th *caturmātrās* having in fact five *mātrās*. So we may read संसारए, पावएहिं जम्मयं and पुण्णएहिं. *20)* The reference to Kāmaśāstrakāra has perhaps no specific work in view. *22)* अट्टट्ठ, a kind of silver necklace. *27)* Note काउं जे. *28)* The verse has an Apabhraṁśa ring; its structure is that of a गीति 12+18/12+18. But with a little adjustment, अत्थो, अणत्थओ, विरसओ, सोक्खओ and पयत्तएण it will be a गीतिका like that in line 8 above. *29)* Some deities (रुंद = रुद्द ? ) and teachers (कपिल, कणाद) are mentioned here.

**Page 3**—*lines: 8)* The term भावना is used in quite a wider sense than the one connoted by अनुप्रेक्षा. Obviously, the study of a work like this comes under भावना. *16)* This verse is included in the वज्जालग्गं, 748, with the various readings: दोसं चिय, पसंसह (which agrees with that of P) and उवही. *18)* Here are referred to पालित्तय = पादलिप्त, सालाहण = शातवाहन, popularly known as हाल, and छप्पण्णय, the exact Sanskrit equivalent of which is far from definite. *19-20)* These two lines supply some details about पादलिप्त whom उद्द्योतन appears to put as a contemporary of Hāla. Some words in the first line are to be construed both with पालित्तएण and हारेण. He is the author of the तरंगवई, which is compared with गंगा; and some words with double meaning are to be suitably construed with both. The original तरंगवई is lost, but we possess a Prākrit digest तरंगलोला or संखित्त–तरंगवई–कहा by a pupil (Jasa by name) of Nemicandra (श्रीनेमिविज्ञानग्रन्थमाला ९), Surat 1944. पादलिप्त and his तरंगवई have enjoyed great reputation, and are referred to by various authors: It is already referred to in the अनुयोगद्वार for mentioning its author: तरंगवइक्कारे (Sūtra 130). Jinabhadra in his विशेषावश्यकभाष्य mentions तरंगवई thus: जह वा निद्दिट्ठवसा वासवदत्ता-तरंगवइयाइं । तह निद्देसगवसओ मणुरक्खवाउ त्ति ॥ १५०८ ॥. The तरंगवई is likewise referred to in the निशीथचूर्णी of जिनदास (*c.* 598 Śaka 676 A.D.). In his दशवैकालिकचूर्णी, he refers to तरंगवई thus: तत्थ लोइएसु जहा भारहरामायणादिसु वेदिगेसु जन्नकिरियादीसु सामइगेसु तरंगवइगाइसु धम्मत्थकामसहिताओ कहाओ कहिज्जंति ॥. धनपाल (*c.* 10th century A.D.) speaks about तरङ्गवती thus in his तिलकमञ्जरी (Bombay 1903)—प्रसन्नगम्भीरपथा रथाङ्ग-मिथुनाश्रया । पुण्या पुनाति गङ्गेव गां तरङ्गवती कथा ॥; some of the phrases remind us of the description by उद्द्योतन. लक्ष्मणगणि (*c.* 1142 A.D.) in his सुपासनाहचरिय says:—को न जणो हरिसिज्जइ तरंगवईवइयरं सुणेऊण । इयरे पबंधसिंधु वि पाविया जीए महुरत्तं ॥. Further Candraprabha in his *Vāsupūjyacarita* says thus: गंग व्व तरंगवई तेहिं कहा निम्मिया पवित्तपया । ते सिद्धसेवियपए पालित्तयसूरिणो वंदे ॥ ९ ॥. Then the प्रभावकचरित of प्रभाचन्द्र quotes an old gāthā: सीसं कह वि न फुट्टं जमस्स पालित्तयं हरंतस्स । जस्स मुहनिज्झराओ तरंगलोला नई वूढा ॥. For the traditional biography of पादलिप्त, the प्रभावकचरित्र of प्रभाचन्द्र and प्रबंधकोश of राजशेखर may be consulted. See also WINTERNITZ: HIL, II, p. 522. *21)* Better वोच्चिकल्ले, full of dance, for चोक्किकल्ले. Or are we to read बोल्लिक्के? Note the reference to हलिय. Bāṇa also confirms that Hāla's selection was based on the poetry of village folk. A poet Hālika is quoted in Hāla's Kośa (No. 116). *22)* This line has to go with the previous one because of the pronoun जस्स. The sequence (पादलिप्त, हाल and छप्पण्णय) may suggest that this might be a reference to the कोश of छप्पण्णय; but further छप्पण्णय is specifically mentioned below in line 25. *23)* Here are referred to Guṇāḍhya and his *Vaḍḍakahā*( = *Bṛhatkathā*). For details about them see M. Winternitz: HIL. III, 1922 (German), pp. 312-20; A. B. KEITH: *A Hist. of Sanskrit Lit.* 1928, pp. 266-81; and A. N. UPADHYE, Paiśācī Language and Literature, A.B.O. R.I. Vol. XXI, parts I-II, Poona 1940. According to Ājaḍa (Āsaḍa), the commentator on the सरस्वतीकण्ठाभरण of भोज, the Paiśācī quotation given by हेमचन्द्र in his Prākrit grammar (iv. 326), पनमथ etc., is the आदिनमस्कार of the बृहत्कथा. This information is interesting though it cannot be verified in the absence of the original *Bṛhatkathā* in Paiśācī (भारतीयविद्या III. i, pp. 228-30, Bombay

1945). *24)* Here भारत and रामायण of व्यास and वाल्मीक are remembered, see M. WINTERNITZ: HIL, I. *25)* The term छप्पण्णय occurs thrice in this work, here, in line 18 above and at p. 177, line 2. On this topic see my detailed paper '*Chhappannaya-gāhāo*' in the *Journal* of the Oriental Institute, Baroda, Vol. XI, No. 4, pp. 385-402. *26)* Here Bāṇa and his *Kādambarī* are mentioned. *27)* Here is a reference to Vimala, the author of पउमचरिय (Bhavanagar 1914; Varanasi 1962) which is विमलांक, and his प्राकृत language is called *sa-rasa* like nectar. The metrical forms from it are analysed by Dr. C. SHARMA in his paper on the metres of the Rāmakāvyas published in the University of Rajasthan Studies (Sanskrit and Hindi), July 1967. *28)* Here is a reference to the royal saint Devagupta, from the family of Guptas; possibly he is the same as the one mentioned at p. 282, line 8, and styled Mahākavi, possibly the author of 'Supurisacariya', not discovered so far. *29)* In this verse *J* reads हरिवरिसं and P reads हरिवंसं. Earlier scholars had no reading हरिवरिसं before them; so this was taken to be a reference to the हरिवंश of विमल. I would not call this impossible, because either way the verse presents some difficulties of interpretation. But J, the older Ms., clearly gives the reading हरिवरिसं which cannot be ignored. The repetition of the term हरिवंस presents great difficulty; and the translation of this verse given by the late lamented Pt. PREMI (जैनसाहित्य और इतिहास, 2nd ed., Bombay 1956, pp. 113-14) and followed by some others (Pt. A. M. BHOJAK, चउप्पन्नमहापुरिसचरियं, Ahmedabad 1961, प्रस्तावना, p. 46) is sufficiently elusive, if not defective. I had discussed this verse with Pt. PREMIJI, and in the light of an authentic reading of a genuinely old Ms., he was in a mood to reconsider his earlier interpretation. I would present the rendering of the constituted text thus: 'I greet respectfully Harivarṣa, though indeed (well-) respected (वन्द्यमपि खलु), who is loved by thousands of wise men, who is the first author of the हरिवंशोत्पत्ति and who is in fact of spotless expression'. Some of my friends who have discussed this verse lately with me have to suggest some improvement in readings also. They say that पिहु = पृथु, great, or reading पहु ( = प्रभु) for पिहु might be an adjective of हरिवर्ष. The second alternative involves the change of the available reading. In the Gujarati Translation of श्री हेमसागर-सूरि, वंदिय = बन्दिक is taken as the name of an author. *30)* Here is a reference to a धर्मकथा, सुलोचना by name. The verse itself does not mention the name of the author, but has a pronoun जेण which, usually, should go with the author mentioned in the earlier verse. In that case हरिवर्ष will have to be taken as the author of सुलोचना(-कथा), which so far, has not come to light. Jinasena completed his *Harivaṁśa* in 783 A.D. and he says therein thus: महासेनस्य मधुरा शीलालङ्कार-धारिणी । कथा न वर्णिता केन वनितेव सुलोचना ॥ I. 33. Further Dhavala, in his हरिवंश (*circa* 11th century A.D.) composed in the अपभ्रंश dialect, specifically refers to the सुलोयणु of महासेन thus: मुणि महसेणु सुलोयणु जेण पउमचरिउ मुणिरविसेणेण । जिणसेणेण हरिवंसु पवित्तु जडिलमुणिणा वरंगचरित्तु ॥ (HIRALAL: *Catalogue* of Sk. and Pk. Mss. in C.P. and Berar, p. 764). Whether both उद्द्योतन and धवल are referring to the same work is not beyond doubt. We should wait for more facts in this context. *31)* Here are referred to प्रभञ्जन, a royal saint, and his यशोधर-चरित. Among the यशोधर-चरित texts, so far listed, this seems to be the earliest (P. L. VAIDYA: जसहरचरिउ, Karanja 1931, Intro. pp. 24 f.). As noted by Dr. VAIDYA, वासवसेन (earlier than 1308 A.D.), the author of the यशोधर-चरित in Sanskrit, also refers to प्रभञ्जन.

**Page 4**—*lines: 1)* Here are referred to the वराङ्गचरित (which styles itself as धर्मकथा) and पद्मचरित of जडिय( = जडिल), i.e., जटिल and रविषेण respectiveiy. For details about them, see the वराङ्गचरित, Bombay 1938 and पद्मचरित (*c.* 776 A.D.), 1-3, Bombay 1928, both published in the मा. दि. जैन ग्रन्थमाला Nos. 40 and 29-31. A Hindi translation of the former has appeared from Varanasi, and a new ed. of the latter, 1-2, along with Hindi translation is published lately by the भारतीय ज्ञानपीठ, Varanasi 1958-59. *2)* समरमियंका कहा( = समरमितार्का कथा) is only a synonym of समराइच्चकहा. On this equation see my paper in the Proc. and Trans. of the A.-I.O.C., XIII, pp. 381-2, Nagpur 1946 and with revision, *Bhāratīya Vidyā*, VII, pp. 23-4, Bombay 1947. Its author is Haribhadra whose favourite अङ्क is the term विरह duly mentioned here by श्लेष. उद्द्योतन calls him a गुरु from whom he had studied a number of शास्त्रs. Render समय or स्वमत-शत (or स्वक)-शास्त्रगुरोः. *3)* Is it that the author has in mind some poets who have for their अङ्क terms like अभिमान, पराक्रम and साहस? *5)* Of the five कथाs enumerated the first two appear to be types of कथा, and the next two, perhaps the last also, possibly refer to the mode of narration or narrating. The संकीर्णकथा is a mixed type which inherits the characteristics of all these; it is

